# सारदातिलकम् ।

तन्त्रम् ।

श्रीलक्ष्मणाचार्य्येण सङ्कलितम् ।

पण्डितकुलपतिना बि, ए उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतं प्रकाशितञ्च ।

द्वितीयसंस्करणम् ।

कलिकातानगरे

सरस्वतीयन्त्रे मुद्रितम् ।

इं १८८२



# सारदातिलकम् ।

## प्रथमः पटलः ।

नित्यानन्दवपुर्निरन्तरगलत्पञ्चाशदर्णैः क्रमात्
व्याप्तं येन चराचरात्मकमिदं शब्दार्थरूपं जगत् ।
शब्दब्रह्म यदूचिरे सुकृतिनः चैतन्यमन्तर्गतं
तद्वोऽव्यादनिशं शशाङ्कसदनं वाचामधीशं महः ॥ १ ॥

अन्तःस्मितोल्लसितमिन्दुकलावतंस-
मिन्दीवरोदरसहोदरनेत्रशोभि ।
हेतुस्त्रिलोकविभवस्य नवेन्दुमौले-
रन्तःपुरं दिशतु मङ्गलमादराद्वः ॥ २ ॥

संसारसिन्धोस्तरणैकहेतून् दधे गुरून् मूर्ध्नि शिवस्वरूपान् ।
रजांसि येषां पदपङ्कजानां तीर्थाभिषेकश्रियमावहन्ति ॥ ३ ॥

सारं वक्ष्यामि तन्त्राणां सारदातिलकं शुभम् ।
धर्मार्थकाममोक्षाणां प्राप्तेः प्रथमकारणम् ॥ ४ ॥

शब्दार्थसृष्टिर्मुनिभिश्छन्दोभिर्दैवतैः सह ।
विधिश्च मन्त्रयन्त्राणां तन्त्रेऽस्मिन्नभिधीयते ॥ ५ ॥

निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः ।
निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः ॥ ६ ॥

सच्चिदानन्दविभवात् सकलात् परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादाद्विन्दुसमुद्भवः ॥ ७ ॥

परः शक्तिमयः साक्षात् त्रिधासौ भिद्यते पुनः ।
विन्दुर्नादो वीजमिति तस्य भेदाः समीरिताः ॥ ८ ॥

बिन्दुः शिवात्मकं बीजं शक्तिर्नादस्तयोर्मिथः ।
समवायः समाख्यातः सर्वागमविशारदैः ॥ ९ ॥
रौद्री बिन्दोस्ततो नादाज्ज्येष्ठा बीजादजायत ।
वामा ताभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपा ॥ १० ॥
ते ज्ञानेच्छाक्रियात्मानो वह्नीन्द्वर्कस्वरूपिणः ।
भिद्यमानात् पराद्बिन्दोरव्यक्तात्मा रवोऽभवत् ॥ ११ ॥
शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः ।
शब्दब्रह्मेति शब्दार्थं शब्दमित्यपरे जगुः ॥ १२ ॥
नहि तेषां तयोः सिद्धिर्जड़त्वादुभयोरपि ।
चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतिः ॥ १३ ॥
तत् प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम् ।
वर्णात्मनाविर्भवति गद्यपद्यादिभेदतः ॥ १४ ॥
अथ बिन्द्वात्मनः शम्भोः कालबन्धोः कलात्मनः ।
अजायत जगत्साक्षी सर्वव्यापी सदाशिवः ॥ १५ ॥
सदाशिवाद्भवेदीशः ततो रुद्रसमुद्भवः ।
ततो विष्णुस्ततो ब्रह्मा तेषामेव समुद्भवः ॥ १६ ॥
मूलभूतात्ततोऽव्यक्ताद्विकृतात् परवस्तुनः ।
आसीत् किल महत्तत्त्वं गुणान्तःकरणात्मकम् ॥ १७ ॥
अभूत्तस्मादहङ्कारस्त्रिविधः सृष्टिभेदतः ।
वैकारिकादहङ्काराद्देवा वैकारिका दश ॥ १८ ॥
दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ।
तैजसादिन्द्रियाण्यासंस्तन्मात्राक्रमयोगतः ॥ १९ ॥
भूतादिकादहङ्कारात् पञ्चभूतानि जज्ञिरे ।
शब्दात् पूर्वं वियत् स्पर्शात् वायुरूपाद्धुताशनः ॥ २० ॥
रसादम्भः क्षमा गन्धादिति तेषां समुद्भवः ।
स्वच्छं वियन्मरुत् कृष्णो रक्तोऽग्निर्विशदं पयः ॥ २१ ॥

पीता भूमिः पञ्चभूतान्येकैकाधारतो विदुः ।
शब्दस्पर्शरूपरसगन्धा भूतगुणाः स्मृताः ॥ २२ ॥
वृत्तं दिवस्तत् षड्‌विन्दुलाञ्छितं मातरिश्वनः ।
त्रिकोणं स्वस्तिकोपेतं वह्नेरर्द्धेन्दुसंयुतम् ॥ २३ ॥
अम्भोजमम्भसो भूमेश्चतुरस्रं सवज्रकम् ।
तत्तद्भूतसमाभानि मण्डलानि विदुर्बुधाः ॥ २४ ॥
वर्णाः स्वैरञ्चितान्याहुः स्वस्वनामावृतान्यपि ।
धरादिपञ्चभूतानां निवृत्त्याद्याः कलाः स्मृताः ॥ २५ ॥
निवृत्तिः सप्रतिष्ठा स्याद्विद्या शान्तिरनन्तरा ।
शान्त्यतीतेति ता ज्ञेया नादर्द्देहसमुद्भवाः ॥ २६ ॥
पञ्चभूतात्मकं सर्वं चराचरमिदं जगत् ।
अचरा बहुधा भिन्ना गिरिवृक्षादिभेदतः ॥ २७॥
चरास्तु त्रिविधाः प्रोक्ताः स्वेदाण्डजजरायुजाः ।
स्वेदजाः क्रमिदंशाद्या अण्डजाः पन्नगादयः ॥ २८ ॥
जरायुजा मनुष्याद्यास्तेषु नृणां निगद्यते ।
उद्भवः पुंस्त्रियोर्योगे शुक्राच्छोणितसंयुतात् ॥ २९ ॥
विन्दुरेको विशेद्‌ गर्भमुभयात्मा क्रमादसौ ।
रजोऽधिको भवेन्नारी भवेद्रेतोऽधिकः पुमान् ।
उभयोः समतायान्तु नपुंसकमिति स्मृतम् ॥३०॥
पूर्वकर्मानुरूपेण मोहपाशेन यन्त्रितः ।
कश्चिदात्मा तदा तस्मिन् जीवभावं प्रपद्यते ॥ ३१ ॥
अथ मात्राकृतैरन्नैः पानाद्यैः पोषितः क्रमात् ।
दिनात् पक्षात् ततो मासाद्‌ वर्द्धते तत्त्वदेहवान् ॥ ३२ ॥
दोषैर्दूष्यैः सुखं प्राप्तो व्यक्तिं याति निजेन्द्रियैः ।
वातपित्तकफा दोषा दूष्याः स्युः सप्तधातवः ॥ ३३ ॥
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि तान् विदुः ।

ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वानासिका विदुः ॥ ३४ ।
ज्ञानेन्द्रियार्थाः शब्दाद्याः स्मृताः कर्मेन्द्रियाण्यपि ।
वाक्पाणिपादपायूपस्थसंज्ञान्याहुर्मनीषिणः ॥ ३५ ॥
वचनादानगतयः विसर्गानन्दसंयुताः ।
कर्मेन्द्रियार्थाः संप्रोक्ताः अन्तःकरणमात्मनः ॥ ३६ ॥
मनो बुद्धिरहङ्कारश्चित्तञ्च परिकीर्त्तितम् ।
दशेन्द्रियाणि भूतानि मनसा सह षोड़श ॥ ३७ ॥
विकाराः स्युः प्रकृतयः पञ्चभूतान्यहंकृतिः ।
अव्यक्तं महदित्यष्टौ तन्मात्राश्च महानपि ॥ ३८ ॥
साहङ्कारा विकृतयः सप्त तत्त्वविदो विदुः ।
अग्निसोमात्मको देहो बिन्दुर्यदुभयात्मकः ॥ ३९ ॥
दक्षिणांशः स्मृतः सूर्यो वामभागो निशाकरः ।
नाड़ीर्दश विदुस्तासु मुख्यास्तिस्रः प्रकीर्त्तिताः ॥ ४०
इड़ा वामे तनोर्मध्ये सुषुम्ना पिङ्गला परे ।
मध्या तास्वपि नाड़ी स्यादग्निसोमस्वरूपिणी ॥ ४१
गान्धारी हस्तिजिह्वाख्या सपूषालम्बुषा मता ।
यशस्विनी शङ्खिनी च कुहूः स्युः सप्तनाड़यः ॥ ४२ ॥
नाड्योऽनन्ताः समुत्पन्नाः सुषुम्नापञ्चपर्वसु ।
मूलाधारोद्गतः प्राणस्ताभिर्व्याप्नोति तत्तनुम् ॥ ४३ ॥
वायवोऽत्र दश प्रोक्ता वह्नयश्च दश स्मृताः ।
प्राणाद्या मरुतः पञ्च नागः कूर्मो धनञ्जयः ॥ ४४ ॥
कृकरः स्याद्देवदत्त इति नामभिरीरिताः ।
अग्नयो दोषदूष्येषु संलीना दश देहिनः ॥ ४५ ॥
बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ ।
शोकमोहौ शरीरस्य जरा मृत्युः षडूर्मयः ॥ ४६ ॥
स्नायुस्थिमज्जाशुक्लत्वङ्मांसासृञ्चि च शोणितात् ।

षाट्कौशिकमिति प्रोक्तं सर्वदेहेषु देहिनाम् ॥ ४७ ॥
इत्थंभूतस्तदा गर्भे पूर्वजन्मशुभाशुभम् ।
स्मरंस्तिष्ठति दुःखात्मा क्लिन्नदेहो जरायुणा ॥ ४८ ॥
कालक्रमेण स शिशुर्मातरं क्लेशयत्यपि ।
सम्पिण्डितशरीरोऽथ जायतेऽयमवाङ्मुखः ॥ ४९ ॥
क्षणं तिष्ठति निश्चेष्टो भीत्या रोदितुमिच्छति ।
ततश्चैतन्यरूपा सा सर्वगा विश्वरूपिणी ॥ ५० ॥
शिवसन्निधिमासाद्य नित्यानन्दगुणोदया ।
दिक्कालाद्यनवच्छिन्ना सर्ववेदार्थगा शुभा ॥ ५१ ॥
परापरविभागेन परशक्तिरियं मता ।
योगिनां हृदयाम्भोजे नृत्यन्ती नित्यमञ्जसा ॥ ५२ ॥
आधारे सर्वभूतानां स्फुरन्ती विद्युदाकृतिः ।
शङ्खावर्त्तक्रमाद्देवी सर्वमावृत्य तिष्ठति ॥ ५३ ॥
कुण्डलीभूतसर्पाणामङ्गश्रियमुपेयुषी ।
सर्ववेदमयी देवी सर्वमन्त्रमयी शिवा ॥ ५४ ॥
सर्वतत्त्वमयी साक्षात् सूक्ष्मात् सूक्ष्मतरा विभुः ।
त्रिधामजननी देवी शब्दब्रह्मस्वरूपिणी ॥ ५५ ॥
द्विचत्वारिंशद्वर्णात्मा पञ्चाशद्वर्णरूपिणी ।
गुणिता सर्वगात्रेषु कुण्डली परदेवता ॥ ५६ ॥
विश्वात्मना प्रबुद्धा सा सूते मन्त्रमयं जगत् ।
एकधा गुणिता शक्तिः सर्वविश्वप्रवर्त्तिनी ॥ ५७ ॥
वेदादिबीजं श्रीबीजं शक्तिबीजं मनोभवम् ।
प्रासादं तुम्बुरुं पिण्डं चिन्तारत्नं गणेश्वरम् ॥ ५८ ॥
मार्त्तण्डभैरवं दौर्गं नारसिंहं वराहजम् ।
वासुदेवं हयग्रीवं बीजं श्रीपुरुषोत्तमम् ॥ ५९ ॥
अन्यान्यपि च बीजानि तदोत्पादयति ध्रुवम् ।

यदा भवति सा संविद् त्रिगुणीकृतविग्रहा ॥ ६० ॥
हंसवर्णौ परात्मानौ शब्दार्थौ वासरक्षपौ।
सृजन्त्येषा परा देवी तदा प्रकृतिपूरुषौ ॥ ६१ ॥
यद् यदस्ति जगत्यस्मिन् युग्मं तत्तदजायत।
त्रिगुणीकृतसर्वाङ्गी चिद्रूपा शिवगेहिनी ॥ ६२ ॥
प्रसूते त्रैपुरं मन्त्रं मन्त्रं शक्तिविनायकम्।
पाशाद्यक्षरं मन्त्रं त्रैपुटं चक्रनायकम् ॥ ६३ ॥
गौरं मृत्युञ्जयं शक्तिं शाम्भवं विनतासुतम्।
वागीशीत्र्यक्षरं मन्त्रं नीलकण्ठं विषापहम् ॥ ६४ ॥
यन्त्रं त्रिगुणितं देव्या लोकत्रयगुणत्रयम्।
धामत्रयं सा वेदानां त्रयं वर्णत्रयं शुभा ॥ ६५ ॥
त्रिपुष्करं स्वरान् देवी ब्रह्मादीनां त्रयं त्रयम्।
वह्नेः कालत्रयं शक्तेस्त्रयं वृत्तित्रयं महत् ॥ ६६ ॥
नाड़ीत्रयं त्रिवर्गं सा यद् यदन्यत्त्रिधा मतम्।
चतुःप्रकारा गुणिता शाम्भवी शर्मदायिनी ॥ ६७ ॥
तदानीं पद्मिनीबन्धोः करोति चतुरक्षरम्।
चतुर्वर्णं महादेव्या देवीतत्त्वचतुष्टयम् ॥ ६८ ॥
चतुरः सागरानन्तःकरणानां चतुष्टयम्।
सूक्ष्मादींश्चतुरो भावान् विष्णोर्मूर्त्तिचतुष्टयम् ॥ ६९ ॥
चतुष्टयं गणेशानामात्मादीनां चतुष्टयम्।
तथा पूजादिकं पीठं धर्मादीनां चतुष्टयम् ॥ ७० ॥
दमकादीन् गजान् देवी यद् यदन्यच्चतुष्टयम्।
पञ्चधा गुणिता पत्नी शम्भोः सर्वार्थदायिनी ॥ ७१ ॥
त्रिपुरा पञ्चकूटं सा तस्याः पञ्चाक्षरद्वयम्।
पञ्चरत्नं महादेव्याः सर्वकामफलप्रदम् ॥ ७२ ॥
पञ्चाक्षरं महेशस्य पञ्चवर्णं गरुत्मतः।

सम्मोहनाम् पञ्चबाणान् कामान् पञ्चसुरद्रुमान् ॥ ७३ ॥
पञ्चप्राणादिकान् वायून् पञ्चवर्णान् महेशितुः।
मूर्त्तिः पञ्चकलाः पञ्च पञ्च ब्रह्मा ऋचः क्रमात् ॥ ७४ ॥
सृजत्येषा परा शक्तिर्वेदवेदार्थरूपिणी।
षोढ़ा सा गुणिता देवी धत्ते मन्त्रं षड़क्षरम् ॥ ७५ ॥
षट्कूटं त्रिपुरामन्त्रं गाणपत्यं षड़क्षरम्।
षड़क्षरं हिमरुचेर्नारसिंहं षड़क्षरम् ॥ ७६ ॥
ऋतून् वसन्तमुख्यान् षड़ामोदादीन् गणाधिपान्।
कोषानूर्मीन् रसान् शक्तीर्डाकिन्याद्याः षड़ध्वनः ॥ ७७ ॥
यन्त्रं षड्गुणितं शक्तेः षड़ाधारानजीजनत्।
षड्विधं यज्जगत्यस्मिन् सर्वं तत् परमेश्वरी ॥ ७८ ॥
सप्तधा गुणिता नित्या शङ्कराईशरीरिणी।
सप्तार्णं त्रिपुरामन्त्रं सप्तवर्णं विनायकम् ॥ ७९ ॥
सप्तकं व्याहृतीनां सा सप्तवर्णं सुदर्शनम्।
लोकान् गिरीन् शरान् धातून् मुनीन् सप्तग्रहान् द्वीपान् ॥८०॥
समिधः सर्वसंख्याताः सप्तजिह्वा हविर्भुजः।
अन्यत् सप्तविधं यद् यत्तत्तदस्यामजायत ॥ ८१ ॥
अष्टधा गुणिता शक्तिः शैवमष्टाक्षरद्वयम्।
विष्णोः श्रीकरनामानं मन्त्रमष्टाक्षरं परम् ॥ ८२ ॥
अष्टाक्षरं हरेः शक्तेरष्टाक्षरयुगं परम्।
भानोरष्टाक्षरं दौर्गमष्टार्णं परमात्मनः ॥ ८३ ॥
अष्टार्णं नीलकण्ठस्य वासुदेवात्मकं मनुः।
यन्त्रं कामार्गलं दिव्यं देवीयन्त्रं घटार्गलम् ॥ ८४ ॥
गन्धाष्टकं शुभं देवी देवानां हृदयङ्गमम्।
ब्राह्म्याद्या भैरवान् सर्पान्मूर्त्तीरासां वसूनपि ॥ ८५ ॥
अष्टपीठं महादेव्या अष्टाष्टकसमन्वितम्।

अष्टौ ताः प्रकृतीर्विप्रावष्टतुष्ट्यादिकान् क्रमात् ॥ ८६ ॥
अणिमादिगुणानागान् वह्नेर्मूर्तीर्यमादिकान् ।
अष्टात्मकं जगत्त्वन्यत् सर्वं वितनुते सदा ॥ ८७ ॥
गुणिता नवधा नित्या सूते मन्त्रं तदात्मकम् ।
नवकं शक्तितत्त्वानां तत्त्वरूपा महेश्वरी ॥ ८८ ॥
नवकं पीठशक्तीनां शृङ्गारादीन् रसान् नव ।
माणिक्यादीनि रत्नानि नववर्गयुतानि च ॥ ८९ ॥
नवकं प्राणदूतीनां मण्डलं नवकं शुभम् ।
यद् यन्नवात्मकं लोके सर्वमस्यामुदञ्चति ॥ ९० ॥
दशधा विकृता शम्भोर्भाविनी भवदुःखहा ।
दशाक्षरं गणपतेस्त्वरिताया दशाक्षरम् ॥ ९१ ॥
त्रिपुरा दशकूटं स्यात्त्रिपुराया दशाक्षरम् ।
दशाक्षरं सरस्वत्या यक्षिण्याः स्याद्दशाक्षरम् ॥ ९२ ॥
वासुदेवात्मकं मन्त्रमश्वारूढा दशाक्षरम् ।
नाम्ना पद्मावतीमन्त्रं वायुमन्त्रं दशाक्षरम् ॥ ९३ ॥
दशकं शक्तितत्त्वानां तत्त्वरूपा महेश्वरी ।
नाडीनां दशकं विष्णोरवतारान् दश क्रमात् ॥ ९४ ॥
दशकं लोकपालानां यद् यदन्यत् सृजत्यसौ ।
एकादश क्रमात् संविज्ज्ञानभासा जगन्मयी ॥ ९५ ॥
रुद्रैकादशिनीमाद्याशक्तेरेकादशाक्षरम् ।
एकादशाक्षरं वाण्या रुद्रानेकादश क्रमात् ॥ ९६ ॥
समुद्गिरति सर्वज्ञा गुणिता द्वादश क्रमात् ।
नित्यामन्त्रं महेशान्या वासुदेवात्मकं मनुम् ॥ ९७ ॥
राशीन् भानून् हरेर्मूर्तीर्यन्त्रं स्याद् द्वादशात्मकम् ।
अन्यदेतादृशं सर्वं यत्तदस्यामजायत ॥ ९८ ॥
चतुर्विंशतितत्त्वात्मा यदा भवति शोभना ।

गायत्रीं सवितुः शम्भोर्गायत्रीं मदनात्मिकाम् ॥ ९९ ॥
गायत्रीं विष्णुगायत्रीं गायत्रीं त्रिपुरात्मनः ।
गायत्रीं दक्षिणामूर्त्तेर्गायत्रीं शम्भुयोषितः ॥ १०० ॥
चतुर्विंशतितत्त्वानि तस्यामासन् परात्मनि ।
द्वात्रिंशद्भेदगुणिता सर्वमन्त्रमयी विभुः ॥ १०१ ॥
सूते मृत्युञ्जयं मन्त्रं नारसिंहं महामनुः ।
लवणाद्यं मनुं मन्त्रं वरुणस्य महात्मनः ॥ १०२ ॥
हयग्रीवमनुं दौर्गं वाराहं वह्निनायकम् ।
गणेशितुर्महामन्त्रं मन्त्रं सेनाधिपस्य सा ॥ १०३ ॥
मन्त्रं श्रीदक्षिणामूर्त्तेर्मालामन्त्रं मनोभुवः ।
त्रिष्टुभं वनवासिन्याः अघोराख्यं महामनुम् ॥ १०४ ॥
भद्रकालीमनुं लक्ष्मीमालामन्त्रं यमात्मकम् ।
मन्त्रं सा देवकीसूनोर्मन्त्रं श्रीपुरुषोत्तमम् ॥ १०५ ॥
श्रीगोपालमनुं भूमेर्मनुं तारामनुं क्रमात् ।
महामन्त्रं महालक्ष्मीमन्त्रं भूतेश्वरस्य सा ॥ १०६ ॥
क्षेत्रपालात्मकं मन्त्रं मन्त्रमापन्निवारकम् ।
सूते मातङ्गिनीविद्यां सिद्धविद्यां शुभोदयाम् ॥ १०७ ॥
अनेन क्रमयोगेण गुणिता शिववल्लभा ।
षट्त्रिंशत्पञ्च तत्त्वानि शैवानि रचयत्यसौ ॥ १०८ ॥
अन्यानन्यांश्च यन्त्राणि शुभदानि प्रसूयते ।
द्विचत्वारिंशता भूत्वे गुणिता विश्वनायिका ॥ १०९ ॥
सा प्रसूते कुण्डलिनी शब्दब्रह्ममयी विभुः ।
शक्तिस्ततो ध्वनिस्तस्मान्नादस्तस्मान्निरोधिका ॥ ११० ॥
ततोऽर्द्धेन्दुस्ततो बिन्दुस्तस्मादासीत् परा ततः ।
पश्यन्ति मध्यमा वाचौ वैखरी शब्दजन्मभूः ॥ १११ ॥
इच्छाज्ञानक्रियात्मासौ तेजोरूपगुणात्मिका ।

क्रमेणानेन सृजति कुण्डली वर्णमालिकाम् ॥ ११२ ॥
अकारादिसकारान्तां द्विचत्वारिंशदात्मिकाम् ।
पञ्चाशद्वारगुणितां पञ्चाशद्वर्णमालिकाम् ॥ ११३ ॥
सूते तद्वर्णतो भिन्नान् कलारुद्रादिकान् क्रमात् ।
निरोधिका भवेद्वह्निरिन्दुः स्यान्निशाकरः ॥ ११४ ॥
अर्कः स्यादुभयोर्योगो विम्बात्मा तेजसां निधिः ।
जाता वर्णा यतो विन्दोः शिवशक्तिमयादतः ॥ ११५ ॥
अग्निसोमात्मकास्ते स्युः शिवशक्तिमयाद्रवेः ।
येन सम्भवमापन्नाः सोमसूर्य्याग्निरूपिणः ॥ ११६ ॥
इति श्रीसारदातिलके सृष्टिविधानं नाम प्रथमः पटलः ।

---

## द्वितीयः पटलः ।

ततो व्यक्तिं प्रवक्ष्यामि वर्णानां वदने नृणाम् ।
प्रेरिता मरुता नित्यं सुषुम्नारन्ध्रनिर्गताः ॥ १ ॥
कण्ठादिकरणैर्वर्णाः क्रमादाविर्भवन्ति ताः ।
एषु स्वराः स्मृताः सौम्याः स्पर्शाः सौरास्ततो दयाः ॥ २ ॥
आग्नेया व्यापकाः सर्वे सोमसूर्य्याग्निरूपिणः ।
स्वराः षोड़श विख्याताः स्पर्शास्ते पञ्चविंशतिः ॥ ३ ॥
तत्त्वात्मानः स्मृताः स्पर्शा मकारः पुरुषो यतः ।
व्यापका दश ते कामधनधर्मप्रदायिनः ॥ ४ ॥
ह्रस्वः स्वरेषु पूर्वोक्तः परो दीर्घः क्रमादिमे ।
शिवशक्तिमयास्ते स्युर्विन्दुसर्गावसानकाः ॥ ५ ॥
विन्दुः पुमान् रविः प्रोक्तः सर्गः शक्तिर्निशाकरः ।
स्वराणां मध्यगं यत् तु चतुष्कं तन्नपुंसकम् ॥ ६ ॥
पिङ्गलायां स्थिता ह्रस्वा ईड़ायां सङ्गताः परे ।

सुषुम्ना मध्यगा ज्ञेया चत्वारो ये नपुंसकाः ॥ ७ ॥
विना स्वरैस्तु नान्येषां जायते व्यक्तिरञ्जसा ।
शिवशक्तिमयान् प्राहुस्तस्माद्वर्णान्मनीषिणः ॥ ८ ॥
कारणात् पञ्चभूतानामुद्भूता मातृकायतः ।
ततो भूतात्मका वर्णाः पञ्च पञ्च विभागतः ॥ ९ ॥
वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात् ।
पञ्च ह्रस्वाः पञ्च दीर्घा बिन्द्वन्ताः सन्धिसम्भवाः ॥ १० ॥
पञ्चशः कादयः यश्चलसन्ताः समीरिताः ।
सोमसूर्य्याग्निभेदेन मातृकावर्णसम्भवाः ॥ ११ ॥
अष्टत्रिंशत्कलास्तत्तन्मण्डलेषु व्यवस्थिताः ।
अमृता मानदा पूषा तुष्टिः पुष्टीरतिर्धृतिः ॥ १२ ॥
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ।
पूर्णा पूर्णामृता कामदायिन्यः स्वरजाः कलाः ॥ १३ ॥
तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ।
सुषुम्ना भोगदा विश्वा बोधिनी धारिणी क्षमा ॥ १४ ॥
कभाद्या वसुदाः सौराः ठडान्ता द्वादशेरिताः ।
धूम्रार्चिरुष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ॥ १५ ॥
सुश्री सुरूपा कपिला हव्यकव्यवहा अपि ।
यादीनां दशवर्णानां कला धर्मप्रदा इमाः ॥ १६ ॥
अभयेष्टाकरा ह्येषाः श्वेतपीतारुणाः क्रमात् ।
तारस्य पञ्चभेदेभ्यः पञ्चाशद्वर्णगाः कलाः ॥ १७ ॥
सृष्टिर्ऋद्धिः स्मृतिर्मेधा कान्तिर्लक्ष्मी धृतिः स्थिरा ।
स्थितिः सिद्धिरिति प्रोक्ताः कचवर्गकलाः क्रमात् ॥ १८ ॥
अकाराद् ब्रह्मणोत्पन्नास्तप्तचामीकरप्रभाः ।
एताः करधृताक्षस्रक्पङ्कजद्वयकुण्डिकाः ॥ १९ ॥
जया च पालिनी शान्तिरीश्वरी रतिकालिके ।

वरदा ह्लादिनी प्रीतिर्दीर्घाः स्युष्टतवर्गजाः ॥ २० ॥
उकाराद् विष्णुनोत्पन्नास्तमालदलसन्निभाः ।
अभीतिवरचक्रेष्टबाहवः परिकीर्त्तिताः ॥ २१ ॥
तीक्ष्णा रौद्री भया निद्रा तन्द्री क्षुत् क्रोधिनी क्रिया ।
उल्कारी मृत्युरेताः स्युः कथिताः पयवर्गजाः ॥ २२ ॥
रुद्रेण मार्णादुत्पन्नाः शरच्चन्द्रनिभप्रभाः ।
उद्वहन्त्योऽभयं शूलं कपालं बाहुभिर्वरम् ॥ २३ ॥
ईश्वरेणोदिता बिन्दोः पीता श्वेतारुणा सिता ।
अनन्ता चयवर्गस्था जवाकुसुमसन्निभाः ॥ २४ ॥
अभयं हरिणं टङ्कं दधाना बाहुभिर्वरम् ।
निवृत्तिः सप्रतिष्ठा स्याद्विद्या शान्तिरनन्तरम् ॥ २५ ॥
इन्धिका दीपिका चैव रेचिका मोचिका परा ।
सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायनी तथा ॥ २६ ॥
व्यापिनी व्योमरूपा स्युरनन्ताः स्वरशक्तयः ।
सदाशिवेन सञ्जाता नादादेताः सितत्विषः ॥ २७ ॥
अक्षस्रक्पुस्तकगुणकपालाढ्यकराम्बुजाः ।
न्यासे तु योजयेदादौ षोड़शस्वरगाः कलाः ॥ २८ ॥
इति पञ्चाशदाख्याताः कलाः सर्वसमृद्धिदाः ।
श्रीकण्ठानन्तसूक्ष्माश्च त्रिमूर्त्तिरमरेश्वरः ॥ २९ ॥
अर्घीशो भारभूतिः स्यात् तिथीशः स्थाणुको हरः ।
झिण्टीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः ॥ ३० ॥
अक्रूरश्च महासेनः षोड़श स्वरमूर्त्तयः ।
पश्चात् क्रोधीशचण्डेशपञ्चान्तकशिवोत्तमाः ॥ ३१ ॥
अथैकरुद्रकूर्मैकनेत्राङ्चतुराननाः ।
अजेशसर्वसोमेशास्तथा लाङ्गलिदारुकौ ॥ ३२ ॥
अर्द्धनारीश्वरश्चोमाकान्तश्चाषाढ़िदण्डिनौ ।

स्युरद्रिमीनमेषाख्या लोहितश्च शिखी तथा ।
छगलाण्डद्विरण्डेशौ समहाकालबालिनौ ॥ ३३ ॥
भुजङ्गेशः पिनाकीशः खड्गीशाख्यावकेशकः ।
श्वेतभृङ्गीशनकुलिशिवाः संवर्त्तकस्ततः ॥ ३४ ॥
एते रुद्राः स्मृता रक्ता धृतशूलकपालकाः ।
पूर्णोदरी स्याद्विरजा शाल्मली तदनन्तरम् ॥ ३५ ॥
लोलाक्षी वर्त्तुलाक्षी च दीर्घघोणा समीरिता ।
सदीर्घमुखीगोमुख्यौ दीर्घजिह्वा तथैव च ॥ ३६ ॥
कुण्डोदर्य्यूर्ध्वकेश्यौ च तथा विकृतमुख्यपि ।
ज्वालामुखी ततो ज्ञेया पश्चादुल्कामुखी ततः ॥ ३७ ॥
सुश्रीमुखी च विद्यामुख्येताः स्युः स्वरशक्तयः ।
महाकालीमरस्वत्यौ सर्वसिद्धिसमन्विते ॥ ३८ ॥
गौरी त्रैलोक्यविद्या स्यान्मन्त्रशक्तिस्ततः परम् ।
आत्मशक्तिभूतमाता तथा लम्बोदरी किल ॥ ३९ ॥
द्राविणी नागरी भूयः खेचरी चापि मञ्जरी ।
रूपिणी वीरिणी पश्चात् काकोदर्य्यपि पूतना ॥ ४० ॥
स्याद् भद्रकालीयोगिन्यौ शङ्खिनी गर्जिनी तथा ।
कालरात्रिश्च कुब्जिन्या कपर्दिन्यपि वज्रया ॥ ४१ ॥
जया च सुमुख्येश्वर्य्यौ रेवती माधवी ततः ।
वारुणी वायवी प्रोक्ता पश्चाद् रक्षोविदारिणी ॥ ४२ ॥
ततश्च सहजा लक्ष्मीर्व्यापिनी माययान्विता ।
एता रुद्राङ्कपीठस्थाः सिन्दूरारुणविग्रहाः ॥ ४३ ॥
रक्तोत्पलकपालाभ्यामलङ्कृतकराम्बुजाः ।
केशवो नारायणो माधवगोविन्दविष्णवः ॥ ४४ ॥
मधुसूदनसंज्ञोऽन्यः स्यात् त्रिविक्रमवामनौ ।
श्रीधरश्च हृषीकेशः पद्मनाभस्ततः परम् ॥ ४५ ॥

दामोदरो वासुदेवः सङ्कर्षण इतीरितः ।
प्रद्युम्नश्चानिरुद्धश्च स्वराणां मूर्त्तयस्त्विमाः ॥ ४६ ॥
पश्चाच्चक्री गदी शार्ङ्गी खड्गी शङ्खी हली पुनः ।
मूषली शूलिसंज्ञोऽन्यः पाशी स्यादङ्कुशी पुनः ॥ ४७ ॥
मुकुन्दो नन्दजो नन्दी नरो नरकजिद्धरिः ।
कृष्णः सत्यः सात्वतः स्याच्छौरिः शूरो जनार्दनः ॥ ४८ ॥
भूधरो विश्वमूर्त्तिश्च वैकुण्ठः पुरुषोत्तमः ।
बली बलानुजो बालो वृषघ्नश्च वृषः पुनः ॥ ४९ ॥
हंसो वराहो विमलो नृसिंहो मूर्त्तयो ह्यपि ।
केशवाद्या इमे श्यामाश्चक्रशङ्खलसत्कराः ॥ ५० ॥
कीर्त्तिः कान्तिस्तुष्टिपुष्टी धृतिः शान्तिः क्रिया दया ।
मेधा सहर्षा श्रद्धा स्याल्लज्जा लक्ष्मीः सरस्वती ॥ ५१ ॥
प्रीतीरतिरिमाः प्रोक्ताः क्रमेण स्वरशक्तयः ।
जयदुर्गा प्रभा सत्या चण्डा वाणी विलासिनी ॥ ५२ ॥
विजया विरजा विश्वा विनदा सुनदा स्मृतिः ।
ऋद्धिः समृद्धिः शुद्धिः स्याद्भक्तिर्बुद्धिर्मतिः क्षमा ॥ ५३ ॥
रमोमा क्लेदिनी क्लिन्ना वसुदा वसुधा परा ।
परा परायणा सूक्ष्मा सन्ध्या प्रज्ञा प्रभा निशा ॥ ५४ ॥
अमोघा विद्युता चेति कीर्त्त्याद्याः सर्वकामदाः ।
एताः प्रियतमाङ्केषु निषण्णाः सस्मिताननाः ॥ ५५ ॥
विद्युद्दामसमानाङ्ग्यः पङ्कजाभयबाहवः ।
मातृकावर्णभेदेभ्यः सर्वमन्त्राः प्रजज्ञिरे ॥ ५६ ॥
मन्त्रविद्याविभागेन द्विविधा मन्त्रजातयः ।
मन्त्राः पुंदेवता ज्ञेया विद्या स्त्रीदेवताः स्मृताः ॥ ५७ ॥
पुंस्त्रीनपुंसकात्मानो मन्त्राः सर्वे समीरिताः ।
पुंमन्त्रा हुंफडन्ताः स्युर्द्विठान्ताश्च स्त्रियो मताः ॥ ५८ ॥

नपुंसका नमोऽन्ताः स्युरित्युक्ता मनवस्त्रिधा।
शस्तास्ते त्रिविधा मन्त्रा वश्यशान्त्यभिचारिके ॥ ५९ ॥
अग्निसोमात्मका मन्त्रा विज्ञेयाः क्रूरसौम्ययोः।
कर्मणोर्वह्नितारान्त्यवियत्प्रायाः समीरिताः ॥ ६० ॥
आग्नेया मनवः सौम्या भूयिष्ठेन्द्वमृताक्षराः।
आग्नेयाः संप्रबुध्यन्ते प्राणे चरति दक्षिणे ॥ ६१ ॥
भागेऽन्यस्मिन् स्थिते प्राणे सौम्या बोधं प्रयान्ति च।
नाड़ीद्वयं गते प्राणे सर्वे बोधं प्रयान्ति च ॥ ६२ ॥
प्रयच्छन्ति फलं सर्वे प्रबुद्धा मन्त्रिणां सदा।
छिन्नादिदुष्टमन्त्रास्ते पालयन्ति न साधकम् ॥ ६३ ॥
छिन्नो रुद्धः शक्तिहीनः पराङ्मुख इतीरितः।
बधिरो नेत्रहीनश्च कीलितः स्तम्भितस्तथा ॥ ६४ ॥
दग्धः त्रस्तश्च भीतश्च मलिनश्च तिरस्कृतः।
भेदितश्च सुषुप्तश्च मदोन्मत्तश्च मूर्च्छितः ॥ ६५ ॥
हृतवीर्य्यश्च हीनश्च प्रध्वस्तो बालकः पुनः।
कुमारश्च युवा प्रौढ़ो वृद्धो निस्त्रिंशकस्तथा ॥ ६६ ॥
निर्वीर्य्यः सिद्धिहीनश्च मन्दः कूटस्तथा पुनः।
निरंशः सत्त्वहीनश्च केकरो बीजहीनकः ॥ ६७ ॥
धूमितालिङ्गितौ स्याच्च मोहितस्तु क्षुधार्त्तकः।
अतिदृप्तोऽङ्गहीनः स्यादतिक्रुद्धः समीरितः ॥ ६८ ॥
अतिक्रूरश्च सव्रीड़ः शान्तमानस एव च।
स्थानभ्रष्टश्च विकलः सातिवृद्धः प्रकीर्त्तितः ॥ ६९ ॥
निःस्नेहः पीड़ितश्चापि वक्ष्याम्येषां च लक्षणम्।
मनोर्यस्यादिमध्यान्ते त्वानिलं बीजमुच्यते ॥ ७० ॥
संयुक्तं वा वियुक्तं वा स्वराक्रान्तं त्रिधा पुनः।
चतुर्धा पञ्चधा वाथ स मन्त्रश्छिन्नसंज्ञकः ॥ ७१ ॥

आदिमध्यावसानेषु भूबीजद्वन्द्वलाञ्छितः।
रुद्रमन्त्रः स विज्ञेयो भुक्तिमुक्तिविवर्जितः॥ ७२॥
मायाक्षितत्त्वश्रीबीजरावहीनस्तु यो मनुः।
शक्तिहीनः स कथितो यस्य मध्ये न विद्यते॥ ७३॥
कामबीजं मुखे माया शिरस्यङ्कुशमेव वा।
असौ पराङ्मुखः प्रोक्तो हकारो विन्दुलाञ्छितः॥ ७४॥
आद्यन्तमध्येष्विन्दुर्वा न भवेद्बधिरः स्मृतः।
पञ्चवर्णो मनुर्यः स्याद्रेफार्केन्दुविवर्जितः॥ ७५॥
नेत्रहीनः स विज्ञेयो दुःखशोकामयप्रदः।
आदिमध्यावसानेषु हंसः प्रासादवाग्भवः॥ ७६॥
हकारो विन्दुमान् जीवो रावं वापि चतुष्कलम्।
मायां नमामि च पदे नास्ति यस्मिंश्च कोलितः॥७७॥
एकं मध्ये द्वयं मूर्ध्नि यस्मिन्नस्त्रपुरन्दरौ।
विद्येते स तु मन्त्रः स्यात् स्तम्भितः सिद्धिरोधकः॥७८॥
वह्निर्वायुसमायुक्तो यस्य मन्त्रस्य मूर्द्धनि।
सप्तधा दृश्यते तन्तु दग्धं मन्त्रीतमन्त्रवित्॥ ७९॥
अस्त्रं द्वाभ्यां त्रिभिः षड्भिरष्टाभिर्दृश्यतेऽक्षरैः।
स्रस्तः सोऽभिहितो यस्य मुखेन प्रणवः स्मृतः॥ ८०॥
शिवो वा शक्तिरथवा भीताख्यः स प्रकीर्त्तितः।
आदिमध्यावसानेषु भवेन्माढचतुष्टयम्॥ ८१॥
यस्य मन्त्रः समाहीनो मन्त्रवित्तं विवर्जयेत्।
यस्य मध्ये दकारो वा क्रोधो वा मूर्द्धनि द्विधा॥ ८२॥
अस्त्रं तिष्ठति मन्त्रः सः तिरस्कृत उदाहृतः।
आद्वयं हृदये शीर्षे वषड्वौषट् च मध्यतः॥ ८३॥
यस्यासौ भेदितो मन्त्रस्याज्यः सिद्धिषु सूरिभिः।
त्रिवर्णो हंसहीनो यः सुषुप्तः स उदाहृतः॥ ८४॥

मन्त्री वाप्यथवा विद्या सप्ताधिकदशाक्षरः।
फट्कारपञ्चकादिर्यो मदोन्मत्त उदीरितः॥ ८५॥
लहदस्त्वं स्थितं मध्ये यस्य मन्त्रः स मूर्च्छितः।
विरामस्थानगं यस्य हृतवीर्य्यः स कथ्यते॥ ८६॥
आदौ मध्ये तथा मूर्ध्नि चतुरस्त्रयुतो मनुः।
ज्ञातव्यो हीन इत्येष यः स्यादष्टादशाक्षरः॥ ८७॥
एकोनविंशत्यर्णो वा यो मन्त्रस्तारसंयुतः।
हृल्लेखाङ्कुशबीजाढ्यः सः प्रध्वस्तश्च कथ्यते॥ ८८॥
सप्तवर्णो मनुर्बालः कुमारोऽष्टाक्षरस्तु यः।
षोड़शार्णोऽथवा प्रौढ़श्चत्वारिंशल्लिपिर्मनुः॥ ८९॥
त्रिंशदर्णश्चतुःषष्टिवर्णो मन्त्रः शताक्षरः।
चतुःशताक्षरश्चापि वृद्ध इत्यभिधीयते॥ ९०॥
नवाक्षरो ध्रुवयुतो मनुर्निस्त्रिंश ईरितः।
यस्यावसाने हृदयं शिरोमन्त्रौ च मध्यतः॥ ९१॥
शिखा वर्म च न स्यातां वौषट् फट्कार एव वा।
शिवशक्तिविहीनो वा स निवार्य्य इति स्मृतः॥ ९२॥
एषु स्थानेषु फट्कारः षोढ़ा यस्मिन् प्रदृश्यते।
स मन्त्रः सिद्धिहीनः स्यान्मन्दः पंक्त्यक्षरो मनुः॥ ९३॥
क्रूर एकाक्षरो मन्त्रः स एवोक्तो निरंशकः।
द्विवर्णः स तु हीनः स्याच्चतुर्वर्णस्तु केकरः॥ ९४॥
षड़क्षरो बीजहीनस्त्वर्द्धसप्ताक्षरो मनुः।
सार्द्धद्वादशवर्णो वा धूमितः स हि निन्दितः॥ ९५॥
सार्द्धबीजस्त्रयस्त्रिद्दकविंशतिवर्णकः।
विंशत्यर्णस्त्रिंशदर्णो यः स्यादालिङ्गितस्तु सः॥ ९६॥
द्वाविंशत्यक्षरो मन्त्रो मोहितः परिकीर्त्तितः।
द्वात्रिंशदर्णो मन्त्रो यः सप्तविंशतिवर्णकः॥ ९७॥

क्षुधार्त्तः स तु विज्ञेयश्चतुर्विंशतिवर्णकः ।
एकादशाक्षरो वापि पञ्चविंशतिसंख्यकः ॥ ९८ ॥
त्रयोविंशतिवर्णो वा मन्त्रो दृप्त उदाहृतः ।
षड्विंशत्यक्षरो मन्त्रः षट्त्रिंशद्वर्णकस्तथा ॥ ९९ ॥
त्रिंशदेकोनवर्णो वाप्यङ्गहीनोऽभिधीयते ।
अष्टाविंशत्यक्षरो य एकत्रिंशदथापि वा ॥ १०० ॥
अतिक्रुद्धः स कथितो निन्दितः सर्वकर्मसु ।
त्रिंशदक्षरको मन्त्रस्त्रयस्त्रिंशदथापि वा ॥ १०१ ॥
अतिक्रूरः स विज्ञेयो निन्दितः सर्वकर्मसु ।
चत्वारिंशतमारभ्य त्रिषष्टिर्यावता भवेत् ।
तावत्संख्या निगदिता मन्त्राः सव्रीड़संज्ञकाः ॥ १०२ ॥
पञ्चषष्ट्यक्षरा ये स्युर्मन्त्रास्ते शान्तमानसाः ।
एकोनशतपर्य्यन्तं पञ्चषष्ट्यक्षरादितः ॥ १०३ ॥
ये मन्त्रास्ते निगदिताः स्थानभ्रष्टाह्वया बुधैः ।
त्रयोदशाक्षरा ये स्युर्मन्त्राः पञ्चदशाक्षराः ॥ १०४ ॥
विकलास्तेऽभिधीयन्ते शतं सार्द्धशतं तु वा ।
शतद्वयं द्विनवतिरेकहीनाथवापि सा ॥ १०५ ॥
शतत्रयं वा यत्संख्या निःस्नेहास्ते समीरिताः ।
चतुःशतमथारभ्य यावद्वर्णसहस्रकम् ॥ १०६ ॥
अतिवृद्धः स यागेषु परित्यज्यः सदा बुधैः ।
सहस्रार्णाधिका मन्त्रा दण्डकाः पीड़िताह्वयाः ॥ १०७ ॥
द्विसहस्राक्षरा मन्त्राः खण्डकाः शतधा कृताः ।
ज्ञातव्यास्तोत्ररूपास्ते मन्त्रा एते यथास्थिताः ॥ १०८ ॥
तथा विद्याश्च बोद्धव्या मन्त्रिभिः काम्यकर्मसु ।
दोषानिमानविज्ञाय यो मन्त्रं भजते जनः ॥ १०९ ॥
सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि ।

इत्यादिदोषदुष्टांस्तान्मन्त्रानात्मनि योजयन् ॥ ११० ॥
शोधयेद्रुद्धपवनो बद्धया योनिमुद्रया ।
मन्त्राणां दश कथ्यन्ते संस्काराः सिद्धिदायिनः ॥ १११ ॥
जननं जीवनं पश्चात्ताड़नं बोधनं तथा ।
अथाभिषेको विमलीकरणाप्यायने पुनः ॥ ११२ ॥
तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंक्रियाः ।
मन्त्राणां मातृकामध्यादुद्धारो जननं स्मृतम् ॥ ११३ ॥
प्रणवान्तरितान् कृत्वा मन्त्रवर्णान् जपेत् सुधीः ।
एतज्जीवनमित्याहुर्मन्त्रतन्त्रविशारदाः ॥ ११४ ॥
मन्त्रवर्णान् समालिख्य ताड़येच्चन्दनाम्भसा ।
प्रत्येकं वायुना मन्त्री ताड़नं तदुदाहृतम् ॥ ११५ ॥
विलिख्य मन्त्रं तं मन्त्री प्रसूनैः करवीरजैः ।
तन्मन्त्राक्षरसंख्यातैर्हन्याद्रान्तेन बोधनम् ॥ ११६ ॥
स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रार्णसंख्यया ।
अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद्विशुद्धये ॥ ११७ ॥
सञ्चिन्त्य मनसा मन्त्रं ज्योतिर्मन्त्रेण निर्दहेत् ।
मन्त्रे मलत्रयं मन्त्री विमलीकरणन्त्विदम् ॥ ११८ ॥
तारव्योमाग्निमनुयुक् दण्डी ज्योतिर्मनुर्मतः ।
कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनुः ॥ ११९ ॥
तेन मन्त्रेण विधिवद्देवताप्यायनं मतम् ।
मन्त्रेण वारिणा मन्त्रे तर्पणं तर्पणं मतम् ॥ १२० ॥
तारमायारमायोगो मनोर्दीपनमुच्यते ।
जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम् ॥ १२१ ॥
संस्कारा दश संप्रोक्ताः सर्वतन्त्रेषु गोपिताः ।
यान् कृत्वा सम्प्रदायेन मन्त्री वाञ्छितमश्नुते ॥ १२२ ॥
स्वताराशिकोष्ठानामनुकूलान् मनून् भजेत् ।

प्राप लोभात् पटः प्रायं रुद्रस्यादिरुरुः करम् ॥ १२३ ॥
लोभलोपपटः प्रायः युलोकाद्येषु भेदिताः ।
वर्णाः क्रमात् स्वरान्त्यौ तु रेवत्यं शगतस्तदा ॥ १२४ ॥
जन्म सम्पद्विपत् क्षेमः प्रत्यरिः साधको बधः ।
मित्रं परममित्रञ्च जन्मादीनि पुनः पुनः ॥ १२५ ॥
बालं गौरं खुरं शोण शमो नोपैति राशिषु ।
क्रमेण भेदिता वर्णाः कन्यायां शादयः स्थिताः ॥ १२६ ॥
लग्नो धनं भ्रातृशत्रुपुत्रमित्रकलत्रकाः ।
मरणं धर्मकर्मायव्ययद्वादशराशयः ॥ १२७ ॥
चतुरस्रे लिखेद्वर्णान् चतुष्कोष्ठसमन्विते ।
अकारादिक्षकारान्तान् स्वनामाद्यक्षरादितः ॥ १२८ ॥
सिद्धादीन् कल्पयेन्मन्त्री कुर्यात् सिद्धादितः पुनः ।
सिद्धादीन् सिद्धिदः सिद्धो जपात् साध्यो हुतादिभिः ॥१२९॥
सुसिद्धः प्राप्तिमात्रेण साधकं भक्षयेदरिः ।
सिद्धार्णा बान्धवाः प्रोक्ताः साध्यार्णाः सेवकाः स्मृताः ॥१३०॥
सुसिद्धाः पोषका ज्ञेयाः शत्रवो घातका मताः ।
दीपस्थानं समाश्रित्य ज्ञातं कर्मफलप्रदम् ।
चतुरस्रां भुवं भित्त्वा कोष्ठानां नवकं लिखेत् ॥ १३१ ॥
पूर्वकोष्ठादि विलिखेत् सप्तवर्णाननुक्रमात् ।
लक्षमोग्रे मध्यकोष्ठे स्वरान् युग्मक्रमाल्लिखेत् ॥ १३२ ॥
दिक्षु पूर्वादितो यत्र क्षेत्राख्याद्यक्षरं स्थितम् ।
मुखं तस्य तु जानीयात् हस्तावुभयतः स्थितौ ॥ १३३ ॥
कोष्ठे कुक्षिरुभे पादौ द्वे शिष्टं पुच्छमीरितम् ।
क्रमेणानेन विभजेन्मध्यस्थमपि भागतः ॥ १३४ ॥
मुखस्थो लभते सिद्धिं करस्थः स्वल्पजीवनः ।
उदासीनः कुक्षिसंस्थः पादस्थो दुःखमाप्नुयात् ॥ १३५ ॥

पुच्छस्थः पीड्यते मन्त्री बन्धनोच्चाटनादिभिः ।
कूर्मचक्रमिदं प्रोक्तं मन्त्राणां सिद्धिसाधकम् ॥ १३६ ॥
पुण्यक्षेत्रं नदीतीरं गुहापर्वतमस्तकम् ।
तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं वनम् ॥ १३७ ॥
उद्यानानि विविक्तानि बिल्वमूलं तटं गिरेः ।
देवतायतनं कूलं समुद्रस्य निजं गृहम् ॥ १३८ ॥
साधनेषु प्रशस्यन्ते स्थानान्येतानि मन्त्रिणाम् ॥ १३९ ॥
पुरुषार्थसमावाप्त्यै सच्छिष्यो गुरुमाश्रयेत् ।
मातृतः पितृतः शुद्धः शुद्धभावो जितेन्द्रियः ॥ १४० ॥
सर्वागमानां सारज्ञः सर्वशास्त्रार्थतत्त्ववित् ।
परोपकारनिरतो जपपूजादितत्परः ॥ १४१ ॥
अमोघवचनः शान्तो वेदवेदाङ्गपारगः ।
योगमार्गानुसन्धायी देवताहृदयङ्गमः ॥ १४२ ॥
इत्यादिगुणसम्पन्नो गुरुरागमसम्मतः ।
शिष्यः कुलीनः शुद्धात्मा पुरुषार्थपरायणः ॥ १४३ ॥
अधीतवेदः कुशलो दूरत्यक्तमनोभवः ।
हितैषी प्राणिनां नित्यमास्तिकस्त्यक्तनास्तिकः ॥ १४४ ॥
स्वधर्मनिरतो भक्त्या पितृमातृहितोद्यतः ।
वाङ्मनःकायवसुभिर्गुरुशुश्रूषणे रतः ॥ १४५ ॥
एतादृशगुणोपेतः शिष्यो भवति नापरः ।
एकाब्देन भवेद् योग्यो ब्राह्मणोऽब्दद्वयान्नृपः ॥ १४६ ॥
वैश्यो वर्षैस्त्रिभिः शूद्रश्चतुर्भिर्वत्सरैर्गुरोः ।
शुश्रूषया परिग्राह्यो दीक्षायागव्रतादिषु ॥ १४७ ॥
इति श्रीसारदातिलके महातन्त्रे द्वितीयः पटलः ।





# तृतीयः पटलः ।

ततो वक्ष्यामि दीक्षाङ्गं वास्तुयागपुरःसरम् ।
कृतेन येन मन्त्रज्ञो दीक्षायाः फलमश्नुते ॥ १ ॥
राक्षसं वास्तुनामानं हत्वाधिष्ठाय तत्तनुम् ।
स्थितास्त्रिपञ्चाशद्देवास्तेभ्यः पूर्वं बलिं हरेत् ॥ २ ॥
बलिमण्डलमेतेषां यथावदभिधीयते ।
पूर्वापरायतं सूत्रं विन्यसेदुक्तमानतः ॥ ३ ॥
तन्मध्ये किञ्चिदालम्ब्य मत्स्यौ द्वौ परितो लिखेत् ।
तयोर्मध्यस्थितं सूत्रं विन्यसेद्दक्षिणोत्तरम् ॥ ४ ॥
द्वाभ्यां द्वाभ्यां तथाग्राभ्यां कोणेषु मकरान् लिखेत् ।
तन्मध्यमध्यस्थिताग्राणि तत्र सूत्राणि पातयेत् ॥ ५ ॥
चतुरस्रं भवेत्तत्र चतुष्कोष्ठसमन्वितम् ।
तत् पुनर्विभजेन्मन्त्री चतुःषष्टिपदं यथा ॥ ६ ॥
ईशानाद्राक्षसं यावद् यावदग्नेः प्रभञ्जनम् ।
एवं सूत्रद्वयं दद्यात् कर्णसूत्रं समाहितः ॥ ७ ॥
ब्रह्माणं पूजयेदादौ मध्ये कोष्ठचतुष्टये ।
दिक्चतुष्केषु पूर्वादि यजेदर्य्यमणन्ततः ॥ ८ ॥
विवस्वन्तं ततो मित्रं महीधरमतः परम् ।
कोणार्द्धकोष्ठद्वन्द्वेषु वक्ष्यमाणादिपरितः पुनः ॥९॥
सावित्रं सवितारञ्च शक्रमिन्द्रजयं पुनः ।
रुद्रं रुद्रजयं विद्वानापञ्चाप्यपवत्सकम् ॥ १० ॥
तत्कर्णसूत्रोभयतः कोष्ठद्वन्द्वेषु देशिकः ।
सर्वं गुह्यं चार्य्यमणं जम्भकं लिपिपिञ्जकम् ॥ ११ ॥
चरकीञ्च विदारीञ्च पूतनामर्चयेत् क्रमात् ।

अर्चयेद्दिक्षु पूर्वादिसार्द्धाद्यन्तपदेष्विमान्॥ १२ ॥
अष्टावष्टविभागेन देवान् देशिकसत्तमः।
क्रमादीशानपर्य्यन्तं जयन्तं शक्रभास्करौ॥ १३ ॥
सत्योद्यया न्तरौक्षौ च दिशि प्राच्यामवस्थिताः।
अग्निः पूषा च वितथो यमश्च गृहरक्षकः॥ १४ ॥
गन्धर्वो भृङ्गराजश्च मृगो दक्षदिगाश्रितः।
निर्ऋतिर्दौवारिकश्च सुग्रीववरुणौ ततः॥ १५ ॥
पुष्पदन्तासुरौ शेषरोगौ प्रत्यग्दिशि स्थिताः।
वायुर्नागाख्यमुख्यश्च सोमो भल्लाट एव च॥१६ ॥
स्वकुलाख्योऽदित्यदिती कुबेरस्य दिशि स्थिताः।
उक्तानामिति देवानां पदान्यापूर्य्य पञ्चभिः॥ १७ ॥
रजोभिस्तद्बथो तेभ्यः पायसान्नं बलिं हरेत्।
अयं वास्तुबलिः प्रोक्तः सर्वसम्पत्प्रदायकः॥ १८ ॥
नक्षत्रवारराशीनामनुकूले शुभेऽहनि।
ततो भूमितले शुद्धे तुषाङ्गारविवर्जिते॥ १९ ॥
पुण्याहं वाचयित्वा तु मण्डपं रचयेच्छुभम्।
पञ्चभिः सप्तभिर्हस्तैर्नवभिर्वा मितान्तरम्॥ २० ॥
षोड़शस्तम्भसंयुक्तं चत्वारस्तेषु मध्यगाः।
अष्टहस्तसमुच्छ्रायाः संस्थाप्य द्वादशाभितः॥ २१ ॥
पञ्चहस्तप्रमाणास्ते निश्छिद्रा ऋजवः शुभाः।
तत्पञ्चमांशं निखनेन्मेदिन्यां मन्त्रवित्तमः॥ २२ ॥
नारिकेलदलैर्वंशैश्छादयेत्तत् समन्ततः।
द्वारेषु तोरणानि स्युः क्रमात् क्षीरमहीरुहाम्॥ २३ ॥
स्तम्भोच्छ्रायः स्मृतस्तेषां सप्तहस्तैः पृथक् पृथक्।
दशाङ्गुलप्रमाणेन तत्परीणाह ईरितः॥ २४ ॥
तिर्य्यक्फलकमानं स्यात् स्तम्भानामूर्द्ध्वमानतः।

शूलालिं कल्पयेन्मध्ये तोरणे हस्तमानतः ॥ २५ ॥
दिक्षु ध्वजान्निबध्नीयाल्लोकपालसमप्रभान्।
वितानदर्भमालाद्यैरलङ्कुर्वीत मण्डपम् ॥ २६ ॥
तन्त्रिभागमिते क्षेत्रेऽरत्निमात्रसमुन्नताम्।
चतुरस्रां ततो वेदीं मण्डलाय प्रकल्पयेत् ॥ २७ ॥
प्रागेव दीक्षादिवसात् सप्तभिर्विधिवद्दिनैः।
सर्वमङ्गलसम्पत्त्यै विदध्यादङ्कुरार्पणम् ॥ २८ ॥
मण्डपस्योत्तरे भागे शालां पूर्वापरायताम्।
गूढां कुर्य्यात् ततस्तस्यां मण्डलं रचयेत् सुधीः ॥ २९ ॥
पञ्चहस्तप्रमाणानि पञ्चसूत्राणि पातयेत्।
पूर्वापरायतान्येषामन्तरं द्वादशाङ्गुलम् ॥ ३० ॥
दक्षिणोत्तरसूत्राणि तद्वदेकादशार्पयेत्।
पदानि तत्र जायन्ते चत्वारिंशत् प्रमार्जयेत् ॥ ३१ ॥
पंक्त्या वीथ्योश्चतस्रोऽन्तश्चतुष्कोभयपार्श्वयोः।
वीथ्यौ द्वे च चतुष्कोष्ठद्वयमात्रावशिष्यते ॥ ३२ ॥
पदानि रञ्जयेत्तानि सितपीतारुणासितैः।
रजोभिः श्यामलेनाथ वीथीरापूरयेत् सुधीः ॥ ३३ ॥
पात्राणि त्रिविधान्याहुरङ्कुरार्पणकर्मणि।
पालिकाः पञ्चमुख्यश्च शरावाश्च चतुष्क्रमात् ॥ ३४ ॥
प्रोक्ताः स्युः सर्वतन्त्रेषु हरिद्रह्मशिवात्मकाः।
एषामुत्सेध उन्नेयः षोड़शद्वादशाष्टभिः ॥ ३५ ॥
अङ्गुलैः क्रमशस्तानि सूत्रभान्यावेष्ट्य तन्तुना।
प्रक्षाल्य दंशिकास्तेषु पदेष्वाहितशालिषु ॥ ३६ ॥
सगन्धदर्भकूर्चेषु पश्चिमादि निवेशयेत्।
करीषवालुकामृद्भिस्तानि पात्राणि पूरयेत् ॥ ३७ ॥
सुधावीजेन वीजानि दुग्धे प्रक्षाल्य तन्त्रवित्।

मूलमन्त्राभिजप्तानि पञ्चघोषपुरःसरम् ॥ ३८ ॥
आशीर्वाग्भिर्द्विजातीनां मङ्गलाचारपूर्वकम् ।
निर्वपेत्तेषु पात्रेषु देशिको यतमानसः ॥ ३९ ॥
शालिश्यामाढ़कीमुद्गतिलनिष्पावसर्षपाः ।
कुलत्थकन्दुमासाश्च बीजान्यङ्कुरकर्मणि ॥ ४० ॥
हरिद्राऽद्भिः समभ्युक्ष्य वस्त्रैराच्छाद्य देशिकः ।
बलिं विविधपात्राणां दिक्षु पूर्वादितः क्षिपेत् ॥ ४१ ॥
प्रणवाद्यैर्नमोऽन्तैश्च रात्रौ रात्रीशनामभिः ।
भूतानि पितरो यक्षा नागा ब्रह्मा शिवो हरिः ।
सप्तानामपि रात्रीणां देवताः समुदीरिताः ॥ ४२ ॥
भूतेभ्यः स्युर्लाजतिलहरिद्रादधिशक्तवः ।
सान्नाः पितृभ्यः सतिलास्तण्डुलाः परिकीर्त्तिताः ॥ ४३ ॥
करम्भलाजौ यक्षेभ्यो नारिकेलोदकान्वितम् ।
शक्तुपिष्टञ्च नागेभ्यो ब्रह्मणे पङ्कजाक्षतम् ॥ ४४ ॥
सापूपमन्नं सर्वाय विष्णवे स्याद् गुड़ौदनम् ।
ततो लोकेश्वरेभ्योऽपि विधिवद् वितरेद् बलिम् ॥ ४५ ॥
दीक्षायामभिषेकेषु नववेश्मप्रवेशने ।
उत्सवेषु च सम्पर्च्चै विदध्यादङ्कुरार्पणम् ॥ ४६ ॥
प्राक्प्रोक्ते मण्डले विद्वान् वेदिकाया बहिस्त्रिधा ।
क्षेत्रं विभज्य मध्यांशे पूर्वादि परिकल्पयेत् ॥ ४७ ॥
अष्टास्वाशासु कुण्डानि रम्याकाराण्यनुक्रमात् ।
चतुरस्रं योनिमर्द्धचन्द्रं त्र्यस्रं सुवर्त्तुलम् ॥ ४८ ॥
षडस्रं पङ्कजाकारमष्टास्रं तानि नामतः ।
आचार्य्यकुण्डं मध्ये स्याद्गौरीपतिमहेन्द्रयोः ॥ ४९ ॥
हस्तमानमितां भूमिं पूर्ववत् परिसूत्रयेत् ।
समन्तात् कुण्डमेतत् स्याच्चतुरस्रं शुभावहम् ॥ ५० ॥

चतुर्विंशत्यङ्गुलाख्यं हस्तं तन्त्रविदो विदुः।
कर्त्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलिपर्वणः॥ ५१॥
मध्यस्य दीर्घमानेन मानाङ्गुलमुदीरितम्।
यवानामष्टभिः क्लृप्तं मानाङ्गुलमितीरितम्॥ ५२॥
चतुरस्त्रीकृतं क्षेत्रं पञ्चधा विभजेत् सुधीः।
न्यसेत् पुरस्तादेकांशं कोणार्द्धार्द्धप्रमाणतः॥ ५३॥
भ्रामयेत् कोणमानेन तथान्यदपि मन्त्रवित्।
सूत्रयुग्मं ततो दद्यात् कुण्डं योनिनिभं भवेत्॥ ५४॥
चतुरस्त्रीकृतं क्षेत्रं दशधा विभजेत् सुधीः।
एकमेकं त्यजेद्दशमध ऊर्ध्वञ्च तन्त्रवित्॥ ५५॥
ज्यासूत्रं पातयेदग्रे तन्मानाद् भ्रामयेत्ततः।
अर्द्धचन्द्रनिभं कुण्डं रमणीयमिदं भवेत्॥ ५६॥
चतुर्धा भेदिते क्षेत्रे न्यसेदुभयपार्श्वयोः।
एकैकमंशं तन्मानादग्रतो लाञ्छयेत्ततः॥ ५७॥
सूत्रत्रयं बुधः कुर्यात् त्र्यस्रं कुण्डमुदाहृतम्।
अष्टादशांशे क्षेत्रेऽशं न्यसेदेकं बहिर्बुधः॥ ५८॥
भ्रामयेत्तेन मानेन वृत्तं कुण्डमुदाहृतम्।
अष्टधा विभजेत् क्षेत्रं मध्यसूत्रस्य पार्श्वयोः॥ ५९॥
भागं न्यसेदेकमेकं मानेनानेन मध्यतः।
कुर्यात् पार्श्वयुगे मत्स्यचतुष्कं तन्त्रवित्तमः॥ ६०॥
सूत्रषट्कं ततो दद्यात् षडस्रं कुण्डमुत्तमम्।
चतुरस्त्रीकृतं क्षेत्रं विभज्याष्टादशांशतः॥ ६१॥
एकं भागं बहिर्न्यस्य भ्रामयेत्तेन वर्त्तुलम्।
वृत्तानि कर्णिकादीनां बहिस्त्रीणि प्रकल्पयेत्॥ ६२॥
पद्मकुण्डमिदं प्रोक्तं विलोचनमनोहरम्।
पूर्वोक्तं विभजेत् क्षेत्रं चतुर्विंशतिभागतः॥ ६३॥

एकं भागं बहिर्न्यस्य चतुरस्रं प्रकल्पयेत्।
अन्तःस्थचतुरस्रस्य कोणार्द्धार्द्धप्रमाणतः॥ ६४॥
बाह्यस्य चतुरस्रस्य कोणाभ्यां परिलाञ्छयेत्।
दिशं प्रति यथान्यायमष्टौ सूत्राणि पातयेत्॥ ६५॥
अष्टास्रं खण्डमेतद्धि तन्त्रविद्भिरुदाहृतम्।
यावान् कुण्डस्य विस्तारः खननं तावदेव हि॥ ६६॥
कुण्डानां यादृशं रूपं मेखलानाञ्च तादृशम्।
कुण्डानां मेखलास्तिस्रो मुष्टिमात्रे तु ताः क्रमात्॥६७॥
उत्सेधायामतो ज्ञेयास्त्वेकार्द्धाङ्गुलसम्मिताः।
अरत्निमात्रे कुण्डे स्युस्तास्त्रिद्व्येकाङ्गुलात्मिकाः॥ ६८॥
एता हस्तमिते कुण्डे वेदाग्निनयनाङ्गुलाः।
मेखलानां भवेदन्तः परितो नेमिरङ्गुलाः॥ ६९॥
एकहस्तस्य कुण्डस्य वर्द्धयेत्तां क्रमात् सुधीः।
दशहस्तान्तमन्येषामर्द्धाङ्गुलवशात् पृथक्॥ ७०॥
कुण्डे द्विहस्ते ता ज्ञेया रसवेदगुणाङ्गुलाः।
चतुर्हस्ते तु कुण्डे ता वसुतर्कयुगाङ्गुलाः॥ ७१॥
कुण्डे रसकरे ताः स्युर्दशाष्टत्वङ्गुलान्विताः।
वसुहस्तमिते कुण्डे भानुपंक्त्यष्टकाङ्गुलाः॥ ७२॥
दशहस्तमिते कुण्डे मनुभानुदशाङ्गुलाः।
विस्तारोत्सेधतो ज्ञेया मेखलाः सर्वतो बुधैः॥ ७३॥
होतुरग्रे योनिराशावुपर्य्यश्वत्थपत्रवत्।
अष्टारत्न्येकहस्तानां कुण्डानां योनिरीरिता॥ ७४॥
षट्चतुर्द्व्यङ्गुलायामविस्तारोन्नतिशालिनी।
एकाङ्गुलन्तु योन्यग्रं कुर्य्यादीषदधोमुखम्॥ ७५॥
एकैकाङ्गुलतो योनिं कुण्डेष्वन्येषु वर्द्धयेत्।
यवद्वयक्रमेणैव योन्यग्रमपि वर्द्धयेत्॥ ७६॥

स्थलादारभ्य नालं स्याद् योन्या मध्ये सरन्ध्रकम्।
नार्पयेत् कुण्डकोणेषु योनिं तां तन्त्रवित्तमः॥ ७७॥
कुण्डानां कल्पयेदन्तर्नाभिमम्बुजसन्निभम्।
मत्तत्कुण्डानि रूपं वा नालमस्य निगद्यते॥ ७८॥
अष्टारलं कहस्तानां नाभिरुत्सेधतारतः।
नेत्रवेदाङ्गुलोपेता कुण्डेष्वन्येषु वर्द्धयेत्॥ ७९॥
यवद्दयक्रमेणैव नाभिं पृथगुदारधीः।
योनिकुण्डे योनिमब्जकुण्डे नाभिं विवर्जयेत्॥ ८०॥
नाभिक्षेत्रं त्रिधा कृत्वा मध्ये कुर्वीत कर्णिकाम्।
बहिरंशद्वयेनाष्टौ पत्राणि परिकल्पयेत्॥ ८१॥
मुष्टिमात्रमितं कुण्डं शतार्द्धे संप्रचक्ष्यते।
शतहोमेऽरत्निमात्रं हस्तमात्रं सहस्रके॥ ८२॥
द्विहस्तमयुतेन स्याच्चतुर्हस्तमुदीरितम्।
दशलक्षेषु षड्हस्तं कोट्यामष्टकरं स्मृतम्॥ ८३॥
एकहस्तमितं कुण्डमेकलक्षे विधीयते।
लक्षाणां दशकं यावत्तावद्धस्तेन वर्द्धयेत्॥ ८४॥
दशहस्तमितं कुण्डं कोटिहोमेऽपि शस्यते।
सर्वसिद्धिकरं कुण्डं चतुरस्रमुदाहृतम्॥ ८५॥
पुत्रप्रदं योनिकुण्डमर्द्धेन्द्वाभं शुभप्रदम्।
शत्रुक्षयकरं त्र्यस्रं वर्त्तुलं शान्तिकर्मणि॥ ८६॥
छेदमारणयोः कुण्डं षडस्रं पद्मसन्निभम्।
पुष्टिदं रोगशमनं कुण्डमष्टास्रमीरितम्॥ ८७॥
विप्राणां चतुरस्रं स्याद्राज्ञां वर्त्तुलमिष्यते।
वैश्यानामर्द्धचन्द्राभं शूद्राणां त्र्यस्रमीरितम्॥ ८८॥
चतुरस्रन्तु सर्वेषां केचिदिच्छन्ति तान्त्रिकाः।
कुण्डस्य रूपं जानीयात् परमं प्रकृतेर्वपुः॥ ८९॥

प्राच्यां शिरः समाख्यातं बाहू दक्षिणसौम्ययोः ।
उदरं कुण्डमित्युक्तं योनिः पादौ तु पश्चिमे ॥ ९० ॥
नित्यं नैमित्तिकं काम्यं स्थण्डिले वा समाचरेत् ।
हस्तमात्रेण तत् कुर्य्यात् वालुकाभिः सुशोभनम् ॥ ९१ ॥
अङ्गुलोत्सेधसंयुक्तं चतुरस्रं समन्ततः ।
एवं प्रोक्तानि कुण्डानि कल्पयेत् स्रुक्स्रुवौ ततः ॥ ९२ ॥
प्रकल्पयेत् स्रुचं यानि वक्ष्यमाणेन वर्त्मना ।
श्रीपर्णी सिंशपाक्षीरशाखिष्वेकतमं गुरुः ॥ ९३ ॥
गृहीत्वा विभजेद्धस्तमात्रं षट्त्रिंशता पुनः ।
विंशत्यंशैर्भवेत् कुण्डे वेदी तैरष्टभिर्भवेत् ॥ ९४ ॥
एकांशेन मितः कण्ठः सप्तभागमितं मुखम् ।
वेदीत्र्यंशेन विस्तारः कण्ठस्य परिकीर्त्तितः ॥ ९५ ॥
मुखं कण्ठसमानं स्यान्मुखे मार्गं प्रकल्पयेत् ।
कनिष्ठाङ्गुलिमानेन सर्पिषो निर्गमाय च ॥ ९६ ॥
वेदीमध्ये विधातव्या भागेनैकेन कर्णिका ।
विदधीत बहिस्तस्या एकांशेनाभितो वटम् ॥ ९७ ॥
तस्य खातं त्रिभिर्भागैर्वृत्तमर्द्धांशतो बहिः ।
अंशेनैकेन परितो दलानि परिकल्पयेत् ॥ ९८ ॥
मेखला मुखवेद्योः स्यात् परितोऽर्द्धांशमानतः ।
दण्डमूलाग्रयोः कुम्भौ गुणवेदाङ्गुलैः क्रमात् ॥ ९९ ॥
गण्डीयुगं यमांशैः स्यात् कुण्डस्थानाह ईरितः ।
षड्भिरंशैः पृष्ठभागो वेद्याः कूर्माकृतिर्भवेत् ॥ १०० ॥
हंसस्य हस्तिनो वापि पोत्रिणो वा मुखं लिखेत् ।
मुखस्य पृष्ठभागेऽस्याः संप्रोक्तं लक्षणं स्रुचः ॥ १०१ ॥
स्रुचश्चतुर्विंशतिभिर्भागैराचरयेत् स्रुवम् ।
द्वाविंशत्या दण्डमानमंशैरेतस्य कीर्त्तितम् ॥ १०२ ॥

चतुर्भिरंशैरानाह: कर्णादग्राह्निश्छिर:।
अंशद्वयेन निखनेत् पङ्क मृगपदाकृतिम् ॥१०३॥
दण्डमूलाग्रयोर्गत्ती भवेत् कङ्कमभूषिता।
सुवश्च विधिराख्यात: कोर्श्यन्ते मण्डलान्यथ ॥ १०४ ॥
चतुरस्र चतु:कोष्ठे कर्णसूत्रसमन्विते।
चतुर्ष्वपि च कोष्ठेषु कोणसूत्रचतुष्टयम् ॥ १०५ ॥
मध्ये मध्ये यथा मत्स्या भवेयु: पातयेत्तथा।
पूर्वापरायते द्वे द्वे मन्त्री याम्योत्तरायते ॥ १०६ ॥
पातयेत् तेषु मत्स्येषु समं सूत्रचतुष्टयम्।
पूर्ववत् कोणकोष्ठेषु कर्णसूत्राणि पातयेत् ॥ १०७ ॥
यावच्छतद्वयं मन्त्री षट्पञ्चाशत् पदान्यपि।
तावत् तेनैव विधिना तत्र सूत्राणि पातयेत् ॥ १०८ ॥
षट्त्रिंशता पदैर्मध्ये लिखेत पद्मं सुलक्षणम्।
बहि: पङ्क्त्या भवेत् पीठं पङ्क्तियुग्मेन वीथिका ॥१०९॥
द्वारशोभोपशोभास्रान् शिष्टाभ्यां परिकल्पयेत्।
शास्त्रोक्तविधिना मन्त्री तत: पद्मं समालिखेत् ॥ ११० ॥
96243
पद्मक्षेत्रस्य संत्यज्य द्वादशांशं बहि: सुधी:।
तन्मध्यं विभजेद् वृत्तैस्त्रिभि: समविभागत: ॥ १११ ॥
आद्यं स्यात् कर्णिकास्थानं केशराणां द्वितीयकम्।
तृतीयं तत्र पत्राणां मुक्तांशेन दलाग्रकम् ॥ ११२ ॥
बाह्यवृत्तान्तरालस्य मानेन विधिना सुधी:।
निधाय केशराग्रेषु परितोऽष्ट निशाकरान् ॥ ११३ ॥
लिखित्वा सन्धिसंस्थानि तत्र सूत्राणि पातयेत्।
दलाग्राणाञ्च यन्मानं तन्मानं वृत्तमालिखेत् ॥ ११४ ॥
तदन्तरालं तन्मध्यसूत्रस्योभयत: सुधी:।
आलिखेद् बाह्यहस्तेन दलाग्राणि समन्तत: ॥ ११५ ॥

दलमूलेषु क्रमशः केशराणि प्रकल्पयेत्।
एतत् साधारणं प्रोक्तं पङ्कजं तन्त्रवेदिभिः॥ ११६॥
पदानि त्रीणि पादार्थं पीठकोणेषु मार्जयेत्।
अवशिष्टैः पदैर्विद्वान् पीठगात्राणि कल्पयेत्॥ ११७॥
पदानि वीथीसंस्थानि मार्जयेत् पङ्क्तिभेदतः।
दिक्षु द्वाराणि रचयेत् द्विचतुष्कोष्ठकैस्ततः॥ ११८॥
पदैस्त्रिभिरथैकेन शोभाः स्युर्द्वारपार्श्वयोः।
उपशोभाः स्युरेकेन त्रिभिः कोष्ठैरनन्तरम्॥ ११९॥
अवशिष्टैः पदैः षड्भिः कोणानां स्याच्चतुष्टयम्।
रञ्जयेत् पञ्चभिर्वर्णैर्मण्डलं तन्मनोहरम्॥ १२०॥
पीतं हरिद्राचूर्णं स्यात् सितं तण्डुलसम्भवम्।
कुसुम्भचूर्णमरुणं कृष्णं दग्धपुलाकजम्॥ १२१॥
विल्वादिपत्रजं श्याममित्युक्तं वर्णपञ्चकम्।
अङ्गुलोत्सेधविस्तारा सीमारेखाः सिताः शुभाः॥ १२२॥
कर्णिकां पीतवर्णेन केशराण्यरुणेन च।
शुभ्रवर्णेन पत्राणि तत्सन्धीन् श्यामलेन च॥ १२३॥
रजसा रञ्जयेन्मन्त्री यद्वा पीतैव कर्णिका।
केशराः पीतरक्ताः स्युररुणानि दलान्यपि॥ १२४॥
सन्धयः कृष्णवर्णाश्च सितेनाप्यसितेन वा।
रञ्जयेत् पीठगर्भाणि पादाः स्युररुणप्रभाः॥ १२५॥
गात्राणि तस्य शुक्लानि वीथीषु चतसृष्वपि।
आलिखेत् कल्पलतिका दलपुष्पफलान्विताः॥ १२६॥
वर्णैर्नानाविधैश्चित्राः सर्वदृष्टिमनोहराः।
द्वाराणि श्वेतवर्णानि शोभा रक्ताः समीरिताः॥ १२७॥
उपशोभाः पीतवर्णाः कोणान्यसितभानि च।
तिस्रो रेखा बहिः कुर्य्यात् सितरक्तासिताः क्रमात्॥१२८॥

मण्डलं सर्वतोभद्रमेतत् साधारणं स्मृतम्।
चतुरस्रां भुवं भित्त्वा दिग्भ्यो द्वादशधा सुधीः ॥ १२९ ॥
पातयेत्तत्र सूत्राणि कोष्ठानां दृश्यते शतम्।
चतुश्चत्वारिंशताब्जं पश्चात् षट्त्रिंशताम्बुजम् ॥ १३० ॥
कोष्ठैः प्रकल्पयेत् पीठं पङ्क्त्या चैवात्र वीथिकाः।
द्वारशोभे यथा पूर्वमुपशोभा न दृश्यते ॥ १३१ ॥
अवशिष्टैः पदैः कुर्य्यात् षड्भिः कोणानि तन्त्रवित्।
विदध्यात् पूर्ववच्चैवमेवं वा मण्डलं स्मृतम् ॥ १३२ ॥
चतुरस्रे चतुःषष्टिपदान्यारचयेत् सुधीः।
पदैश्चतुर्भिः पद्मं स्यान्मध्ये तत्परितः पुनः ॥ १३३ ॥
वीथीश्चतस्रः कुर्वीत मण्डलान्तावसानिकाः।
दिग्गतेषु चतुष्केषु पङ्कजानि समालिखेत् ॥ १३४ ॥
विदिग्गतचतुष्काणि भित्त्वा षोड़शधा सुधीः।
मार्जयेत् स्वस्तिकाकारं श्वेतपीतारुणासितैः ॥ १३५ ॥
रजोभिः पूरयेत्तानि स्वस्तिकानि शिवादितः।
प्राक्प्रोक्तेनैव मार्गेण शेषमन्यत् समापयेत् ॥ १३६ ॥
नवनाभमिदं प्रोक्तं मण्डलं सर्वसिद्धिदम्।
पञ्चाब्जमण्डलं प्रोक्तमेतत् स्वस्तिकवर्जितम् ॥ १३७ ॥
दीक्षायां देवपूजार्थं मण्डलानां चतुष्टयम्।
सर्वतन्त्रानुसारेण प्रोक्तं सर्वसमृद्धिदम् ॥ १३८ ॥
इति श्रीशारदातिलके महातन्त्रराजे दीक्षाङ्गं नाम
96243
तृतीयः पटलः ॥

---

## चतुर्थः पटलः।

अथ दीक्षां प्रवक्ष्यामि मन्त्रिणां हितकाम्यया।
विनानया न लभ्येत सर्वमन्त्रफलं यतः ॥ १ ॥

ज्ञानं दिव्यं यतो दद्यात् कुर्य्यात् पापक्षयं यतः ।
तस्माद्दीक्षेति सा प्रोक्ता देशिकैस्तत्त्ववेदिभिः ॥ २ ॥
चतुर्विधा सा सन्दिष्टा क्रियावत्यादिभेदतः ।
क्रियावती वर्णमयी कलात्मा वेधमय्यपि ॥ ३ ॥
ताः क्रमेणैव कथ्यन्ते तन्त्रेऽस्मिन् सम्पदावहाः ।
देशिको विधिवत् स्नात्वा कृत्वा पौर्वाह्णिकीः क्रियाः ॥४॥
यागादलङ्कृतो मौनी यागार्थं यागमण्डलम् ।
आचम्य विधिवत्तत्र सामान्यार्घ्यं विधाय च ॥ ५ ॥
द्वारं मन्त्राम्बुभिः प्रोक्ष्य द्वारपूजां समाचरेत् ।
ऊर्ध्वोडुम्बरके विघ्नं महालक्ष्मीं सरस्वतीम् ॥ ६ ॥
ततो दक्षिणशाखायां विघ्नं क्षेत्रेशमन्यतः ।
तयोः पार्श्वगता गङ्गा यमुना पुष्पवारिभिः ॥ ७ ॥
देहल्यामर्चयेदस्त्रं प्रतिद्वारमिति क्रमात् ।
अनन्तरं देशिकेन्द्रो दिव्यदृष्ट्यवलोकनात् ॥ ८ ॥
दिव्यानुत्सारयेद् विघ्नानस्त्रादिभ्यश्चान्तरीक्षगान् ।
पार्ष्णिघातैस्त्रिभिर्भौमानिति विघ्नान्निवारयेत् ॥ ९ ॥
किञ्चित् स्पृशन् वामशाखां देहलीं लङ्घयेद् गुरुः ।
अङ्गं सङ्कोचयन्नन्तः प्रविशेद्दक्षिणाङ्घ्रिणा ॥ १० ॥
नैरृत्यां दिशि वास्त्वीशं ब्रह्माणञ्च समर्चयेत् ।
पञ्चगव्यार्घ्यतोयाभ्यां प्रोक्षयेद् यागमण्डपम् ॥ ११ ॥
चतुःपथान्तं तच्छुद्धिं विदध्याद् वीक्षणादिभिः ।
वीक्षणं मूलमन्त्रेण मारेण प्रोक्षणं मतम् ॥ १२ ॥
चन्दनागुरुकर्पूरैर्धूपयेदन्तरं सुधीः ।
विकिरान् विकिरेत्तत्र सप्तजप्तान् शरात्मना ॥ १३ ॥
लाजचन्दनसिद्धार्थभस्मदूर्वाकुशाक्षताः ।
विकिरा इति सन्दिष्टाः सर्वविघ्नौघनाशनाः ॥ १४ ॥

अस्त्रजप्तेन दर्भाणां मुष्टिना मार्जयेच्छतान् ।
ईशस्य दिशि वर्द्धन्या आसनाय प्रकल्पयेत् ॥ १५ ॥
पुण्याहं वाचयित्वा च ब्राह्मणान् परितोष्य च ।
उक्तेषु मण्डलेष्वेकं वेदिकायां समालिखेत् ॥ १६ ॥
विशेन्मृटासने मन्त्री प्राङ्मुखो वाप्युदङ्मुखः ।
बद्धपद्मासनो मौनी समाहितजितेन्द्रियः ॥ १७ ॥
स्थापयेद्दक्षिणे भागे पूजाद्रव्याणि देशिकः ।
सुवासिताम्बुसम्पूर्णं सव्ये कुम्भं सुशोभनम् ॥ १८ ॥
प्रक्षालनाय करयोः पात्रं पश्चान्निवेशयेत् ।
घृतप्रज्वलितान् दीपान् स्थापयेत् परितः शुभान् ॥ १९ ॥
दर्पणं चामरं छत्रं तालवृन्तं मनोहरम् ।
मङ्गलं कुलपात्राणि स्थापयेद्दक्षु देशिकः ॥ २० ॥
कृताञ्जलिपुटो भूत्वा वामदक्षिणपार्श्वयोः ।
नत्वा गुरुं गणेशानं भूतशुद्धिमथाचरेत् ॥ २१ ॥
करशुद्धिं समासाद्य कुर्यात्तालत्रयं ततः ।
ऊर्ध्वोर्ध्वमस्त्रमन्त्रेण दिग्बन्धमपि देशिकः ॥ २२ ॥
तेन मन्त्रनितं तेजोरक्षां कुर्यात् समन्ततः ।
सुषुम्नावर्त्मनात्मानं परमात्मनि योजयेत् ॥ २३ ॥
योगयुक्तेन विधिना चिन्मन्त्रेण समाहितः ।
कारणे सर्वभूतानां तत्त्वान्यपि विचिन्तयेत् ॥ २४ ॥
बीजभावेन लीनानि व्युत्क्रमात् परमात्मनि ।
ततः संशोधयेद् देहं वायुबीजेन वायुना ॥ २५ ॥
वह्निबीजेन तेनैव सन्दहेत् सकलां तनुम् ।
विशोषयंस्तदा दोषानमृतो नामृताम्भसा ॥ २६ ॥
आपाद्य प्लावयेद् देहमापादतलमस्तकम् ।
आत्मलीनानि तत्त्वानि स्वस्थानं प्रापयेत्तदा ॥ २७ ॥

आत्मानं हृदयाम्भोजे आनयेत् परमात्मनः ।
मनुना हंसदेवस्य कुर्य्यान्न्यासादिकं ततः ॥ २८ ॥
ऋषिश्छन्दो दैवतानि अस्य मन्त्रस्य मन्त्रवित् ।
आत्मनो मूर्ध्नि वदने हृदये च यथाक्रमात् ॥ २९ ॥
विधाय मूलमन्त्रेण प्राणायामं यथाविधि ।
विदध्यान्मातृकान्यासं मन्त्रन्यासमनन्तरम् ॥ ३० ॥
अङ्गुष्ठादिष्वङ्गुलीषु न्यसेदङ्गैः सजातिभिः ।
अस्त्रं तत्तलयोर्न्यस्य कुर्य्यात्तालत्रयं ततः ॥ ३१ ॥
दिशस्तेनैव बध्नीयाच्छोटिकाभिः समाहितः ।
हृदयादिषु विन्यसेदङ्गमन्त्रांस्ततः सुधीः ॥ ३२ ॥
हृदयाय नमः पूर्वं शिरसे वह्निवल्लभा ।
शिखायै वषडित्युक्तं कवचाय हुमीरितम् ॥ ३३ ॥
नेत्रत्रयाय वौषट् स्यादस्त्राय फडिति क्रमात् ।
षडङ्गमन्त्रानित्युक्ता षडङ्गेषु नियोजयेत् ॥ ३४ ॥
पञ्चाङ्गानि मनोर्यस्य तत्र नेत्रमनुं त्यजेत् ।
अङ्गहीनस्य मन्त्रस्य नेवाङ्गानि च कल्पयेत् ॥ ३५ ॥
तत्तत्कल्पोक्तविधिना न्यासानन्यान् समाचरेत् ।
कल्पयेदात्मनो देहे पीठं धर्मादिभिः क्रमात् ॥ ३६ ॥
अंशोरुयुग्मयोर्विद्वान् प्रादक्षिण्येन देशिकः ।
धर्मं ज्ञानं सवैराग्यमैश्वर्य्यं न्यस्य तु क्रमात् ॥ ३७ ॥
मुखपार्श्वनाभिपार्श्वेष्वधर्मादीन् प्रकल्पयेत् ।
धर्मादयः स्मृताः पादाः पीठमात्राणि चापरे ॥ ३८ ॥
अनन्तं हृदये पद्ममस्मिन् सूर्य्येन्दुपावकान् ।
एषु स्वस्वकलान् न्यस्य आमाद्यक्षरपूर्वकान् ॥ ३९ ॥
सत्त्वादींस्त्रीन् पुनर्न्यस्य तथैवात्र गुरूत्तमः ।
आत्मानमन्तरात्मानं परमात्मानमेव तु ॥ ४० ॥

आनात्मानं प्रविन्यस्य न्यसेत् पीठमनुं ततः ।
एवं देहमये पीठे चिन्तयेदिष्टदेवतम् ॥ ४१ ॥
मुद्राः प्रदर्श्य विधिवदर्घ्यस्थापनमाचरेत् ।
शङ्खमस्त्राम्भसा प्रोक्ष्य वामतो वह्निमण्डले ॥ ४२ ॥
नाधारं स्थापयेद्विद्वान् विन्दुस्रुतसुधामयैः ।
तोयैः सुगन्धिपुष्पाद्यैः पूरयेत्तत् यथाविधि ॥ ४३ ॥
आधारं पावकं शङ्खं सूर्य्यं तोयं सुधाकरम् ।
स्मरेद् वह्न्यर्कचन्द्राणां कलास्तास्तेष्वनुक्रमात् ॥ ४४ ॥
मूलमन्त्रं जपेत् स्पृष्ट्वा न्यसेत्तस्याङ्गमङ्गवित् ।
हृन्मन्त्रेणाभिसंपूज्य हस्ताभ्यां छादयन्नपः ॥ ४५ ॥
जपेद्विद्यां यथान्यायं देशिको देवताधिया ।
अस्त्रमन्त्रेण संरक्ष्य कवचेनावगुण्ठ्य च ॥ ४६ ॥
धेनुमुद्रां समासाद्य बोधयेत्तत् स्वमुद्रया ।
दक्षिणे प्रोक्षणीपात्रमाधायाद्भिः प्रपूरयेत् ॥ ४७ ॥
किञ्चिदर्घ्यादि संगृह्य प्रोक्षण्यम्भसि योजयेत् ।
अर्घ्यस्योत्तरतः कार्य्यं पाद्यमाचमनीयकम् ॥ ४८ ॥
आत्मानं यागवस्तूनि मण्डपं प्रोक्षयेद् गुरुः ।
प्रोक्षणीपात्रतोयेन मनुनान्यान्यपि क्रमात् ॥ ४९ ॥
न्यासक्रमेण देहेष्वधर्मादीन् पूजयेत्ततः ।
पुष्पाद्यैः पीठमन्त्रान्तं तस्मिंश्च परदेवताम् ॥ ५० ॥
पञ्चकृत्तः पुनः कुर्य्यात् पुष्पाञ्जलिमनन्यधीः ।
उत्तमाङ्गहृदाधारपादसर्वाङ्गके क्रमात् ॥ ५१ ॥
विना नैवेद्यं गन्धाद्यैरुपचारैः समर्चयेत् ।
गुरूपदिष्टविधिना शेषमन्यत् समापयेत् ॥ ५२ ॥
सर्वमेतत् प्रयुञ्जीत प्रोक्षणीस्थेन वारिणा ।
विसृज्य तोयं प्रोक्षण्याः पूरयेत्तां यथा पुरा ॥ ५३ ॥

ततस्तन्मण्डलं मन्त्री गन्धाद्यैः साधु पूजयेत्।
शालिभिः कर्णिकामध्यमापूर्य्योपरि तण्डुलैः ॥ ५४ ॥
अलङ्कृत्य पुनस्तेषु दर्भानास्तीर्य्य मन्त्रवित्।
कूर्च्चमक्षतसंयुक्तं न्यसेत्तेषामथोपरि ॥ ५५ ॥
आधारशक्तिमारभ्य पीठं मन्त्रमयं यजेत्।
अधः कूर्म्मशिलाधारां शरच्चन्द्रनिभप्रभाम् ॥ ५६ ॥
आधारशक्तिं प्रयजेत् पङ्कजद्वयधारिणीम्।
मूर्ध्नि तस्याः समासीनं कूर्म्मं नीलाभमर्च्चयेत् ॥ ५७ ॥
ऊर्द्ध्वं ब्रह्मशिलासीनमनन्तं कुन्दसन्निभम्।
यजेच्चक्रधरं मूर्ध्नि धारयन्तं वसुन्धराम् ॥ ५८ ॥
तमालश्यामलं तत्र नीलेन्दीवरधारिणीम्।
अभ्यर्च्चयेद्वसुमतीं स्फुरत्सागरमेखलाम् ॥ ५९ ॥
तस्यां रत्नमयं द्वीपं तस्मिंश्च मणिमण्डपम्।
यजेत् कल्पतरूंस्तस्मिन् साधकाभीष्टसिद्धिदान् ॥ ६० ॥
अधस्तात् पूजयेत् तेषां वेदिकां मण्डलोज्ज्वलाम्।
पश्चादभ्यर्च्चयेत्तस्यां पीठं धर्म्मादिभिः पुनः ॥ ६१ ॥
रक्तश्यामहरिद्रेन्द्रनीलाभान् पादरूपिणः।
वृषकेशविभूतिभरूपान् धर्म्मादिकान् यजेत् ॥ ६२ ॥
गात्रेषु पूजयेत्तांस्तु नञ्पूर्वानुक्तलक्षणान्।
आग्नेयादिषु कोणेषु दिक्षु चाथाम्बुजं यजेत् ॥ ६३ ॥
आनन्दकन्दप्रथमं संविन्नालमनन्तरम्।
सर्वतत्त्वात्मकं पद्ममभ्यर्च्चेत्तदनन्तरम् ॥ ६४ ॥
मन्त्री प्रकृतिपत्राणि विकारमयकेशरान्।
पञ्चाशद्वर्णबीजाढ्यां कर्णिकाञ्च यजेत्ततः ॥ ६५ ॥
कलाभिः पूजयेत् सार्द्धं तस्यां सूर्य्येन्दुपावकान्।
प्रणवस्य त्रिभिर्वर्णैरथ सत्त्वादिकान् गुणान् ॥ ६६ ॥

आत्मानमन्तरात्मानं परमात्मानमर्चयेत् ।
ज्ञानात्मानञ्च विधिवत् पीठमन्त्रावसानकम् ॥ ६७ ॥
पीठशक्तीः केशरेषु मध्ये च सवराभयाः ।
हेमादिरचितं कुम्भमस्त्राद्भिः क्षालितान्तरम् ॥ ६८ ॥
चन्दनागुरुकर्पूरधूपितं शोभनाकृतिम् ।
आवेष्टिताङ्गं नीरन्ध्रं तन्तुना त्रिगुणात्मना ॥ ६९ ॥
अर्चितं गन्धपुष्पाद्यैः कूर्चाक्षतसमन्वितम् ।
नवरत्नोदरं मन्त्री स्थापयेत् तारमुच्चरन् ॥ ७० ॥
ऐक्यं सङ्कल्प्य पीठस्य कुम्भस्य च विधानवित् ।
क्षीरद्रुमकषायेण पलाशत्वग्भवेन वा ॥ ७१ ॥
तीर्थोदकैर्वा कर्पूरगन्धपुष्पसुवासितैः ।
आत्माभेदेन विधिवन्मातृकां प्रतिलोमतः ॥ ७२ ॥
जपन्मूलमनुं तद्वत् पूरयेद् देवताधिया ।
शङ्खे वायाम्बुसम्पूर्णे गन्धाष्टकमभीष्टकम् ॥ ७३ ॥
विलोड्य पूजयेत्तस्मिन्नावाह्य सकलाः कलाः ।
दश वह्नेः कलाः पूर्वं द्वादश द्वादशात्मनः ॥ ७४ ॥
कलाः षोडशसोमस्य पश्चात् पञ्चशतं कलाः ।
जपित्वा प्रतिलोमेन मूलमन्त्रञ्च मन्त्रवित् ॥ ७५ ॥
समालिङ्गेन मनसा ध्यायन्मन्त्रस्य देवताम् ।
प्राणप्रतिष्ठां कुर्वीत तत्र तत्र विचक्षणः ॥ ७६ ॥
कलात्मकं शङ्खसंस्थं वाथ कुम्भे विनिःक्षिपेत् ।
गन्धाष्टकं त्रिविधं शक्तिविष्णुशिवात्मकम् ॥ ७७ ॥
चन्दनागुरुह्रीवेरकुष्ठकुङ्कुमसैव्यकाः ।
जटामांसीदर्यमिति विष्णोर्गन्धाष्टकं विदुः ॥ ७८ ॥
चन्दनागुरुकर्पूरचोरकुङ्कुमरोचनाः ।
जटामांसीकपिव्यञ्च शक्तेर्गन्धाष्टकं विदुः ॥ ७९ ॥

चन्दनागुरुकर्पूरतमालजलकुङ्कुमम्।
कुशोद कुष्ठसंयुक्तं शैवं गन्धाष्टकं विदुः ॥ ८० ॥
पाशादित्रयबराणान्ते स्यादमुष्य पदं पुनः।
क्रमात् प्राणा इह प्राणास्तथा जीव इह स्थितः ॥ ८१ ॥
अमुष्य सर्वेन्द्रियाणि भूयोऽमुष्य पदं भवेत्।
वाङ्मनोनयनश्रोत्रघ्राणप्राणपदान्यथ ॥ ८२ ॥
पश्चादिहागत्य सुखं चिरं तिष्ठन्तु ठद्वयम्।
अयं प्राणमनुः प्रोक्तः सर्वजीवप्रदायकः ॥ ८३ ॥
पश्चादस्त्यपनमचूतकोमलपल्लवैः।
इन्द्रवल्लीसमाबद्धैः सुरद्रुमधिया गुरुः ॥ ८४ ॥
कुम्भवक्त्रं पिधायास्मिन् चषकं सफलाक्षतम्।
संस्थापयेत् फलधिया विधिवत् कल्पशाखिनाम् ॥ ८५ ॥
ततः कुम्भं निर्मलेन चौमयुग्मेन वेष्टयेत्।
मूलेन मूर्त्तिः क्लृप्तास्मिन् छायायां कल्पशाखिनाम् ॥८६॥
आवाह्य पूजयेत्तस्यां मन्त्री मन्त्रस्य देवताम्।
मूलमन्त्रं समुच्चार्य्य सुषुम्नावर्त्मना सुधीः ॥ ८५ ॥
आनीय तेजः स्वस्थानान्नासिकारन्ध्रनिर्गतम्।
करस्थमाटकाम्भोजे चैतन्यं पुष्पसञ्चये ॥ ८६ ॥
संयोज्य ब्रह्मरन्ध्रेण मूर्त्तिमावाहयेत् सुधीः।
संस्थापनं सन्निधानं सन्निरोधमतः परम् ॥ ८७ ॥
सकलीकरणं पश्चाद्विदध्यादवगुण्ठनम्।
अमृतीकरणं कृत्वा कुर्वीत परमौकृतम् ॥ ८८ ॥
क्रमादेतानि कुर्वीत स्वमुद्राभिः समाहितः।
अथोपचारान् कुर्वीत मन्त्रवित् स्वागतादिकान् ॥ ८९ ॥
स्वागतं कुशलप्रश्नं निगदेदग्रतो गुरुः।
पाद्यं पादाम्बुजे दद्याद् देवस्य हृदयामुना ॥ ९० ॥

एतच्छ्यामाकदूर्वा च विष्णुक्रान्ताभिरीरितम्।
सुधामन्त्रेण वदने दद्यादाचमनीयकम् ॥ ९१ ॥
जातीलवङ्गकक्कोलैस्तदुक्तं तन्त्रवेदिभिः।
अर्घ्यं दिशेत्ततो मूर्ध्नि शिरोमन्त्रेण देशिकः ॥ ९२ ॥
गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः।
सदूर्वैः सर्वदेवानामेतदर्घ्यमुदीरितम् ॥ ९३ ॥
सुधामनुं ततः कुर्यान्मधुपर्कं मुखाम्बुजे।
आज्यं दधिमधून्मिश्रमेतदुक्तं मनीषिभिः ॥ ९४ ॥
तेनैव मनुना कुर्यादङ्गिराचमनीयकम्।
गन्धाद्भिः कारयेत् स्नानं वाससी परिधापयेत् ॥ ९५ ॥
दद्याद्दिव्योपवीतञ्च हाराद्याभरणैः सह।
न्यासक्रमेण मनुना पुटितैर्मातृकाक्षरैः ॥ ९६ ॥
अभ्यर्च्य देवं गन्धाद्यैरङ्गादीन् पुनरर्चयेत्।
गन्धश्चन्दनकर्पूरकालागुरुभिरीरितः ॥ ९७ ॥
कमले करवीरे द्वे कुमुदे तुलसीद्वयम्।
जातीद्वयं केतके द्वे कह्लारं चम्पकोत्पले ॥ ९८ ॥
कुन्दमन्दारपुन्नागपाटलानागचम्पकम्।
आरग्वधं कर्णिकारं पावन्ती नवमालिका ॥ ९९ ॥
सौगन्धिकं सकोरण्टं पलाशाशोकमल्लिकाः।
धुस्तूरं सर्जकं बिल्वमर्जुनं मुनिपुष्पकम् ॥ १०० ॥
अन्यान्यपि सुगन्धीनि पुष्पपत्राणि देशिकैः।
उपदिष्टानि पूजायामाददीत विचक्षणः ॥ १०१ ॥
मलिनं भूमिसंस्पृष्टं क्रिमिकेशादिदूषितम्।
अङ्गसंस्पृष्टमाघ्रातं त्यजेत् पर्युषितं गुरुः ॥ १०२ ॥
देवस्य मस्तकं कुर्यात् कुसुमोपहितं सदा।
पूजाकाले देवताया नोपरि भ्रामयेत् करम् ॥ १०३ ॥

अगुरुक्षीरगुग्गुलुशर्करामधुचन्दनैः ।
धूपयेदाज्यसंमिश्रैर्नीचैर्देवस्य देशिकः ॥ १०४ ॥
वर्त्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा ।
आरोप्य दर्शयेद्दीपानुच्चैः सौरभशालिनः ॥ १०५ ॥
स्वादूपदंशं विमलं पायसं सहशर्करम् ।
कदलीफलसंयुक्तमाज्यं मन्त्री निवेदयेत् ॥ १०६ ॥
तत्र तत्र जलं दद्यादुपचारान्तरान्तरा ।
अङ्गादिलोकपालान्तं यजेदावरणान्यपि ॥ १०७ ॥
केशरेष्वग्निकोणादिहृदयादीनि पूजयेत् ।
नेत्रमग्रे दिशास्वस्त्रं ध्यातव्या अङ्गदेवताः ॥ १०८ ॥
तुषारस्फटिकश्यामनीलकृष्णारुणार्चिषः ।
वरदाभयधारिण्यः प्रधानतनवः स्त्रियः ॥ १०९ ॥
पश्चादभ्यर्चनीयाः स्युः कल्पोक्ता वृतयः क्रमात् ।
अन्ते यजेल्लोकपालान्मूलपारिषदान्वितान् ॥ ११० ॥
हेतिजात्याधिपोपेतान् दिक्षु पूर्वादितः क्रमात् ।
इन्द्रमग्निं यमं रक्षोवरुणं पवनं विधुम् ॥ १११ ॥
ईशानं पन्नगाधीशमध ऊर्ध्वं पितामहम् ।
पीतो रक्तोऽसितो धूम्रः शुक्लो धूम्रसितावुभौ ॥ ११२ ॥
गौरोऽरुणः क्रमादेते वर्णतः परिकीर्त्तिताः ।
वज्रं शक्तिं दण्डमसिं पाशमङ्कुशकं गदाम् ॥ ११३ ॥
शूलं चक्रं पद्ममेषामायुधानि क्रमाद् विदुः ।
पीतशुक्लसिताकाशविद्युद्रक्तसितासिताः ॥ ११४ ॥
करवन्दपाटलाभा वज्राद्याः परिकीर्त्तिताः ।
एवं संपूज्य विधिवन्निवेद्यान्तं ततो गुरुः ॥ ११५ ॥
दक्षिणे स्थण्डिलं कृत्वा तत्राधाय हुताशनम् ।
संस्कृत्य विधिवद्विद्वान् वैश्वदेवं समाचरेत् ॥ ११६ ॥

तत्र संपूज्य गन्धाद्यैर्देवतामुक्तविग्रहाम्।
तावद्व्याहृतिभिर्हुत्वा मूलमन्त्रेण मन्त्रवित्॥ ११७॥
सर्पिष्मता पायसेन पञ्चविंशतिसंख्यया।
हुत्वा व्याहृतिभिर्भूयो गन्धाद्यैः पुनरर्चयेत्॥ ११८॥
तां योजयित्वा पीठस्थमूर्त्तौ वह्निं विसर्जयेत्।
अवशिष्टेन हविषा विकिरेत् परितो बलिम्॥ ११९॥
देवतायाः पारिषद्भ्यो गन्धपुष्पाक्षतान्वितम्।
ततो नैवेद्यमुद्धृत्य शोधयित्वा स्थलं पुनः॥ १२०॥
पञ्चोपचारैः संपूज्य दर्शयेच्छत्रचामरे।
कर्पूरशकलोन्मिश्रं ताम्बूलं विनिवेदयेत्॥ १२१॥
सहस्रावृत्य संजप्य मूलमन्त्रमनन्यधीः।
तं जपं सर्वसम्पत्त्यै देवतायै समर्पयेत्॥ १२२॥
ततः शम्भोर्दिशि गुरुर्विकिरं पूर्वसञ्चिते।
हेमवस्त्रादिसंयुक्तां कर्करीं तोयपूरिताम्॥ १२३॥
संस्थाप्य तस्यां सिंहस्थां खड्गखेटकधारिणीम्।
घोररूपां पश्चिमास्यां पूजयेदस्त्रदेवताम्॥ १२४॥
चलासनेन संपूज्य तामादाय गुरुः पुनः।
रक्षेति लोकपालानां नालमुक्तेन वारिणा॥ १२५॥
देवाज्ञां श्रावयन्नन्तः परिवृत्य प्रदक्षिणम्।
अस्त्रमन्त्रं समुच्चार्य्य यथापूर्वं निवेशयेत्॥ १२६॥
अभ्यर्च्य भूयो गन्धाद्यैरस्त्रं तत्र स्थिरासने।
ततश्च संहृते वह्नौ गोक्षीरेण चरुं पचेत्॥ १२७॥
अस्त्रेण क्षालिते पात्रे नवे ताम्रमयादिके।
तण्डुलान् शालिसंभूतान् मूलमन्त्राभिमन्त्रितान्॥१२८॥
प्रसृतीनां पञ्चदश निक्षिप्यास्त्रमनुं जपन्।
प्रक्षाल्य पात्रवदनं पिधाय कवचाणुना॥ १२९॥

प्राङ्मुखो मूलमन्त्रेण देशिकेन्द्रश्चरुं पचेत् ।
स्रुवेणाज्येन संसिक्ते दद्यात्तस्याभिधारणम् ॥ १३० ॥
मूलेन पश्चात्तत्पात्रं कवचेनावतारयेत् ।
अस्त्रजप्ते कुशास्तीर्णे मण्डले विधिवद् गुरुः ॥ १३१ ॥
तं विभज्य त्रिधा भागमेकं देवाय कल्पयेत् ।
अन्यमग्नौ प्रजुहुयादपरं देशिकः स्वयम् ॥ १३२ ॥
शिष्येण सार्द्धं भुञ्जीत विहिताचमनः पुनः ।
आचान्तं शिष्यमानीय सकलीकृत्य देशिकः ॥ १३३ ॥
तालप्रमाणं तज्जप्तं क्षीरीवृक्षादिसम्भवम् ।
दन्तकाष्ठं ततो दद्याच्छिष्याय नियतात्मने ॥ १३४ ॥
दन्तान् विशोध्य स पुनस्तत् प्रक्षाल्य विसर्जयेत् ।
यथाविहितमाचान्तं शिखाबन्धाभिरक्षितम् ॥ १३५ ॥
विधाय सार्द्धममुना वेद्यां दर्भास्तरे गुरुः ।
शयीत तस्यां तां रात्रिमधिवासः समीरितः ॥ १३६ ॥
इति श्रीसारदातिलके चतुर्थः पटलः ॥

---

## पञ्चमः पटलः ।

ततोऽग्निजननं वक्ष्ये सर्वतन्त्रानुसारतः ।
आचार्य्यकुण्डे विधिवत् संस्कृते शास्त्रवर्त्मना ॥ १ ॥
अष्टादश स्युः संस्काराः कुण्डानां तन्त्रदर्शिताः ।
वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं मतम् ॥ २ ॥
तेनैव ताड़नं दर्भैर्वर्मणाभ्युक्षणं मतम् ।
अस्त्रेण खननोद्धारौ हृन्मन्त्रेण प्रपूरणम् ॥ ३ ॥
समीकरणमस्त्रेण सेचनं वर्मणा मतम् ।
कुट्टनं हेतिमन्त्रेण वर्ममन्त्रेण मार्जनम् ॥ ४ ॥

विलेपनं कलारूपकम्पनं तदनन्तरम् ।
त्रिसूत्रीकरणं पश्चाद्धृदयेनार्चनं मतम् ॥ ५ ॥
अस्त्रेण वज्रीकरणं छन्नमन्त्रेण कुशैः शुभैः ।
चतुःपथं तनुत्रेण तन्वया दत्तपाटनम् ॥ ६ ॥
यागे कुण्डानि संस्कुर्यात् संस्कारैरेभिरीरितैः ।
अथवा तानि सस्कुर्य्याच्चतुर्भिर्वीक्षणादिभिः ॥ ७ ॥
तिस्रस्तिस्रो लिखेद्रेखा हृदा प्रागुदगग्रकाः ।
प्रागग्राणां स्थिता देवा मुकुन्देशपुरन्दराः ॥ ८ ॥
रेखाणामुदगग्राणां ब्रह्मवैवस्वतेन्दवः ।
अथवा षट्कोणावृत्तं त्रिकोणं तत्र संलिखेत् ॥ ९ ॥
सर्वाण्यभ्युक्ष्य तारेण योगपीठमथार्चयेत् ।
वागीश्वरीमृतुस्नातां नीलेन्दीवरसन्निभाम् ॥ १० ॥
वागीश्वरेण संयुक्तामुपचारैः प्रपूजयेत् ।
सूर्य्यकान्तादिसम्भूतं यद्वा श्रोत्रियगेहजम् ॥ ११ ॥
आनीय वह्निं पात्रेण क्रव्यादंशं परित्यजेत् ।
संस्कुर्य्यात् तु यथान्यायं देशिको वीक्षणादिभिः ॥ १२ ॥
औदर्य्यवैन्दवाग्निभ्यां भौमस्यैकं स्मरन् वशी ।
योजयेद्वह्निबीजेन चैतन्यं पावकं तदा ॥ १३ ॥
तारेण मन्त्रितं मन्त्री धेनुमुद्रामृतीकृतम् ।
अस्त्रेण रक्षितं कुर्य्यात् तन्मन्त्रेणावगुण्ठितम् ॥ १४ ॥
अर्चितं त्रिः परिभ्राम्य कुण्डस्योपरि देशिकः ।
प्रादक्षिण्यं तदा तारमन्त्रोच्चारणपूर्वकम् ॥ १५ ॥
आत्मनोऽभिमुखं वह्निं जानुस्पृष्टमहीतलः ।
शिवबीजधिया देव्या योनावेनं विनिःक्षिपेत् ॥ १६ ॥
पश्चाद्देवस्य देव्याश्च दद्यादाचमनादिकम् ।
ज्वालयेन्मनुनानेन तमग्निमथ देशिकः ॥ १७ ॥

चित्पिङ्गलहनदहपचयुग्मान्युदीर्य्य च ।
सर्वाज्ञया ज्ञापय स्वाहा मन्त्रोऽयमुदीरितः ॥ १८ ॥
अग्निं प्रज्वलितं वन्दे हुताशं जातवेदसम् ।
सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ॥ १९ ॥
उपतिष्ठेत विधिवन्मनुनानेन पावकम् ।
विन्यसेदात्मनो देहे मन्त्रैर्जिह्वा हविर्भुजः ॥ २० ॥
लिङ्गपायुशिरावक्त्रघ्राणनेत्रेषु सर्वतः ।
वह्निरर्घीशसंयुक्ताः सादियान्ताः सविन्दुकाः ॥ २१ ॥
वह्नेर्मन्त्राः समुद्दिष्टा जिह्वानां सप्त देशिकैः ।
जिह्वास्ता विविधाः प्रोक्ता गुणभेदेन कर्मसु ॥ २२ ॥
हिरण्या गगनारक्ता कृष्णान्या सुप्रभा मता ।
बहुरूपातिरक्ता च सात्त्विक्यो यागकर्मसु ॥ २३ ॥
पद्मरागा सुवर्णान्या तृतीया भद्रलोहिता ।
लोहितानन्तरं श्वेता धूमिनी च करालिका ॥ २४ ॥
राजस्योरसना वह्नेर्विहिताः काम्यकर्मसु ।
विश्वमूर्तिस्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा ॥ २५ ॥
लोहितान्या करालाख्या काली तामस्य ईरिताः ।
एताः सप्त नियुज्यन्ते क्रूरकर्मसु मन्त्रिभिः ॥ २६ ॥
स्वस्वनामसमाभाः स्युर्जिह्वाः कल्याणरेतसः ।
अमर्त्यपितृगन्धर्वयक्षनागपिशाचकम् ॥ २७ ॥
राक्षसाः सप्तजिह्वानामीरिता अधिदेवताः ।
वह्नेरङ्गमनून् न्यस्येत्तनावुक्तेन वर्मणा ॥ २८ ॥
सहस्रार्चिः स्वस्तिपूर्ण उत्तिष्ठ पुरुषः पुनः ।
धूमव्यापी सप्तजिह्वो धनुर्द्धर इति क्रमात् ॥ २९ ॥
षडङ्गमनवः प्रोक्ता जातिभिः सह संयुताः ।
मूर्त्तिरष्टौ तनौ न्यस्येद् देशिको जातवेदसः ॥ ३० ॥

मूर्द्धा ग्रपांसकत्र्यक्षुकटिपार्श्वांग्रकेषु च।
प्रदक्षिणवशाज्ज्यसेदुच्चरन्ती ता यथाक्रमम्॥ ३१॥
जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः।
अश्वदेवजसंज्ञोऽन्यः पुनर्वैश्वानराह्वयः॥ ३२॥
कौमारतेजाः स्याद्विश्वमुखो देवमुखः स्मृतः।
ताराग्नये पदाद्याः स्युर्नत्यन्ता वह्निमूर्त्तयः।
आसनं कल्पयित्वाग्रे मूर्त्तिं तस्य विचिन्तयेत्॥ ३३॥
इष्टं शक्तिं स्वस्तिकाभीतिमुच्चै-
र्दीर्घैर्दोर्भिर्धारयन्तं जवाभम्।
हेमाकल्पं पद्मसंस्थं त्रिनेत्रं
ध्यायेद्वह्निं बद्धमौलिं जटाभिः॥ ३४॥
परिषिच्य ततस्तोयैर्विशुद्धैर्मेखलोपरि।
दर्भैरगर्भैर्मध्यस्थमेखलायां परिस्तरेत्॥ ३५॥
निधाय परिधीन् दिक्षु प्राचीवर्जं गुरूत्तमः।
प्रादक्षिण्येन संपूज्यास्तेषु ब्रह्मादिमूर्त्तयः॥ ३६॥
ध्यातं वह्निं यजेन्मध्ये गन्धाद्यैर्मनुनामुना।
वैश्वानरजातवेदपदे पश्चादिहावह॥ ३७॥
लोहिताक्षपदस्यान्ते सर्वकर्माणि साधय।
वह्निजायावधिः प्रोक्तो मन्त्रः पावकवल्लभः॥ ३८॥
मध्ये षट्स्वपि कोणेषु जिह्वाख्या साऽचो यजेत्।
केशरे शक्रमार्गेण पूजयेदङ्गदेवताः॥ ३९॥
दलेषु पूजयेन्मूर्त्तीः शक्तीः स्वस्तिकधारिणीः।
दलाग्रे मातरः पूज्याः सासिताङ्गादिभैरवाः॥ ४०॥
लोकपालांस्ततो दिक्षु पूजयेदुक्तलक्षणान्।
पश्चादादाय पाणिभ्यां स्रुक्स्रुवौ तावधोमुखौ॥ ४१॥
वह्नेः प्रतापयेद्विद्वान् दर्भानादाय देशिकः।

तदग्रमध्यमूलादि शोधयेत्तैर्यथाक्रमम् ॥ ४२ ॥
गृहीत्वा वामहस्तेन प्रोक्षयेद्दक्षिणेन तौ ।
पुनः प्रताप्यते मन्त्री दर्भान् वह्नौ विनिक्षिपेत् ॥ ४३ ॥
आत्मनो दक्षिणे भागे स्थापयेत्तौ कुशान्तरे ।
आज्यस्थालीमथादाय प्रोक्षयेदस्त्रवारिणा ॥ ४४ ॥
तस्यामाज्यं विनिक्षिप्य संस्कृतं वीक्षणादिभिः ।
निरूह्य वायव्येऽङ्गारान् हृदा तेषु निवेशयेत् ॥ ४५ ॥
इदं तापनमुद्दिष्टं देशिकैस्तन्त्रवेदिभिः ।
संदीप्य दर्भयुगलमाज्ये क्षिप्तानले क्षिपेत् ॥ ४६ ॥
गुरुर्हृदयमन्त्रेण पवित्रीकरणाह्वयम् ।
दीप्तेन दर्भमुखेन नीराज्याज्यं सवर्मणा ॥ ४७ ॥
अग्नौ विसर्जयेद्दर्भमभिद्योतनमीरितम् ।
घृते प्रज्वलितान् दर्भान् प्रदर्श्यास्त्रानुना गुरुः ॥ ४८ ॥
जातवेदसि तान् न्यस्य दुद्योतनमिदं तलम् ।
गृहीत्वा घृतमङ्गारान् संयोज्याग्नौ जलं स्पृशेत् ॥ ४९ ॥
अङ्गुष्ठोपकनिष्ठाभ्यां दर्भौ प्रादेशसम्मितौ ।
धृत्वोत्पुनीयादस्त्रेण घृतमुत्पवनाह्वयम् ॥ ५० ॥
तत्तद्धृदयमन्त्रेण कुशाग्रायामात्मसंमुखम् ।
घृते संप्लवनं कुर्यात् संस्काराः षडुदीरिताः ॥ ५१ ॥
प्रादेशमात्रं सग्रन्थि दर्भयुग्मं घृतान्तरे ।
निक्षिप्य भागौ द्वौ कृत्वा पक्षौ शुक्लेतरौ स्मरेत् ॥ ५२ ॥
वामे नाडीमिडां भागे दक्षिणे पिङ्गलां पुनः ।
सुषुम्नां मध्यतो ध्यात्वा कुर्याद्धोमं यथाविधि ॥ ५३ ॥
स्रुवेण दक्षिणाद्भागादादायाज्यं हृदा गुरुः ।
जुहुयादग्नये स्वाहेत्यग्नेर्दक्षिणलोचने ॥ ५४ ॥
वामतस्तावदादाय वामे वह्निविलोचने ।

जुहुयादथ सोमाय स्वाहेति हृदयात्मना ॥ ५५ ॥
मध्यादाज्यं समादाय वह्नेर्भालविलोचने ।
जुहुयादग्निसोमाभ्यां स्वाहेति हृदयात्मना ॥ ५६ ॥
हृन्मन्त्रेण स्रुवेणाज्यं भागादादाय दक्षिणम् ।
जुहुयादग्नये स्विष्टकृते स्वाहेति तन्मुखे ॥ ५७ ॥
इतिसंपादयोर्भागेष्वाज्यस्याथाहुतिः क्रमात् ।
इत्यग्निनेत्रवक्त्राणां कुर्य्यादुद्घाटनं गुरुः ॥ ५८ ॥
सताराभिर्व्याहृतिभिराज्येन जुहुयात् पुनः ।
जहुयादग्निमन्त्रेण त्रिवारं देशिकोत्तमः ॥ ५९ ॥
गर्भाधानादिकावह्नेः क्रियाणि वर्त्तयेत् क्रमात् ।
अष्टाभिराज्याहुतिभिः प्रणवेन पृथक् पृथक् ॥ ६० ॥
गर्भाधानं पुंसवनं सीमन्तोन्नयनं पुनः ।
अनन्तरं जातकर्म स्यान्नामकरणं तथा ॥ ६१ ॥
उपनिष्क्रमणं पश्चादन्नप्राशनमीरितम् ।
चौड़ोपनयने भूयो महानाम्न्यं महाव्रतम् ॥ ६२ ॥
तथोपनिषदं पश्चाद् गोदानोद्वाहकावृतिः ।
शुभेषु स्युर्विवाहान्ताः क्रियास्ताः क्रूरकर्मसु ॥ ६३ ॥
मरणान्ताः समुद्दिष्टा वह्नेरागमवेदिभिः ।
ततः स्वपितरौ तस्य संपूज्यात्मनि योजयेत् ॥ ६४ ॥
समिधः पञ्च जुहुयान्मूलाग्रघृतसंप्लुताः ।
मन्त्रैर्जिह्वाङ्गमूर्त्तीनां क्रमाद्वह्नेर्यथाविधि ॥ ६५ ॥
प्रत्येकं जुहुयादेकामाहुतिं मन्त्रवित्तमः ।
अवदाय स्रुवेणाज्यं चतुस्रुचि पिधाय तत् ॥ ६६ ॥
स्रुवेण तिष्ठन्नेवाग्नौ देशिको यतमानसः ।
जुहुयादग्निमन्त्रेण वौषडन्तेन। सम्पदे ॥ ६७ ॥
विघ्नेश्वरस्य मन्त्रेण जुहुयादाहुतीर्दश ।

सामान्यं सर्वमन्त्राणामेतदग्निमुखं मतम् ॥ ६८ ॥
ततः पीठं समभ्यर्च्य देवताया हुताशने ।
अर्चयेदग्निरूपां तां देवतामिष्टदायिनीम् ॥ ६९ ॥
तन्मुखे जुहुयान्मन्त्री पञ्चविंशतिसंख्यया ।
आज्येन मूलमन्त्रेण वह्नीकरणाङ्कितम् ॥ ७० ॥
वह्निदैवतयोरैक्यमात्मना सह भावयेत् ।
मूलमन्त्रेण जुहुयादाज्येनैकादशाहुतीः ॥ ७१ ॥
नाडीसन्धानमुद्दिष्टमेतदागमवेदिभिः ।
जुहुयादङ्गमुख्यानामाहुतीनामनुक्रमात् ॥ ७२ ॥
एकैकामाहुतिं सम्यक् सर्पिषा देशिकोत्तमः ।
ततोऽन्येष्वपि कुण्डेषु संस्कृतेषु यथाविधि ॥ ७३ ॥
आचार्य्यो वितरेदग्निं पूर्वादिषु समाहितः ।
ऋत्विजो गन्धपुष्पाद्यैरङ्गाद्याभरणान्विताम् ॥ ७४ ॥
मन्त्रोक्तां देवतामिष्ट्वा पञ्चविंशतिसंख्यया ।
मूलेनाज्येन जुहुवुः साज्येन चरुणा तथा ॥ ७५ ॥
प्रातरुत्थाय जुहुवुः पुनराज्यान्वितैस्तिलैः ।
द्रव्यैर्वा कल्पविहितैः सहस्रं साष्टकं पृथक् ॥ ७६ ॥
ततः सुधौततन्त्वाढ्यं स्नातं शिष्यं समाहितम् ।
पाययित्वा पञ्चगव्यं कुण्डस्यान्तिकमानयेत् ॥ ७७ ॥
विलोक्य दिव्यदृष्ट्या तं तच्चैतन्यं हृदाम्बुजात् ।
गुरुरात्मनि संयोज्य कुर्य्यादध्वविशोधनम् ॥ ७८ ॥
षडध्वा कलाध्वा तत्त्वाध्वा भुवनाध्वेति च त्रयम् ।
वर्णाध्वा च पदाध्वा च मन्त्राध्वेत्यपरं त्रयम् ॥ ७९ ॥
निवृत्त्याद्याः कलाः पञ्च कलाध्वेति प्रकीर्त्तिताः ।
तत्त्वाध्वा बहुधा भिन्नो नैवाद्यागमभेदतः ॥ ८० ॥
षट्त्रिंशच्छैवतत्वानि द्वात्रिंशद्वैष्णवानि च ।

चतुर्विंशतितत्त्वानि मैत्राणि प्रकृतेः पुनः ॥ ८१ ॥
उक्तानि दशतत्त्वानि सप्त च त्रिपदात्मनः ।
तत्त्वानि शैवान्युच्यन्ते शिवः शक्तिः सदाशिवः ॥ ८२ ॥
ईश्वरो विद्यया सार्द्धं पञ्चमुख्यान्यमुक्तिनः ।
मायाकालश्च नियतिः कलाविद्या पुनः स्मृता ॥ ८३ ॥
रागः पुरुष एतानि शुद्धाशुद्धानि सप्त च ।
प्रकृतिर्बुद्ध्यहङ्कारो मनो ज्ञानेन्द्रियाण्यथ ॥ ८४ ॥
कर्मेन्द्रियाणि तन्मात्राः पञ्चभूतानि देशिकाः ।
एतान्याहुरशुद्धानि चतुर्विंशतिमागमे ॥ ८५ ॥
शैवानामिति तत्त्वानां विभागोऽत्र प्रदर्शितः ।
जीवप्राणधियश्चित्तं ज्ञानकर्मेन्द्रियाण्यपि ॥ ८६ ॥
तन्मात्राः पञ्चभूतानि हृत्पद्मं तेजसां त्रयम् ।
वासुदेवादयश्चेति तत्त्वान्येतानि शार्ङ्गिणः ॥ ८७ ॥
पञ्चभूतानि तन्मात्रा इन्द्रियाणि मनस्तथा ।
गर्वो बुद्धिः प्रधानञ्च मैत्राणीति विदुर्बुधाः ॥ ८८ ॥
निवृत्त्याद्याः कलाः पञ्च ततो बिन्दुः कला पुनः ।
नादः शक्तिसमापूर्वः शिवश्च प्रकृतेर्विदुः ॥ ८९ ॥
अथाविद्या शिवः पश्चाच्छिवो विद्या स्वयं पुनः ।
सर्वतत्त्वञ्च तत्त्वानि प्रोक्तानि त्रिपदात्मनः ॥ ९० ॥
तत्त्वाध्वा कथितो ह्येष तत्तदागमवेदिभिः ।
ईरितो भुवनाध्वेति भुवनानि मनीषिभिः ॥ ९१ ॥
वर्णाध्वेति वदन्त्यर्णानादिक्षान्तान् मनीषिणः ।
वर्णसंघः पदाध्वा स्यान्मन्त्राध्वा मन्त्रराशयः ॥ ९२ ॥
क्रमादेतानध्वनः षट् शोधयेद् गुरुसत्तमः ।
पादाम्बुनाभिहृद्भालमूर्द्धन्यपि शिखाः स्मरेत् ॥ ९३ ॥
ततः कूर्चेन विधिवत् तं स्पृशन् शुश्रयाद् गुरुः ।

आचार्य्यकुण्डे संशुद्धैस्तिलैराज्यपरिप्लुतैः ॥ ९४ ॥
शोधयाम्याद्यमध्वानं स्वाहेति पृथगध्वनः ।
ताराद्यमाहुतीरष्टौ क्रमात्तान् विलयं नयेत् ॥ ९५ ॥
शिवे शिवात्तान् संलीनान् जनयेत् सृष्टिमार्गतः ।
विलोकयन् दिव्यदृष्ट्या तं शिशुं देशिकोत्तमः ॥ ९६ ॥
आत्मस्थितं तच्चैतन्यं पुनः शिष्ये नियोजयेत् ।
स्रुचा पूर्णाहुतिं हुत्वा मूलमन्त्रेण देशिकः ॥ ९७ ॥
उद्वास्य देवतां कुम्भे साङ्गां सावरणां गुरुः ।
पुनर्व्याहृतिभिर्हुत्वा जिह्वादीनां विभावसोः ॥ ९८ ॥
एकैकामाहुतिं दद्यात् परिषिच्याग्निरात्मनि ।
पावकं योजयित्वा स्वे परिधीन् सपरिस्तरान् ॥ ९९ ॥
नैमित्तिके दहेन्मन्त्री नित्ये तु न दहेदिमान् ।
नेत्रे शिष्यस्य बध्नीयान्नेत्रमन्त्रेण वाससा ॥ १०० ॥
करे गृहीत्वा तं शिष्यं कुण्डतो मण्डलं नयेत् ।
तस्याञ्जलिं पुनः पुष्पैः पूरयित्वा यथाविधि ॥ १०१ ॥
कलसे देवताप्रीत्यै प्रक्षिपेन्मूलमुच्चरन् ।
व्यापोह्य तन्नेत्रबन्धमासीनं दर्भसंस्तरे ॥ १०२ ॥
आत्मयागक्रमाद् भूयः संस्कृत्य पाद्यदेशिकः ।
तत्तन्मन्त्रोदितान् न्यासान् कुर्य्याद्देहे शिशोस्तदा ॥ १०३ ॥
पञ्चोपचारैः कुम्भस्थां पूजयित्वेष्टदेवताम् ।
तस्मिंस्तन्त्रोक्तमार्गेण विदध्यात् सकलीकृतिम् ॥ १०४ ॥
मण्डलेन कृतं शिष्यमन्यस्मिन्नुपवेशयेत् ।
नदत्सु वाद्येषु सार्द्धं विप्रेण सद्गुरुः ॥ १०५ ॥
विधिवत् कुम्भमुद्धृत्य तन्मुखस्थान् सुरद्रुमान् ।
शिशोः शिरसि विन्यस्य मातृकां मनसा जपन् ॥ १०६ ॥
मूलेन साधितैस्तोयैरभिषिञ्चेत्तमात्मवित् ।

पूजितां पुनरादाय वर्द्धनीं मन्त्ररूपिणीम् ॥ १०७ ॥
तस्याः सुसाधितैस्तोयैर्विल्वाद्यार्थमन्त्रसा ।
अवशिष्टेन तोयेन शिष्यमाचामयेद् गुरुः ॥ १०८ ॥
ततस्तं सकलीकुर्य्याद् देवतात्मानमात्मवित् ।
उत्थाय शिष्यो विमले वाससी परिधाय च ॥ १०९ ॥
आचम्य वाग्यतो भूत्वा निषीदेत् सन्निधौ गुरोः ।
देवतामात्मनः शिष्ये संक्रान्तां देशिकोत्तमः ॥११०॥
पूजयेद् गन्धपुष्पाद्यैरैक्यं सम्भावयंस्तयोः ।
दद्याद्विद्यां ततस्तस्मै विनीतायानुपूर्वकम् ॥ १११ ॥
गुरोर्लब्ध्वा पुनर्विद्यां अष्टकृत्वो जपेत् सुधीः ।
गुरुविद्यादेवतानामैक्यं सम्भावयन् धिया ॥ ११२ ॥
प्रणमेद्दण्डवद् भूमौ गुरुं तं देवतात्मकम् ।
तस्य पादाम्बुजद्वन्द्वं निजमूर्ध्नि नियोजयेत् ॥ ११३ ॥
शरीरमर्थं प्राणांश्च सर्वं तस्मै समर्पयेत् ।
ततः प्रभृति कुर्वीत गुरोः प्रियमनन्यधीः ॥ ११४ ॥
ऋत्विग्भ्यो दक्षिणां दद्यात् समग्रां प्रीतमानसः ।
ब्राह्मणांस्तर्पयेत् पश्चाद्भक्ष्यभोज्यैः सदक्षिणैः ॥११५॥
एषा क्रियावती दीक्षा प्रोक्ता सर्वमन्त्रविदा ।
अथ वर्णात्मिकां वक्ष्ये दीक्षामागमदेशिताम् ॥ ११६ ॥
पुंप्रकृत्यात्मका वर्णाः शरीरमपि तादृशम् ।
यतस्तस्यात्तनौ न्यस्येद्वर्णान् शिष्यस्य देशिकः ॥ ११७ ॥
तस्मादुत्पाद्य तान् वर्णान् न्यस्येच्छिष्यतनौ पुनः ।
सृष्टिक्रमेण विधिवच्चैतन्यञ्च नियोजयेत् ॥११८॥
जायते देवताभावः परानन्दमयः शिशुः ।
एषा वर्णमयी दीक्षा प्रोक्ता ज्ञानप्रदायिनी ॥ ११९ ॥
ततः कलावती दीक्षा यथावदभिधीयते ।

निवृत्त्याद्याः कलाः पञ्च भूतानां शक्तियोगतः ॥ १२० ॥
तस्माद् भूतमये देहे ध्यात्वा तां बोधयेच्छिशोः ।
निवृत्तिर्जानुपर्य्यन्तं तलादारभ्य संस्थिता ॥ १२१ ॥
जानुनोर्नाभिपर्य्यन्तं प्रतिष्ठा व्याप्य तिष्ठति ।
आनाभिकण्ठतो व्याप्ता विद्या शान्तिस्ततः परम् ॥१२२॥
कण्ठाल्ललाटपर्य्यन्तं व्याप्ता तस्माच्छिरोऽवधि ।
शान्त्यतीता कला ज्ञेया कला व्याप्तिरितीरिता ॥ १२३ ॥
संहारक्रमयोगेन स्थानात् स्थानान्तरे गुरुः ।
संयोज्य वेधयेद्विद्वान् स्वाज्ञया च शिरोऽवधि ॥ १२४ ॥
इयं प्रोक्ता कला दीक्षा दिव्यभावप्रदायिनी ।
ततो वेधमयीं वक्ष्ये दीक्षां संसारमोचिनीम् ॥ १२५ ॥
ध्यायेच्छिष्यतनोर्मध्ये मूलाधारे चतुर्दले ।
त्रिकोणमध्ये विमले तेजस्त्रयविजृम्भिते ॥ १२६ ॥
वलयत्रयसंयुक्तां तडित्कोटिसमप्रभाम् ।
शिवशक्तिमयीं देवीं चेतनामात्रविग्रहाम् ॥ १२७ ॥
सूक्ष्मात् सूक्ष्मतरां शक्तिं भित्त्वा षट्चक्रमञ्जसा ।
गच्छन्तीं मध्यमार्गेण दिव्यां परशिवावधि ॥ १२८ ॥
वादिशान्तदलस्थार्णान् संहरेत् कमलासने ।
तत्षट्पत्रमये पद्मे वादिशान्ताक्षरान्विते ॥ १२९ ॥
स्वाधिष्ठाने समायोज्य वेधयेदाज्ञया गुरुः ।
तान् वर्णान् संहरेद्विष्णौ तं पुनर्नाभिपङ्कजे ॥ १३० ॥
दशपत्रे डादिफान्तवर्णाढ्ये योजयेद् गुरुः ।
तान् सर्वान् संहरेद्रुद्रे तं पुनर्हृदयाम्बुजे ॥ १३१ ॥
कादिठान्तार्णपत्राढ्ये योजयित्वेश्वरे गुरुः ।
तान् सर्वान् संहरेदस्मिन् तं भूयः कण्ठपङ्कजे ॥ १३२ ॥
स्वराढ्ये षोड़शदले योजयित्वा स्वरान् पुनः ।

सदाशिवे तान् संहृत्य तं पुनर्हृत्सरोरुहे ॥ १३३ ॥
दीपवत् हृत्सलसिते योजयित्वा ततो गुरुः ।
ततोऽर्णौ संहरेद्विद्वः कलायां तं नियोजयेत् ॥ १३४ ॥
तां नादेनान्तरं नादं नादान्ते योजयेद् गुरुः ।
तद्वदन्यां समायोज्य विष्णुवक्त्रान्तरे च ताम् ॥ १३५ ॥
तत् पुनर्गुरुवक्त्रे तु योजयेद्देशिकोत्तमः ।
सद्वैवमात्मना शक्तिं वेधयेत् परमे शिवे ॥ १३६ ॥
गुर्वाज्ञया शृणु पाशस्तदा शिष्यः पतेद्भुवि ।
सञ्जातदिव्यबोधोऽसौ सर्वं वदति तत्क्षणात् ॥ १३७ ॥
साक्षाच्छिवो भवत्येष नात्र कार्य्या विचारणा ।
एषा वेधमयी दीक्षा प्रोक्ता संवित्प्रदायिनी ॥१३८॥
क्रमाच्चतुर्विधा दीक्षा तन्त्रेऽस्मिन् सम्यगीरिता ।
अथाह होमद्रव्याणां प्रमाणमभिधीयते ॥ १३९ ॥
कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतम् ।
उक्तानि पञ्चगव्यानि तत्समानि मनीषिभिः ॥ १४०॥
तत्समं मधुदुग्धानामक्षमात्रमुदाहृतम् ।
दधिप्रभृतिमात्रं स्याल्लाजाः स्युर्मुष्टिसम्मिताः ॥ १४१ ॥
पृथुकास्तत्प्रमाणाश्च शक्तवोऽपि तथोदिताः ।
गुडं पलार्द्धमात्रं स्याच्छर्करापि तथा स्मृता ॥ १४२ ॥
ग्रासार्द्धं चरुमानं स्यादिक्षुः पर्वावधिः स्मृतः ।
एकैकं पत्रपुष्पाणि तथा पूपश्च कल्पयेत् ॥ १४३ ॥
कदलीफलनारङ्गफलान्येकैकशो विदुः ।
मातुलुङ्गं चतुःखण्डं पनसं दशधा कृतम् ॥ १४४ ॥
अष्टधा नारिकेलानि खण्डितानि विदुर्बुधाः ।
त्रिधा कृतं फलं विल्वं कपित्थं खण्डितं द्विधा ॥ १४५ ॥
फलान्यन्यान्यखण्डानि समिधः स्युर्दशाङ्गुलाः ।

दूर्वात्रयं समुद्दिष्टं गुडूची चतुरङ्गुला ॥ १४६ ॥
व्रीहयो मुष्टिमात्राः स्युर्मुद्गा माषा यवा अपि ।
तण्डुलाः स्युस्तदर्द्धांशाः कोद्रवा मुष्टिसम्मिताः ॥ १४७ ॥
गोधूमा रक्तकलमा विहिता मुष्टिमानतः ।
तिलाश्च मुष्टिमात्राः स्युः सर्षपास्तत्प्रमाणकाः ॥ १४८ ॥
शक्तिप्रमाणं लवणं मरिचान्यपि विंशति ।
पुरं वदरमानं स्याद्रामठं तत्समं स्मृतम् ॥ १४९ ॥
चन्दनागुरुकर्पूरकस्तूरीकुङ्कुमानि च ।
तिन्तिड़ीवीजमानानि समुद्दिष्टानि देशिकैः ॥ १५० ॥
वैश्वानरं स्थितं ध्यायेत् समिद्धोमेषु देशिकः ।
शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु ॥ १५१ ॥
आस्ये च जुहुयाद्वह्नेर्विपश्चित् सर्वकर्मसु ।
कर्णहोमे भवेद् व्याधिर्नेत्रेऽन्धत्वमुदीरितम् ॥ १५२ ॥
नासिकायां मनःपीड़ा मस्तके धनसंचयः ।
यतः काष्ठं ततः श्रोत्रं यतो धूमोऽत्र नासिका ॥ १५३ ॥
यतस्तु ज्वलनं नेत्रं यत्राङ्गारस्ततः शिरः ।
यत्र प्रज्वलिता ज्वाला जिह्वा सा जातवेदसः ॥ १५४ ॥
स्वर्णसिन्दूरबालार्ककुङ्कुमक्षौद्रसन्निभः ।
सुवर्णरेतसो वर्णः शोभनः परिकीर्त्तितः ॥ १५५ ॥
भेरीरवोऽथ हस्तीन्द्रध्वानिर्वह्नेः शुभावहः ।
नागचम्पकपुन्नागपाटलायूथिकानिभः ॥ १५६ ॥
पद्मेन्दीवरकह्लारसर्पिर्गुग्गुलुसन्निभः ।
पावकस्य शुभो गन्ध इत्युक्तस्तन्त्रवेदिभिः ॥१५७॥
प्रदक्षिणास्त्यक्तकम्पाः छत्राभाः शिखिनः शिखाः ।
शुभदा यजमानस्य राज्यस्यापि विशेषतः ॥ १५८ ॥
कुन्देन्दुधवलो धूमो वह्नेः प्रोक्तः शुभावहः ।

कृष्णः कृष्णागतेर्वर्णो यजमानं विनाशयेत् ॥ १५८ ॥
श्वेतो राष्ट्रं निहन्त्याशु राज्यमम्बरसन्निभः ।
खरस्वरसमो वह्नेर्ध्वानः सर्वविनाशकृत् ॥ १६० ॥
पूतिगन्धो हुतभुजो होतुर्दुःखप्रदो भवेत् ।
छिन्नवृत्ता शिखा कुर्य्यान्मृत्युं धनपरिक्षयम् ॥ १६१ ॥
शुकपक्षनिभो धूमः पारावतसमप्रभः ।
हानिस्तुरगजातीनां गवाञ्च कुरुतेऽचिरात् ॥ १६२ ॥
एवंविधेषु दोषेषु प्रायश्चित्ताय देशिकः ।
मूलेनाज्येन जुहुयात् पञ्चविंशतिमाहुतीः ॥ १६३ ॥

इति सारदातिलके पञ्चमः पटलः ॥

---

## षष्ठः पटलः ।

अथ वर्णतनुं वच्ये विश्वबोधविधायिनीम् ।
ऋषिर्ब्रह्मा समुद्दिष्टो गायत्रीछन्द ईरितम् ॥ १ ॥
सरस्वती समाख्याता देवता देशिकोत्तमैः ।
अक्लीवकृस्वदीर्घान्तर्गतैः षड्वर्गकैः क्रमात् ।
षडङ्गानि विधेयानि जातियुक्तानि देशिकैः ॥ २ ॥
पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षःस्थलां
भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम् ।
मुद्रामक्षगुणं सुधाढ्यकलशं विद्याञ्च हस्ताम्बुजै-
र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये ॥३॥
ललाटमुखवृत्ताक्षिश्रुतिघोणेषु गण्डयोः ।
ओष्ठदन्तोत्तमाङ्गास्यदोःपत्सन्ध्यग्रकेषु च ॥ ४ ॥
पार्श्वयोः पृष्ठनाभौ च जठरे हृदयेऽंशके ।
ककुद्यंशे च हृत्पूर्वपाणिपादे युगे ततः ॥ ५ ॥

जठरानलयोर्न्यस्य मातृकार्णान् यथाक्रमात् ।
दीक्षितः प्रोक्तमार्गेणाभ्यर्चयेच्च समाहितः ॥ ६ ॥
जपेत्तत्संख्यया विद्वानयुतं मधुराप्लुतः ।
विदधीत तिलैर्होमं मातृकामन्वहं यजेत् ॥ ७ ॥
व्योमेन्द्वीवसनार्णकर्णिकमचां द्वन्द्वैः स्फुरत्केशरं
पत्रान्तर्गतपञ्चमवर्गयशलार्णादिवर्गक्रमात् ।
आशास्वस्त्रिषु लान्तलाङ्गलियुजा क्षौणीपुरेणावृतं
पद्मं कल्पितमत्र पूजयतु तां वर्णात्मिकां देवताम् ॥ ८ ॥
आधारशक्तिमारभ्य पीठशक्त्यन्तमर्चयेत् ।
मेधाप्रज्ञाप्रभाविद्याधीधृतिस्मृतिबुद्धयः ॥ ९ ॥
विद्येश्वरीति संप्रोक्ता भारत्या नवशक्तयः ।
वर्णाब्जेनासनं दत्त्वा मूर्त्तिं मूलेन कल्पयेत् ॥ १० ॥
आवाह्य पूजयेत्तस्यां देवीमावरणैः सह ।
अङ्गैरावरणं पूर्वं द्वितीयं युगशःस्वरैः ॥ ११ ॥
अष्टवर्गैस्तृतीयं स्यात्तच्छक्तिभिरनन्तरम् ।
पञ्चमं मातृभिः प्रोक्तं षष्ठं लोकेश्वरैः क्रमात् ॥ १२ ॥
लोकपालाः स्वरैः प्रोक्ता वज्राद्यैः सप्तमं ततः ।
विधिनानेन वर्णेशीमुपचारैः प्रपूजयेत् ॥ १३ ॥
यापिनी पालिनी पश्चात् पावनी क्लेदिनी तथा ।
धारिणी मालिनी भूयो हंसिनी शान्तिनी स्मृता ॥ १४ ॥
शुभाः पत्रेषु संपूज्या धृताक्षगुणपुस्तकाः ।
ब्राह्मी माहेश्वरी भूयः कौमारी वैष्णवी तथा ॥ १५ ॥
वाराह्यनन्तरेन्द्राणी चामुण्डा सप्तमी तथा ।
अष्टमी स्यान्महालक्ष्मीः प्रोक्ताः स्युर्विश्वमातरः ॥ १६ ॥
दण्डं कमण्डलुं पश्चादक्षसूत्रमथाभयम् ।
बिभ्रती कनकच्छाया ब्राह्मी कृष्णाजिनोज्ज्वला ॥ १७ ॥

शूलं परश्वधं क्षुद्रदुन्दुभिं नृकरोटिकाम्।
वहन्ती हिमसङ्काशा ध्येया माहेश्वरी शुभा ॥ १८ ॥
अङ्कुशं दण्डखट्वाङ्गौ पाशञ्च दधती करैः।
ध्येया बन्धूकसङ्काशा कौमारी कामदायिनी ॥ १९ ॥
चक्रं घण्टां कपालञ्च शङ्खञ्च दधती करैः।
तमालश्यामला ध्येया वैष्णवी विभ्रमोज्ज्वला ॥ २० ॥
मुषलं करवालञ्च खेटकं दधती करैः।
हलं चतुर्भिर्वाराही ध्येया कालघनच्छविः ॥ २१ ॥
अङ्कुशं तोमरं विद्युत्कुलिशे बिभ्रती करैः।
इन्द्रनीलनिभेन्द्राणी ध्येया सर्वसमृद्धिदा ॥ २२ ॥
शूलं कृपाणं नृशिरः कपालं दधती करैः।
मुण्डस्रङ्मण्डिता ध्येया चामुण्डा रक्तविग्रहा ॥ २३ ॥
अक्षस्रजं बीजपूरं कपालं पङ्कजं करैः।
वहन्ती हेमसङ्काशा महालक्ष्मीः समीरिता ॥ २४ ॥
प्रयजेन्मातृकामित्थं नित्यं साधकसत्तमः।
न्यसेत् स्वर्गान्वितां सृष्ट्या ध्यात्वा देवीं यथाविधि ॥ २५
सर्गबिन्द्वन्तिकां न्यस्येड्डार्णाद्यां स्थितिकर्मणा।
विद्यां पूर्वोदितां विद्वान्ऋष्यादीनङ्गसङ्गतान्।
ध्यायेद्वागीश्वरीं मन्त्री वल्लभेन समन्विताम् ॥ २६ ॥
सिन्दूरकान्तिममिताभरणां त्रिनेत्रां
विद्याक्षसूत्रमृगपोतवरान् दधानाम्।
पार्श्वस्थितां भगवतीं मणिकाञ्चनाभां
ध्यायेत् कराब्जधृतपुस्तकवर्णमालाम् ॥ २७ ॥
अभ्यर्चनादिकं सर्वं विदध्यात् पूर्ववर्त्मना।
बिन्दुयुक्तानिमान् न्यसेत् संहृत्य प्रतिलोमतः ॥ २८ ॥
विद्यां पूर्वोदितां विद्वान् ऋष्यादीनङ्गसंस्थितान्।

ध्येया वर्णमये पद्मे देवी वाग्वल्लभा शिवा ॥ २९ ॥

अक्षस्रजं हरिणमुद्ग्रटङ्कं तथा
विद्यां करैरविरतं दधतीं त्रिनेत्राम् ।
अर्द्धेन्दुमौलिमरुणामरविन्दरामां
वर्णेश्वरीं प्रणमतस्तनभारनम्राम् ॥ ३० ॥

न्यासार्चनादिकं सर्वं कुर्यात् पूर्वोक्तवर्त्मना ।
तारोत्थाभिः कलाभिस्ता न्यसेत् साधकसत्तमः ॥ ३१ ॥
वर्णाद्यास्तारसंयुक्ता व्यस्तव्यस्ता नमोऽन्तिकाः ।
ऋषिः प्रजापतिश्छन्दो गायत्रीसमुदाहृतम् ॥ ३२ ॥
कलात्मा वर्णजननी देवता शारदा स्मृता ।
ह्रस्वदीर्घान्तरगतैः षड़ङ्गं प्रणवैः स्मृतम् ॥ ३३ ॥

ःस्तैः पद्मं बिभ्राणां गुणमयहरिणं पुस्तकं चाक्षमालां
ाङ्कं शुभ्रं कपालं वरममृतलसत् हेमन्तं वहन्तीम् ।
ुक्ताविद्युत्पयोदस्फटिकनवराबन्धुरैः पञ्चवक्त्रै-
स्त्र्यक्षैर्वक्त्रोजनम्रां सकलशशिनिभां शारदां तां नमामि ॥३४॥

अर्चयेदुक्तमार्गेण शारदां सर्वकामदाम् ।
तार्त्तीयपूर्वां न्यस्येत्तां नमोऽन्तां रुद्रसंयुताम् ॥ ३५ ॥
सधातुप्राणमंत्यक्त्यामुक्तायादिषु ते क्रमात् ।
ऋषिः स्याद्दक्षिणामूर्त्तिर्गायत्रीछन्द ईरितम् ॥ ३६ ॥
अर्द्धनारीश्वरः प्रोक्तो देवतातत्त्ववेदिभिः ।
हमाषड्दीर्घयुक्तेन कुर्यादङ्गानि देशिकः ॥ ३७ ॥

बन्धूककाञ्चननिभं रुचिराक्षमालां
पाशाङ्कुशौ च वरदं निजबाहुदण्डैः ।
बिभ्राणमिन्दुशकलाभरणं त्रिनेत्रम्
अर्द्धाम्बिकेशमनिशं वपुराश्रयामः ॥ ३८ ॥

पूर्वोक्तेनेव मार्गेण पूजयेत्तां यथाविधि ।

स्वराद्यां मातृकां न्यस्येत् केशवादिसमोऽन्विताम् ॥३८॥
सधातुप्राणसंत्यक्तामुक्तायायादिषु विष्णवः ।
ऋषिः प्रजापतिः प्रोक्तो गायत्रीच्छन्द ईरितम् ॥ ४० ॥
अर्द्धलक्ष्मीहरिः साक्षाद्देवतात्र समीरिता ।
दीर्घयुक्तेन बीजेन षड़ङ्गानि समाचरेत् ॥ ४१ ॥
हस्तैर्बिभ्रत् सरसिजगदाशङ्खचक्राणि विद्यां
पश्चादर्णैः कनककलसं मेघविद्युद्विलासम् ।
वामोत्तुङ्गस्तनमविरलाकम्पमाश्लेषलोभा-
देकीभूतं वपुरवतु यः पुण्डरीकाचलक्ष्म्याः ॥ ४२ ॥
अथार्चनादिकं सर्वं प्राग्वन्मन्त्री समाचरेत् ।
शक्तिपूर्वां तनौ न्यस्येन्मातृकां मनुवित्तमः ॥ ४३ ॥
ऋषिः शक्तिः स्मृतश्छन्दो गायत्री देवता बुधैः ।
संप्रोक्ता विश्वजननी सर्वसौभाग्यदायिनी ।
दीर्घार्द्धेन्दुजयाङ्गानि कुर्य्यान्मायाथवा बुधः ॥ ४४ ॥
उद्यत्कोटिदिवाकरप्रतिनटीत्तुङ्गोरुपीनस्तनी
बद्धार्द्धेन्दुकिरीटहारवसनामञ्जीरसंशोभिता ।
वीराणां करपङ्कजे जपवटीं पाशाङ्कुशौ पुस्तकं
* * * त्रिनयना पद्मे निषण्णा मुखम् ॥ ४५ ॥
पुरोदितेन विधिना देवीमन्वहमर्चयेत् ।
न्यसेत् श्रीबीजसम्पन्नां मातृकां विधिना तनौ ॥ ४६ ॥
ऋषिर्भृगुः स्मृतश्छन्दो गायत्री देवता स्मृता ।
समस्तसम्पदामादिर्जगतां नायिका बुधैः ।
प्राक्प्रस्तुतेन बीजेन कुर्य्यादङ्गानि साधकः ॥ ४७ ॥
विद्युद्दामसमप्रभा हिमगिरिप्रख्यैश्चतुर्भिर्गजैः
शुण्डादण्डसमुद्धृतामृतघटैरासिच्यमानामिमाम् ।
बिभ्राणा करपङ्कजैर्जपवटीं पद्मद्वयं पुस्तकं

भास्वद्रत्नसुमङ्गलां कुचनतां ध्यायेज्जगत्स्वामिनीम् ॥४८॥
आराधयेदिमां प्रोक्तां त्वर्चनाकुसुमादिभिः ।
न्यसेत् स्वराभ्यां वपुषि मातृकां मङ्गलप्रदाम् ॥ ४९ ॥
ऋषिः सम्मोहनः प्रोक्तश्छन्दो गायत्रमुच्यते ।
देवता मन्त्रिभिः प्रोक्ता समस्तजननी परा ।
स्वरेण दीर्घयुक्तेन विदध्यादङ्गकल्पनम् ॥ ५० ॥
बालार्ककोटिरुचिरं स्फटिकाक्षमालां
कोदण्डमिक्षुजनितं स्मरपञ्चबाणान् ।
विद्याञ्च हस्तकमलैर्दधतीं त्रिनेत्रां
ध्यायेत् समस्तजननीं नवचन्द्रचूड़ाम् ॥ ५१ ॥
अर्चनादिक्रियाः सर्वाः प्रोक्ताः पूर्वविधानतः ।
शक्तिः श्रीबीजकामाद्यां देवीं वर्णतनुं न्यसेत् ॥ ५२ ॥
ऋषिः पूर्वोदितश्छन्दो गायत्री देवता बुधैः ।
सम्मोहिनी समुद्दिष्टा सर्वलोकवशङ्करी ।
आवाप्तैस्त्रिभिर्बीजैः षडङ्गानि प्रकल्पयेत् ॥ ५३ ॥

ध्यायेयमवलयेक्षुमवासपाशान्
पद्मद्वयाङ्कुशशरासनपुस्तकञ्च ।
आबिभ्रतीं निजकरैररुणीं कुचार्त्तां
सम्मोहिनीं त्रिनयनां तरुणेन्दुचूड़ाम् ॥ ५४ ॥

अङ्गांशवरणैः साईमुपचारैः शुभोदयाम् ।
प्रपञ्चयागं वक्ष्यामि सच्चिदानन्दसिद्धिदम् ॥ ५५ ॥
वेदादिः शक्तिरजपा परमात्मा महामनुः ।
वह्निजाया च कथिताः पञ्चमन्त्राः शुभावहाः ॥ ५६ ॥
तामाशक्त्यादिका न्यस्येदजपार्णाहिठान्तिकाम् ।
मातृकामुक्तमार्गेण सुध्या देहे विधानवित् ॥ ५७ ॥
ऋषिर्ब्रह्मा समुद्दिष्टश्छन्दो गायत्रमीरितम् ।

समस्तवस्तुसंव्याप्तं परं तेजोऽत्र देवता ॥ ५८ ॥
स्वाहाद्यैः पञ्चमनुभिः पञ्चाङ्गानि प्रकल्पयेत् ।
अस्त्रं दिक्षु बुधः कुर्य्याद् भूयो हरिहराक्षरैः ॥ ५९ ॥
तारादिपञ्चमनुभिः परिचीयमानं
ध्यानैककाम्यमनिशं जगदेकमूलम् ।
संवित्समस्तगमनेश्वरमच्युतं तत्
तेजः परं भजत सान्द्रसुधाम्बुराशिम् ॥ ६० ॥
पञ्चभूतमया वर्णा बहुशः प्रागुदीरिताः ।
तस्मात् ज्ञानेन्द्रियात्मानं प्रपञ्चतन्मयं विदुः ॥ ६१ ॥
देहेऽर्पितांस्तु वर्णांस्तस्मिन् न्यस्य वर्णान् विलोमतः ।
तत्तत्स्थानयुतान्मन्त्री जुहुयात् परतेजसि ॥ ६२ ॥
एवमर्णमयं होमं कृत्वादित्यतनुर्भवेत् ।
न्यस्य मन्त्री यथान्यायं देहे विश्वस्य मातरम् ॥ ६३ ॥
जपेन्मन्त्रान् भजेद्देवान् यजेदग्निमनन्यधीः ।
द्रव्यैश्च जुहुयादग्नौ मन्त्रवित्तन्त्रदेशितैः ॥ ६४ ॥
अश्वत्थोडुम्बरप्लक्षन्यग्रोधसमिधस्तिलाः ।
सिद्धार्थपायसाज्यानि द्रव्याण्यष्टौ विदुर्बुधाः ॥ ६५ ॥
अमीभिर्जुहुयाल्लक्षं तदर्द्धं वा समाहितः ।
सर्वान् कामानवाप्नोति परां सिद्धिञ्च विन्दति ॥ ६६ ॥
एभिरर्कसहस्राणि हुत्वा मन्त्री विनाशयेत् ।
रिपून् क्षुद्रान् ग्रहान् भूतान् जालशापान् सपन्नगान् ॥ ६७
मन्त्राणामयथावृत्तिप्रतिपत्तिसमुद्भवान् ।
विकारान्नाशयेदाशु होमोऽयं समुदीरितः ॥ ६८ ॥
एभिस्त्रिमधुरोपेतैर्जुहुयाल्लक्षमानतः ।
अचिरादेव स भवेत् साक्षाद्भूमिपुरन्दरः ॥ ६९ ॥
अमीभिः साधको भूत्वा वश्यादीन्यपि साधयेत् ।

हुत्वा लक्षं तिलैः शुद्धो मुच्यते सर्वपातकैः ॥ ७० ॥
पायसान्नेन जुहुयान्मन्त्री सर्वसमृद्धये।
पद्मनालक्षहोमेन महतीं श्रियमाप्नुयात् ॥ ७१ ॥
घृतेन जुहुयाल्लक्षं प्राप्नुयात् कीर्त्तिमुत्तमाम्।
जातीकुङ्कुमहोमेन सर्वलोकवशं नयेत् ॥ ७२ ॥
संशोधितैस्त्रिमध्वक्तैर्लवणैर्लक्षमानतः।
जुहुयाद् गुटिकां कृत्वा वशयेद्विश्वमञ्जसा ॥ ७३ ॥
अर्द्धं वा शक्तितो दद्याद् यथोक्तं फलमाप्नुयात्।
अनया सप्तसंजप्तं पिबेत् प्रातर्दिने दिने ॥ ७४ ॥
सलिलं स भवेद्वाग्मी लभते कवितां पराम्।
ब्राह्मीरसे वचा कल्के पयसा विपचेद् घृतम् ॥ ७५ ॥
अयुतं मातृकाजप्तमर्च्चितं स्वविधानतः।
पिबेत् प्रातः स मेधावी भवेद्वाक्पतिसन्निभः ॥ ७६ ॥
ब्राह्मीं सहस्रसंजप्तां वचां वा पयसा पिबेत्।
लभते महतीं मेधामचिरान्नात्र संशयः ॥ ७७ ॥
पूर्वोक्तं पङ्कजं कृत्वा कुम्भं संस्थाप्य पूर्ववत्।
क्वाथेन पूरयेन्मन्त्री यथावत् क्षीरशाखिनाम् ॥ ७८ ॥
अष्टगन्धं विलोड्यास्मिन् नवरत्नसमन्विते।
आवाह्य पूरयेद्देवीं मातृकामुक्तमार्गतः ॥ ७९ ॥
सहस्रसाधितैस्तोयैरभिषिञ्चेत् प्रियं नरम्।
भानुवारे शुभे लग्ने ब्राह्मणानपि पूजयेत् ॥ ८० ॥
गुरवे दक्षिणां दद्याद् भक्तियुक्तः स्वशक्तितः।
रक्षाकरं विशेषेण कृत्वा द्रोहोपशान्तिदम् ॥ ८१ ॥
ऐश्वर्य्यजननं पुंसां सर्वसौभाग्यसिद्धिदम्।
अभिषेकमिदं प्राहुर्विश्वसंमोहनप्रदम् ॥ ८२ ॥
पूर्वोक्तं मण्डलं कृत्वा मन्त्री नवपदान्वितम्।

मध्यादि स्थापयेत्तेषु पादेषु कलसानव ॥ ८३ ॥
तन्तुभिर्वेष्टितान् शुभान् वह्निचन्दनचर्चितान् ।
स्वधूपवासितान् मन्त्री दूर्वाक्षतसमन्वितान् ॥ ८४ ॥
आपूर्य शुद्धतोयैस्तान् वेष्टयेदंशुकैस्तु तान् ।
मुक्तामाणिक्यवैदूर्य्यगोमेदान् वज्रविद्रुमौ ॥ ८५ ॥
पद्मरागं मरकतं नीलं चेति यथाक्रमात् ।
उक्तानि नवरत्नानि तेषु कुम्भेषु निःक्षिपेत् ॥ ८६ ॥
विष्णुक्रान्तामिन्दुवर्णां देवीं पूर्वाञ्च निःक्षिपेत् ।
स्थापयेत् कुम्भवक्त्रेषु कोमलांश्चूतपल्लवान् ॥ ८७ ॥
विन्यस्य दध्यतोपेतांश्चनकांश्च फलान्वितान् ।
मध्यकुम्भे समाराध्य मन्त्री देवीं दृषादितः ॥ ८८ ॥
अर्चयेद्दक्षकुम्भेषु व्यापिन्याद्याः पुरोदिताः ।
वर्णमन्त्रयुताः प्रोक्तलक्षणाः सर्वसिद्धिदाः ॥ ८९ ॥
शर्कराघृतसंयुक्तं पायसञ्च निवेदयेत् ।
स्पृष्ट्वा कुम्भान् कुशैर्विद्वान् जपेत् साग्रं शतं शतम् ॥९०॥
अभिषिञ्चेद्विलोमेन साध्यान्तं दत्तदक्षिणम् ।
सर्वपापक्षयकरं शुभदं कान्तिसिद्धिदम् ॥ ९१ ॥
कृत्वा द्रोहादिशमनं सौभाग्यश्रीजयप्रदम् ।
पुत्रप्रदञ्च वन्ध्यानामभिषेकमिदं विदुः ॥ ९२ ॥
कृत्वा तस्य पुरः स्थित्वा जपेत् साग्रं सहस्रकम् ।
ज्वरो नश्यति तस्याशु क्षुद्रभूतग्रहा अपि ॥ ९३ ॥
परतेजसि सञ्चिन्त्य शुभ्रं श्रुतसुधामयम् ।
विधुं विद्यां जपेद् योगी विषरोगविनाशकृत् ॥ ९४ ॥
वलीपलितरोगघ्नः क्षुत्पिपासाप्रणाशनः ।
पुष्टिदः सर्वसौभाग्यदायी लक्ष्मीशुभप्रदः ॥ ९५ ॥
सोमसूर्य्याग्निरूपाः स्युर्वर्णा लीहृत्रयं तथा ।

रौप्यमिन्दुः स्मृतो हेम सूर्य्यस्ताम्रं हुताशनः ॥९६॥
लौहभागाः समुद्दिष्टाः स्वराद्यक्षरसंख्यया ।
तैर्लौहैः कारयेन्मुद्रामसङ्कलितसङ्गताम् ॥ ९७ ॥
साग्रं सहस्रं संजप्यं स्पृष्ट्वा तां जुहुयात्ततः ।
तस्यां संपातयेन्मन्त्री सर्पिषा पूर्वसंख्यया ॥ ९८ ॥
निक्षिप्य कुम्भे तां मुद्रामभिषेकोक्तवर्त्मना ।
आवाह्य पूजयेद्देवीमुपचारैः समाहितः ॥ ९९ ॥
अभिषिच्य विनीताय दद्यात्तां मुद्रिकां गुरुः ।
इयं मुद्रा क्षुद्ररोगविषज्वरविनाशनी ॥ १०० ॥
व्यालचौरमृगादिभ्यो रक्षां कुर्य्याद्विशेषतः ।
युद्धे विजयमाप्नोति धारयेन्मनुजेश्वरः ॥ १०१ ॥
विभवेन्मातृकां मन्त्री नवरत्नं यथाक्रमात् ।
अष्टावष्टौ स्वराः स्पर्शाः पञ्चशो व्यापका अपि ॥१०२॥
नवरत्नसमुत्पन्ना नवरत्नेश्वरा ग्रहाः ।
अर्केन्दुरक्तजगुरुभृगुमन्दाहिकेतवः ॥ १०३ ॥
माणिक्यं मौक्तिकं चारु विद्रुमं गारुड़ं पुनः ।
पद्मरागं लसद्वज्रं नीलं गोमेदकं शुभम् ॥ १०४ ॥
वैदूर्य्यं नवरत्नानि मुद्रां तैः कारयेत् शुभाम् ।
जपहोमादिकं सर्वं कुर्य्यात् पूर्वोक्तवर्त्मना ॥ १०५ ॥
यो मुद्रां धारयेदेतां तस्य स्युर्वशगा ग्रहाः ।
वर्द्धते तस्य सौभाग्यं लक्ष्मीरव्याहता भवेत् ॥ १०६ ॥
ज्ञात्वा द्रोहाणि नश्यन्ति नश्यन्ति सकलापदः ।
रक्षोभूतपिशाचाद्याश्चनेक्षन्ते तं भयाकुलाः ।
उपर्य्युपरि वर्द्धन्ते धनरत्नादिसम्पदः ॥ १०७ ॥
तार्क्षीयोज्ज्वलकर्णिकं स्वरयुगैराविर्भवत् केशवं
वर्गाश्रासि वसुच्छदं वसुमतीगेहेन संवेष्टितम् ।

ताराधीश्वरवारिवर्णविलसद्विक्षोभसंशोभिना
यन्त्रं वर्णतनोः परं निगदितं सर्वामयघ्नं परम् ॥१०८॥

इति सारदातिलके षष्ठः पटलः।

---

## सप्तमः पटलः।

अथ भूतलिपिं वक्ष्ये सुगोप्यामतिदुर्लभाम्।
यां प्राप्य मुनयः सन्तः सर्वान् कामान् प्रपेदिरे ॥ १ ॥
पञ्चह्रस्वाः सन्धिवर्णा व्योमवाग्निजलस्थरा।
अन्त्यमाद्यं द्वितीयञ्च चतुर्थं मध्यमं क्रमात् ॥ २ ॥
पञ्चवर्गाक्षराणि स्यु रन्तस्थे तन्दुभिः सह।
एषा भूतलिपिः प्रोक्ता द्विचत्वारिंशदक्षरैः ॥ ३ ॥
अत्रैव वर्णा वर्गाणां पञ्चगाः सार्णसंयुताः।
वर्गाद्या इति विज्ञेया नववर्णाः स्मृता अमी ॥ ४ ॥
व्योमवाग्निजलक्षोणी वर्गवर्णा पृथग्विदुः।
द्वितीयवर्गेन्दुर्न स्यान्नवमेन जलं धरा ॥ ५ ॥
विरिञ्चिविष्णुरुद्राश्विप्रजापतिदिगीश्वराः।
क्रियादिशक्तिसहिताः क्रमात् स्युर्वर्गदेवताः ॥ ६ ॥
ऋषिः स्याद्दक्षिणामूर्त्तिर्गायत्रीच्छन्द ईरितम्।
देवता कथिता सद्भिः साक्षाद्वर्णेश्वरी परा ॥ ७ ॥
हृदि षड्वर्गकैः कुर्य्यात् षड़ङ्गानि सजातिभिः।
ध्यायेद्बिल्वतरोर्मूले देवीं तन्मयपङ्कजे ॥ ८ ॥
वदन्ति सुधियो नित्यं वृक्षं वर्णमयं शुभम्।
परसंविन्महाबीजं विन्दुनादमहाशिफम् ॥ ९ ॥
पृथिव्यक्षरशाखाभिः सर्वाशान्तविजृम्भितम्।

सलिलाम्बरपत्रैः स्वैः संछादितजगत्त्रयम् ॥ १० ॥
वह्निवर्णाङ्कुरैर्दीप्तं रत्नैरिव सुरद्रुमम्।
मरुद्वर्णलसत्पुष्पैर्द्योतयन्तं वपुःश्रियम् ॥ ११ ॥
आकाशार्णफलैर्नम्रं सर्वभूताश्रयं परम्।
पराम्रृताज्यमधुभिः सिञ्चन्तं परमेश्वरीम् ॥ १२ ॥
वेदागमादिभिः क्लृप्तं समुन्नतिमनोहरम्।
शिवशक्तिमयं साक्षात् छायाश्रितजगत्त्रयम्।
एनमाश्रित्य सुधियः सर्वान् कामानवाप्नुयुः ॥ १३ ॥
अङ्गोन्मुक्तशशाङ्ककोटिसदृशीमापीनतुङ्गस्तनीं
चन्द्रार्द्धाङ्कितमस्तकां मधुमदादालोलनेत्रत्रयाम्।
बिभ्राणामनिशं वरीजपवटीं विद्यां कपालं करै-
राद्यां यौवनगर्विताां लिपितनुं वागीश्वरीमाश्रये ॥१४॥
आधारदेशाधिष्ठाने नाभौ हृदि गले पुनः।
बिन्दौ नादे ततः शक्त्यां शिवे देशिकसत्तमः ॥ १५ ॥
नवाधारेषु विद्या स्यात् स्वरानुग यथाविधि।
आदिवर्णास्ततो न्यस्येन्मुखेषुद्धारितः सुधीः ॥ १६ ॥
ऊर्द्धमाहेन्द्रयाम्यादक्पश्चिमेषु समाहितः।
दोःपतत्सु पञ्चवर्गाणां वर्णान् देशिकसत्तमः ॥ १७ ॥
अग्रमूलोपमूलाग्रमध्यदेशक्रमेण तु।
जठरे पार्श्वयुगले नाभौ पृष्ठे समाहितः ॥ १८ ॥
गुह्य हृद्भूविले न्यस्येत् शादिवर्णत्रयं क्रमात्।
सृष्ट्यां स्वर्गविशीलः स्यात् स्थितौ वह्निमरुत्पयः ॥ १९ ॥
वियद्भूमीः क्रमान्न्यस्येव् सदा स्वर्गावसानिकाम्।
संहृतौ प्रतिलोमेन विन्यस्येदिन्दुभूषितम् ॥ २० ॥
आगमोक्तेन मार्गेण दीक्षितः साधकोत्तमः।
लक्षं न्यस्येज्जपेत्तावज्जुहुयादयुतं तिलैः ॥ २१ ॥

पूजयेदन्वहं देवीं पीठे प्रागीरिते सुधीः।
वर्णाब्जेनासनं कुर्य्यात् मूर्त्तिं मूलेन कल्पयेत् ॥ २२ ॥
देवीं संपूजयेत्तस्मादङ्गाद्यावरणैः सह।
आदावङ्गावृतिः पश्चादम्बिकाद्याभिरीरिता ॥ २३ ॥
द्वितीया मातृभिः प्रोक्ता तृतीयाद्यष्टशक्तिभिः।
चतुर्थी पञ्चमी प्रोक्ता द्वात्रिंशद्भिः पुनः पुनः ॥ २४ ॥
चतुःषष्ठ्या स्मृता षष्ठीशक्तिभिर्लोकपालकैः।
सप्तमी पुनरेतेषामस्त्रैः स्यादष्टमातृभिः ॥ २५ ॥
एवं पूज्या जगद्धात्री श्रीभूतलिपिदेवता।
स्थानेषूक्तेषु विधिवदभ्यर्च्याङ्गानि पूर्ववत् ॥ २६ ॥
अम्बिका वाग्भवी दुर्गा श्रीशक्तीः प्रोक्तलक्षणाः।
ब्रह्माद्याः पूर्ववत् पूज्याः कराली विकरालुमा ॥ २७ ॥
सरस्वती श्रीदुर्गोषा लक्ष्मीः सत्या स्मृतिर्धृतिः।
श्रद्धा मेधा मतिः कान्तिरार्य्या षोडशशक्तयः ॥ २८ ॥
खड्गखेटकधारिण्यः श्यामाः पूज्याः स्वलङ्कृताः।
विद्याह्रीपुष्टयः प्रज्ञाः सिनीवाली कुहूः पुनः ॥ २९ ॥
रुद्रवीर्य्या प्रभानन्दा पोषिणी सिद्धिदा शुभा।
कालरात्रिर्महारात्रिर्भद्रकाली कपर्दिनी ॥ ३० ॥
विकृतिर्दण्डमुण्डिन्यौ सेन्दुः खण्डा शिखण्डिनी।
निशुम्भशुम्भमथनी महिषासुरघातिनी ॥ ३१ ॥
इन्द्राणी चैव रुद्राणी शङ्करार्द्धशरीरिणी।
नारी नारायणी चैव त्रिशूलिन्यपि पालिनी ॥ ३२ ॥
अम्बिका ह्लादिनी चैव द्वात्रिंशच्छक्तयः स्मृताः।
चक्रहस्ता पिशाचास्या संपूज्याश्चारुभूषणा ॥ ३३ ॥
पिङ्गलाक्षी विशालाक्षी समृद्धिर्वृद्धिरेव च।
श्रद्धा स्वाहा स्वधा भिक्षा माया संज्ञा वसुन्धरा ॥ ३४ ॥

त्रिलोकधात्री सावित्री गायत्री त्रिदशेश्वरी।
सुरूपा बहुरूपा च स्कन्दमाताच्युतप्रिया॥ ३५॥
विमला चामला पश्चादारुणी पुनवारुणी।
प्रकृतिर्विकृतिः सृष्टिः स्थितिः संहृतिरेव च॥ ३६॥
सन्ध्या माता सती हंसी मर्द्दिका वज्रिका परा।
देवमाता भगवती देवकी कमलासना॥ ३७॥
त्रिमुखी सप्तमुख्यन्या सुरासुरविमर्दिनी।
लम्बोष्ठी चोर्ध्वकेशी च बहुशीर्षा वृकोदरी॥ ३८॥
रथरेखाह्वया पश्चाच्छशिरेखा तथा परा।
गगना पवना वेगा वसुधा तदनन्तरम्॥ ३९॥
ततो भुवनपालाख्या ततः स्यान्मदनातुरा।
अनङ्गानङ्गमदना तथैवानङ्गमेखला॥ ४०॥
अनङ्गकुसुमा विश्वरूपस्वरभयङ्करी।
अक्षोभ्यासत्यवादिन्यो वज्ररूपा शुचिव्रता॥ ४१॥
वरदाख्याथ भागीशी चतुःषष्टिः समीरिता।
चापबाणधराः सर्वा ज्वालाजिह्वा महाप्रभाः॥ ४२॥
दंष्ट्रिण्य ऊर्ध्वकेश्यस्ताजुष्टोपक्रान्तमानसः।
सर्वाभरणसन्दीप्ताः पूजनीयाः प्रयत्नतः॥ ४३॥
लोकेशाः पूर्ववत् पूज्यास्तद्वज्रादिकान्यपि।
इत्थं यः पूजयेन्मन्त्री श्रीभूतलिपिदेवताम्॥ ४४॥
श्रीवश्यः स भवेद् भूमिदेवैरप्यभिवन्द्यते।
कमलैरयुतं हुत्वा राजानं वशमानयेत्॥ ४५॥
उत्पलैर्जुहुयात्तद्वन्महालक्ष्मीः प्रजायते।
पलाशैः कुसुमैर्हुत्वा वत्सरेण कविर्भवेत्॥ ४६॥
राजीवमनहोमेन वनितां वशमानयेत्।
मायकाम्यानि कर्माणि कुर्य्यादत्रापि साधकः॥ ४७॥

भूतलिप्या पुटीकृत्य यो मन्त्रं भजते नरः।
क्रमोत्क्रमाच्छतावृत्त्या तस्य सिद्धो भवेन्मनुः॥ ४८॥
प्रसुप्तभुजगाकारां कुण्डलीं मध्यवर्त्मना।
सङ्गमय्य परं स्थानं प्रापयित्वा परामृतैः॥ ४९॥
प्लावयन्मूर्ध्नि मूलान्तं योगी यः सर्वसिद्धिदः।
अनया न्यस्तदेहस्तु तेजसा भास्करो भवेत्।
यन्त्रक्रियाविशेषांश्च कृत्वा कर्माणि साधयेत्॥ ५०॥
बिन्द्वाढ्यं गगनं तदेव शिवयुक् स्वामी चतुर्थीयुतो
नृत्यन्तो मनुरेष मध्यविहितः साध्यस्य बम्भुस्वरैः।
पत्रेष्वस्त्ररगो हकारपुटितास्तद्भूतशिष्टं तथा
चान्यदले विलिख्य मतिमान् वृत्तेन संवेष्टयेत्॥५१॥
वियदन्तमिदं लाक्षाचन्दनेन विनिर्मितम्।
रोहिण्यामुदये बाहौ विधृतं सर्वशान्तिदम्॥ ५२॥
यौ हौ साध्यधरेन्दुखण्डशिरसौ स्यातां क्रमात् ङेयुतं
कोपेशं नमसान्वितं विरचयन्मध्ये दलेष्वष्टसु।
वायव्यानलसम्पुटान् विलिख्य विधिना शिष्टार्णमन्त्रो
यन्त्रं वायुघटेन वेष्टितमिदं स्यात्तालपत्रस्थितम्॥५३॥
स्वात्यां मन्त्रोदये यन्त्रं वायव्यां निखनेद्रिपोः।
द्वार्य्युच्चाटनकृत्तस्य मृतिर्वा भवति ध्रुवम्॥ ५४॥
वह्नेर्बीजयुगं क्रमात् श्रवणसत्यार्द्धेन्दुयुक् स्यात् स्वरौ
वौषट् छन्नमरेश्चमध्यविहितः पत्रेषु वर्गाङ्कवान्।
वर्णान् वह्निनिरोधितान् प्रविलिखेत् साध्याक्षरैर्दौषवं
रम्यं चान्यदले क्रमानुपुरगं भूर्जोदरे कल्पितम्॥५५
शुभवारर्क्षसंयोगे लाक्षाकुङ्कुमकल्पितम्।
रक्षाकृत् सर्वभूतानां यन्त्रमाग्नेयमीरितम्॥ ५६॥
घातकाक्षरमिश्रं तत्कृत्तिकायां कुजोदये।

चिताङ्गारेण तद्वस्त्रैर्लिखितं नाशयेद्रिपुम् ॥ ५७ ॥
ग्रासार्द्धेन्दुतदम्बुतन्मनुयुतं सार्द्धेन्दुकन्तो विधु-
र्मन्ते भूवने नमोऽभिगदितो मध्ये मनुद्धारणात् ।
वर्णान् पत्रपुटे स्वराच्चरपुटान् साध्यस्य बन्धूचरै-
र्वालिख्याम्रपुरेण वेष्टितमिदं यन्त्रं भवेद्वारुणम् ॥ ५८ ॥
भूर्जपत्रे लिखेदेतद्रक्तचन्दनवारिणा ।
वारुणोच्चदिते काले यन्त्रं वश्यादिकृद्भवेत् ॥ ५९ ॥
गण्डो विन्दुविभूषितो वसुमती स्यात्ताद्दृशौ गण्डयो-
र्मध्यस्थौ तु जगौ नकेन तिरिमं मन्त्रं लिखेन्मध्यतः ।
लान्तान् लार्णपुटीकृतान् वसुमतीवर्णान् दलेष्वालिखेत्
खेवा वर्णयुतान् यथाविधि गुरोर्गेहेन संवेष्टयेत् ॥६०॥
ज्येष्ठायामुदिते सौम्ये मृदि गैरिकनिर्मितम् ।
पार्थिवं यन्त्रमचिरात् सर्वत्र स्तम्भकृद्भवेत् ॥ ६१ ॥
गुह्याद् गुह्यतरां नित्यां श्रीभूतलिपिदेवताम् ।
यः सेवते शुभैः पुत्रैर्धनधान्यैः स वर्द्धते ॥ ६२ ॥
अद्रिर्वरुणसंरुद्धेद् वाग्वादिनि च ठद्वयम् ।
वागीश्वर्या दशार्णोऽयं मन्त्रो वाग्विभवप्रदः ॥ ६३ ॥
ऋषिः कण्ठे विराट्छन्दो देवता वाग्नयीरिता ।
शिरःश्रवणयुङ्नासा वदनाम्बुगुदेष्विमान् ।
न्यस्यार्णान् प्राग्वदङ्गानि मातृकोक्तानि कल्पयेत् ॥ ६४ ॥
तरुणसकलमिन्दोर्विभ्रती शुभ्रकान्तिं
कुचभरनमिताङ्गी सन्निसन्ना सिताब्जे ।
निजकरमलोद्यल्लेखनीपुस्तकश्रीः
सकलविभवसिद्ध्यै पातु वाग्देवता नः ॥ ६५ ॥
दशलक्षं जपेन्मन्त्रं दशांशं जुहूयात्ततः ।
पुण्डरीकैः पयोयुक्तैस्तिलैर्वा मधुराप्लुतैः ॥ ६६ ॥

मातृकादीरिते पीठे वागीशीमर्च्चयेत् सुधीः।
वर्णाब्जेनासनं दद्यात् मूर्त्तिं मूलेन कल्पयेत्॥ ६७॥
आदावङ्गानि संपूज्य पश्चादुक्तीरमा यजेत्।
योगा सत्या च विमला ज्ञाना बुद्धिः स्मृतिः पुनः॥६८॥
मेधा प्रज्ञा च पत्रेषु मुद्रापुस्तकधारिणीः।
दलाग्रेषु समभ्यर्च्च ब्राह्म्याद्यास्ता यथाविधि॥ ६९॥
लोकपाला बहिः पूज्यास्तेषामस्त्राणि तद्बहिः।
एवं संपूजयेन्मन्त्री जपहोमादितत्परः॥ ७०॥
ब्रह्मचर्य्यरतः शुद्धः शुद्धदन्तनखादिकः।
संस्मरन् सर्व्ववनिताः सततं देवताधिया॥ ७१॥
कवित्वं लभते धीमान् मासैर्द्वादशभिर्ध्रुवम्।
पीत्वा तन्मन्त्रितं तोयं सहस्रं प्रत्यहं जपेत्॥ ७२॥
महाकविर्भवेन्मन्त्री वत्सरेण न संशयः।
उरोमात्रोदके स्थित्वा ध्यायन्मार्त्तण्डमण्डले॥ ७३॥
स्थितां देवीं प्रतिदिनं त्रिसहस्रं जपेन्मनुम्।
लभते मण्डलात् सिद्धिं वाचामप्रतिमां भुवि॥ ७४॥
पलाशविल्वकुसुमैर्जुहूयान्मधुरोक्षितैः।
समिद्भिर्वातमुख्याभिर्यशः प्राप्नोति वाक्पतिः॥ ७५॥
हृदयान्ते भगवति वद शब्दयुगं ततः।
वाग्देवि! वह्निजायान्तं वाग्भवाद्यं समुद्धरेत्॥ ७६॥
मनुं षोडशवर्णाढ्यं वागैश्वर्य्यप्रदायकम्।
मनोः षड्भिः पदैः कुर्य्यात् षडङ्गं जातिसंयुतैः॥७७॥
शुभ्रांशुच्छविलेपमाल्यवसनां शुभ्रांशुखण्डोज्ज्वलां
व्याख्यामक्षगुणं सुधाढ्यकलसं विद्याञ्च हस्ताम्बुजैः।
बिभ्राणां कमलासनां कुचनतां वाग्देवतां सस्मितां
वन्दे वाग्विभवप्रदां त्रिनयनां सौभाग्यसम्पत्करीम्॥७८

हविष्याशी जपेत् सम्यक् बहुलक्षमनन्यधीः ।
दशांशं जुहुयादग्नौ तिलैराज्यपरिप्लुतैः ॥७९॥
मातृकोक्ते यजेत् पीठे देवीं प्रागीरितं क्रमात् ।
पिबेत्तन्मन्त्रितं तोयं प्रातःकाले दिने दिने ॥ ८० ॥
विद्वान् वत्सरतो मन्त्री भवेन्नास्ति विचारणा ।
अभिषिञ्चेज्जलैर्जप्तैरात्मानं स्नानकर्मणि ॥ ८१ ॥
तर्पयेत्तां जलैः शुद्धैरतिमेधामवाप्नुयात् ।
पुष्पगन्धादिकं सर्वं तज्जप्तं धारयेत् सुधीः ॥ ८२ ॥
सभायां पूजितः सद्भिर्वादे च विजयी भवेत् ।
तारो मायाधरो बिन्दुः शक्तिस्तारः सरस्वती ॥ ८३ ॥
ङेन्तनत्यको मन्त्रः प्रोक्त एकादशाक्षरः ।
ब्रह्मरन्ध्रे भ्रुवोर्मध्ये नवरन्ध्रेषु च क्रमात् ।
मन्त्रवर्णान् न्यसेन्मन्त्री वाग्भवेनाङ्गकल्पना ॥ ८४ ॥
वाणीं पूर्णनिशाकरोज्ज्वलमुखीं कर्पूरकुन्दप्रभां
चन्द्रार्द्धाङ्कितमस्तकां निजकरैः संबिभ्रतीमादरात् ।
वीणामक्षगुणं सुधाढ्यकलसं विद्याञ्च तुङ्गस्तनीं
दिव्यैराभरणैर्विभूषिततनुं हंसाधिरूढां भजे ॥ ८५ ॥
जपेद् द्वादशलक्षाणि तत्सहस्रं सिताम्बुजैः ।
नागचम्पकपुष्पैर्वा जुहुयात् साधकोत्तमः ॥ ८६ ॥
मातृकोक्ते यजेत् पीठे वक्ष्यमाणक्रमेण ताम् ।
वर्णाब्जेनासनं कुर्य्यात् मूर्त्तिं मूलेन कल्पयेत् ॥ ८७ ॥
देव्या दक्षिणतः पूज्या संस्कृता वाङ्मयी ततः ।
प्राकृता वामतः पूज्या वाङ्मयी सर्वसिद्धिदा ॥ ८८ ॥
इष्ट्वा पूर्ववदङ्गानि प्रज्ञाद्यां प्रयजेत् पुनः ।
प्रज्ञा मेधा श्रुतिः शक्तिः स्मृतिर्वागीश्वरी मतिः ॥ ८९ ॥
स्वातिश्चेति समाख्याता ब्राह्म्याद्यास्तदनन्तरम् ।

लोकेशानर्चयेद् भूयस्तदस्त्राणि च तद्बहिः ॥ ८० ॥
इति संपूजयेद्देवीं साक्षाद्वाग्वल्लभो भवेत् ।
दशाक्षरीसमुक्तानि कर्माण्यत्रापि साधयेत् ॥ ८१ ॥
वाचस्पतिस्ततो भूयः भुवः स्वरिति कीर्त्तयेत् ।
वागाद्यो मुनिभिः प्रोक्तो रुद्रसंख्याक्षरो मनुः ।
कुर्य्यादङ्गानि विधिवद्वागाद्यैः पञ्चभिः पदैः ॥ ८२ ॥
आसीना कमले करैर्जपवटीं पद्मद्वयं पुस्तकं
बिभ्राणा तरुणेन्दुबद्धमुकुटा मुक्तेन्दुकुन्दप्रभा ।
भालोन्मीलितलोचना कुचभराक्रान्ताभवद्भूतले
भूयाद्वागधिदेवता मुनिगणैरासेव्यमानानिशम् ॥ ८३ ॥
रुद्रलक्षं जपेन्मन्त्रं दशांशं जुहुयाद् घृतैः ।
मातृकाकल्पिते पीठे पूजयेत्तां यथा पुरा ॥ ८४ ॥
पलाशकुसुमैर्हुत्वा परां सिद्धिं समाप्नुयात् ।
कदम्बकुसुमैस्तद्वत् फलैः श्रीवृक्षसम्भवैः ॥ ८५ ॥
अचिरात् श्रियमाप्नोति वाचां कुन्दसमुद्भवैः ।
नन्द्यावर्त्तप्रसूनैर्वा हुत्वा वाग्वल्लभो भवेत् ॥ ८६ ॥
ब्राह्मीरसे वचाकल्कं कपिलाज्यं पचेज्जपन् ।
पिबेदिनादौ तन्नित्यं सर्वशास्त्रार्थविद्भवेत् ॥ ८७ ॥
अनया विद्यया जप्तं ब्राह्मीपत्रं प्रभक्षयेत् ।
न विस्मरति मेधावी श्रुत्वा वेदागमान् पुनः ॥ ८८ ॥
बहुना किमियं विद्या भजतां कामदो मणिः ।
तोयस्थं शयनं विष्णोः सेके वलचतुर्मुखः ॥ ८९ ॥
विन्द्वीशयुतो वह्निविन्दुसङ्गाम्बुमान् भृगुः ।
उक्तानि त्रीणि वीजानि सद्भिः सारस्वतार्थिनाम् ।
अङ्गानि कल्पयेद्वीजैर्द्विरुक्तैर्जातिसङ्गतैः ॥ १०० ॥
मुक्ताहारावदातां शिरसि शशिकलालङ्कृतां बाहुभिः स्वे-

व्याख्यां वर्णाख्यमालां मणिमयकलसं पुस्तकञ्चोद्वहन्तीम् ।
आपीनोत्तुङ्गवक्षोरुहभवविलसन्मध्यदेशामधीशां
वाचामीडे चिराय त्रिभुवननमितां पुण्डरीके निषण्णाम् ॥१०१॥
त्रिलक्षं प्रजपेन्मन्त्रं जुहुयात्तद्दशांशतः ।
पायसेनाज्यसिक्तेन संस्कृते हव्यवाहने ॥ १०२ ॥
वागीशीं पूजयेत् पीठे विधिना मातृकोदिते ।
प्राक् प्रयुक्तेन मार्गेण प्रत्यहं साधकोत्तमः ॥ १०३ ॥
व्याघातकुसुमैर्हुत्वा वाक्सिद्धिमतुलां लभेत् ।
जातीपुष्पैः सिताम्भोजैः सिक्तैश्चन्दनवारिणा ॥ १०४ ॥
नन्द्यावर्त्तैः शुभैः कुन्दैर्हुत्वा वाक्सिद्धिमाप्नुयात् ।
जपन् वीजत्रयं मन्त्री सभायां जयमाप्नुयात् ॥ १०५ ॥
सितां वचां वा ब्राह्मीं वा जप्तां खादेद्दिनागमे ।
मेधां कामानवाप्नोति साधको नात्र संशयः ॥ १०६ ॥
एवमुक्तेषु मन्त्रेषु दीक्षितो यतमानसः ।
एवं यो भजते भक्त्या स भवेद्भुक्तिमुक्तिभाक् ॥ १०७ ॥
सुसितैः गन्धकुसुमैः पूजा सारस्वते विधौ ।
दूर्वायवाङ्कुरं पुष्पं राजवृक्षसमुद्भवम् ॥ १०८ ॥
उत्पलानि प्रशस्तानि सिन्धुवाराङ्कुराणि च ।
भजन् सरस्वतीं नित्यमेतानि परिवर्जयेत् ॥ १०९ ॥
आम्रातं गृञ्जनं विल्वं कलञ्जं लसुनं तथा ।
तैलं पलाण्डुपिण्याकं शलाटुमपि भोजने ॥ ११० ॥
सर्वं पर्य्युषितं त्याज्यं सदा सारस्वतार्थिना ।
नाचरेन्निशि ताम्बूलं स्त्रियं गच्छेद्दिवा न च ॥ १११ ॥
न सन्ध्ययोः स्वपेज्जातु नाशुचिः किञ्चिदुच्चरेत् ।
प्रदोषेषु भजेन्मौनं दिग्वस्त्रां न विलोकयेत् ॥ ११२
न पुष्पितां स्त्रियं गच्छेन्न निन्देद्वामलोचनाम् ।

न मृषावचनं ब्रूयान्नाक्रमेत् पुस्तकं सुधीः ॥ ११३ ॥
अक्षराढ्यानि पत्राणि नोपेक्षेत् न च लङ्घयेत् ।
चतुर्दश्यष्टमीपर्वप्रतिपद्ग्रहणेषु च ॥ ११४ ॥
संक्रमेषु च सर्वेषु विद्यां नैव पठेद् बुधः ।
व्याख्याने संत्यजेन्निद्रामालस्यं जृम्भणं बुधः ॥ ११५ ॥
क्रोधं निष्ठीवनं तद्वन्नीचाङ्गस्पर्शनं तथा ।
मनुष्यसर्पमार्जारमूलूकनकुलादयः ॥ ११६ ॥
अन्तरा यदि गच्छेयुस्तदाध्यायं परित्यजेत् ।
निशासु दीपशेषेषु सद्यः पाठं परित्यजेत् ॥ ११७ ॥
ज्ञात्वा दोषानिमान् सम्यक् भक्त्या यो भारतीं भजेत ।
वाचां सिद्धिमवाप्नोति वाचस्पतिरिवापरः ॥ ११८ ॥
इति सारदातिलके सप्तमः पटलः ॥

---

## अष्टमः पटलः ।

अथ वक्ष्ये श्रियो मन्त्रान् श्रीसौभाग्यबलप्रदान् ।
यस्याः कटाक्षमात्रेण त्रैलोक्यमभिवर्द्धते ॥ १ ॥
वान्तं वह्निसमारूढं वामनेत्रेन्दुसंयुतम् ।
बीजमेतत् श्रियः प्रोक्तं चिन्तारत्नमिवापरम् ॥ २ ॥
ऋषिर्भृगुर्निवृच्छन्दो देवताश्रीः समीरिता ।
षड्दीर्घयुक्तबीजेन कुर्य्यादङ्गानि षट्क्रमात् ॥ ३ ॥
कान्त्या काञ्चनसन्निभां हिमगिरिप्रख्यैश्चतुर्भिर्गजै-
र्हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियम् ।
बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलां
क्षौमाबद्धनितम्बललितां वन्देऽरविन्दे स्थिताम् ॥ ४ ॥
भानुलक्षं जपेन्मन्त्रो दीक्षितो विजितेन्द्रियः ।

श्रियमभ्यर्च्चयेन्नित्यं सुगन्धिकुसुमादिभिः ॥ ५ ॥
सहस्रं जुहुयान्मन्त्री तैलैर्वा मधुराप्लुतैः।
वैल्वैः फलैर्वा जुहुयात्त्रिभिर्वा साधकोत्तमः ॥ ६ ॥
अत्रावाह्य यजेद् देवीं परिवारैः समन्विताम्।
वीजाद्यमासनं दत्त्वा मूर्त्तिं मूलेन कल्पयेत् ॥ ७ ॥
यजेत् पूर्ववदङ्गानि दिग्दलेष्वर्च्चयेत्ततः।
वासुदेवं सङ्कर्षणं प्रद्युम्नमनिरुद्धकम् ॥ ८ ॥
हेमपीततमालेन्द्रनीलाभान् पीतवाससः।
चक्रशङ्खगदापद्मधारिणस्तान् चतुर्भुजान् ॥ ९ ॥
विदिग्दलेषु पत्रेषु दमकादीन् यजेद्गजान्।
दमकं सलिलञ्चैव गुग्गुलुञ्च कुरुण्टकम् ॥ १० ॥
यजेच्छङ्खनिधिं देव्या दक्षिणे दयितान्वितम्।
मुक्तामाणिक्यसङ्काशौ किञ्चित् स्मितमुखाम्बुजौ ॥ ११ ॥
अन्योन्यालिङ्गनपरौ शङ्खपङ्कजधारिणौ।
विगलद्रत्नवर्षाभ्यां शङ्खाभ्यां मूर्ध्नि लाञ्छितौ ॥ १२ ॥
तुन्दिलं कम्बुकनिधिं वसुधारां घटस्तनीम्।
वामतः पङ्कजनिधिं प्रियया सहितं यजेत् ॥ १३ ॥
सिन्दूराभौ भुजाश्लिष्टौ रक्तपद्मोत्पलान्वितौ।
निःसरद्रत्नवर्षाभ्यां पद्माभ्यां मूर्ध्नि राजितौ ॥ १४ ॥
तुन्दिलं पङ्कजनिधिं तन्वीं वसुमतीमपि।
दलाग्रेषु यजेदेता वलाकाद्याः समन्ततः ॥ १६ ॥
वलाका विमला चैव कमला वनमालिका।
पङ्कजद्वयधारिण्यो मुक्ताहारसमप्रभाः ॥ १७ ॥
लोकेशान् पूजयेदन्ते वज्राद्यस्त्राणि तद्बहिः।
इत्थं यो भजते देवीं विधिना साधकोत्तमः ॥ १८ ॥
धनधान्यसमृद्धिः स्यात् श्रियमाप्नोत्यनिन्दिताम्।

वक्षःप्रमाणे सलिले स्थित्वा मन्त्रमिमं जपेत् ॥ १९ ॥
त्रिलक्षं सञ्जपेन्मन्त्री देवीं ध्यात्वार्कमण्डले ।
स लभेदल्पकालेन रमाया वसतिं स्थिराम् ॥ २० ॥
विष्णुगेहस्थबिल्वस्य मूलमास्थाय मन्त्रवित् ।
त्रिलक्षं प्रजपेन्मन्त्री वाञ्छितं फलमाप्नुयात् ॥ २१ ॥
अशोकवह्नौ जुहुयात्तण्डुलैराज्यलोडितैः ।
वशयत्यचिरादेव त्रैलोक्यमपि मन्त्रवित् ॥ २२ ॥
जुहुयात्तण्डुलैः शुद्धैरर्काग्नौ नियुतं वशी ।
राज्यश्रियमवाप्नोति हरितुल्यां महीयसीम् ॥ २३ ॥
जुहुयात् खादिरे वह्नौ तण्डुलैर्मधुराप्लुतैः ।
राजावश्यो भवेत् क्षिप्रं महालक्ष्मीश्च वर्द्धते ॥ २४ ॥
बिल्वच्छायामधिवसन् बिल्वामिश्रहविष्यभुक् ।
संवत्सरद्वयं हुत्वा तत्फलैरघवाम्बुजैः ॥ २५ ॥
साधकेन्द्रो महालक्ष्मीं चक्षुषा पश्यति ध्रुवम् ।
हविषा घृतसिक्तेन पायसेन सशर्करा ॥ २६ ॥
हुत्वा श्रियमवाप्नोति निश्चितं मन्त्रवित्तमः ।
मधुराक्तारुणाम्भोजैर्जुहुयाल्लक्षमादरात् ॥ २७ ॥
न मुञ्चति रमा तस्य वशमाभूतसम्प्लवम् ।
वाग्भवं वनिता विष्णोर्मायामकरकेतनः ॥ २८ ॥
चतुर्बीजात्मको मन्त्रश्चतुर्वर्गफलावहः ।
अङ्गानि कुर्य्याद् दीर्घाणि रमाबीजेन मन्त्रवित् ॥ २९ ॥

माणिक्यप्रतिमप्रभां हिमनिभैस्तुङ्गैश्चतुर्भिर्गजै-
र्हस्ताग्राहितरत्नकुम्भसलिलैरासिच्यमानां सदा ।
हस्ताब्जैर्वरदानमम्बुजयुगाभीतीर्दधानां हरेः
कान्तां काङ्क्षितपारिजातलतिकां वन्दे सरोजासनाम् ॥ ३० ॥

भानुलक्षं हविष्याशी जपेदन्ते सरोरुहैः ।

जुहुयादरुणैः पुष्पैस्तत् सहस्रं जितेन्द्रियः ॥ ३१ ॥
रमायाः कल्पिते पीठे तद्विधानेन पूजयेत् ।
कुर्य्यात् प्रयोगांस्तत्रस्थान्मनुनानेन साधकः ॥ ३२ ॥
विधिभिः सिध्यति नित्यं मूर्त्तिमद्भिरुपस्थितैः ।
दीर्घाया हृद्विसर्गान्तो ब्रह्मा भानुर्वसुन्धरा ॥ ३३ ॥
वान्तोऽग्निर्न्यै प्रिया वह्नेर्मनुः प्रोक्तो दशाक्षरः ।
ऋषिर्दक्षो विराट्छन्दो देवताश्रीः समीरिता ॥ ३४ ॥
देव्यै हृदयमाख्यातं पद्मिन्याः शिर ईरितम् ।
विष्णुपत्न्यै शिखा प्रोक्ता वरदायै तनुच्छदम् ॥ ३५ ॥
अस्त्रं कमलरूपायै नमोऽन्ताः प्रणवादिकाः ।
अङ्गमन्त्राः समुद्दिष्टा ध्यायेद् देवीमनन्यधीः ॥ ३६ ॥
आसीना सरसीरुहे स्मितमुखी हस्ताम्बुजैर्बिभ्रती
दानं पद्मयुगाभये च वपुषा सौदामिनीसन्निभा ।
मुक्तादामविराजमानपृथुलोत्तुङ्गस्तनोद्भासिनी
पायाद्वः कमला कटाक्षविभवैरानन्दयन्ती हरिम् ।३७।
दशलक्षं जपेदेन मन्त्रविद्विजितेन्द्रियः ।
दशांशं जुहुयान्मन्त्री मधुराक्तैः सरोरुहैः ॥ ३८ ॥
श्रीपीठे पूजयेद् देवीमङ्गानि प्रथमं यजेत् ।
बलाकाद्याः ततः पूज्या लोकेशास्त्वाहृती अपि ॥३९॥
इति संपूजयेद् देवीं सम्पदामालयो भवेत् ।
समुद्रगायां सरिति कण्ठमात्रे जले स्थितः ॥ ४० ॥
त्रिलक्षं प्रजपेन्मन्त्रं साक्षाद्वैश्रवणो भवेत् ।
आराध्योत्तरनक्षत्रे देवीं स्रक्चन्दनादिभिः ॥ ४१ ॥
नन्द्यावर्त्तभवैः पुष्पैः सहस्रं जुहुयात् ततः ।
पौर्णमास्यां फलैर्बैल्वैर्जुहुयान्मधुराप्लुतैः ॥ ४२ ॥
पञ्चम्यां विशदाम्भोजैः शुक्रवारे सुगन्धिभिः ।

अन्यैर्वा विशदैः पुष्पैः प्रतिमासं विशालधीः ॥ ४३ ॥
स भवेदब्दमात्रेण सर्वदा सम्पदां निधिः ।
वाग्भवा शम्भुवनिता रमा मकरकेतनः ॥ ४४ ॥
तार्त्तीयश्च जगत्पार्श्वो वह्निवीजसमुज्वलः ।
अर्घोशाद्योभृगुस्त्वैहृन्मन्त्रोऽयं द्वादशाक्षरः ॥ ४५ ॥
महालक्ष्म्या समुद्दिष्टस्ताराद्यः सर्वसिद्धिदः ।
ऋषिर्ब्रह्मा समुद्दिष्टश्छन्दो गायत्रमीरितम् ॥ ४६ ॥
देवता जगतामादिर्महालक्ष्मीः समीरिता ।
हस्तौ संशोध्य मन्त्रेण ताराादिहृदयान्तकम् ॥ ४७ ॥
बीजानां पञ्चकं न्यस्येदङ्गुलीषु यथाक्रमम् ।
मन्त्रं शेषं न्यसेन्मन्त्री तलयोरुभयोरपि ॥ ४८ ॥
मूर्द्धादिचरणं यावन्मन्त्रेण व्यापकं न्यसेत् ।
मूर्द्धाक्षिवक्त्रोगुह्याङ्घ्रौ पञ्चवीजानि विन्यसेत् ॥ ४९ ॥
शेषान् न्यसेत् सप्तवर्णान् हृदये सप्तधातुषु ।
अङ्गानि पञ्चभिर्वीजैरस्त्रं शिष्टाक्षरैर्भवेत् ॥ ५० ॥
ज्ञानैश्वर्य्यादिभिर्युक्तैश्चतुर्थ्यन्तैः सजातिभिः ।
ज्ञानमैश्वर्य्यशक्ती च बलवीर्य्ये सतेजसी ॥ ५१ ॥
ज्ञानैश्वर्य्यादयः प्रोक्ताः षट्क्रमादङ्गदेवताः ।
एवं न्यस्तशरीरोऽसौ स्मरेदुद्यानमद्भुतम् ॥ ५२ ॥
चम्पकाशोकपुन्नागपाटलैरुपशोभितम् ।
लवङ्गमालतीविल्वदेवदारुनमेरुभिः ॥ ५३ ॥
मन्दारपारिजाताद्यैः कल्पवृक्षैः सुपूजितैः ।
चन्दनैः कर्णिकारैश्च मातुलुङ्गैश्च मञ्जुलैः ॥ ५४ ॥
दाड़िमीलकुचाङ्कोलैः पूगैः कुरुवकैरपि ।
कदलीकुन्दमन्दारनारिकेलैरलङ्कृतम् ॥ ५५ ॥
अन्यैः सुगन्धिपुष्पाढ्यैः वृक्षषण्डैश्च मण्डितम् ।

माधवीमल्लिकाजातीकेतकीशतपत्रकैः ॥ ५६ ॥
पावन्तीतुलसीनन्द्यावर्त्तैर्दमनकैरपि ।
सर्वर्त्तुकुसुमोपेतैर्लसद्भिरुपशोभितम् ॥ ५७ ॥
मन्दमारुतसम्भिन्नकुसुमामोदि दिङ्मुखम् ।
तस्य मध्ये सदा फुल्लैः कुमुदोत्पलपङ्कजैः ॥ ५८ ॥
सौगन्धिकैश्च कह्लारैर्नवैः कुवलयैरपि ।
हंससारसकारण्डभ्रमरैश्चक्रनामभिः ॥ ५९ ॥
अन्यैः कमलकह्लारविहङ्गैरुपशोभिते ।
महासरसि तन्मध्ये पुलिनेऽतिमनोहरे ॥ ६० ॥
परितः पारिजाताढ्यं मण्डपं मणिकुट्टिमम् ।
उद्यदादित्यसङ्काशं भास्वरं शशिशीतलम् ॥ ६१ ॥
चतुर्द्वारसमायुक्तं हेमप्राकारशोभितम् ।
रत्नोपक्लृप्तिसंशोभिकपाटाष्टकसंयुतम् ॥ ६२ ॥
नवरत्नसमाक्लृप्ततुङ्गगोपुरतोरणम् ।
हेमदण्डाग्रलम्बिध्वजावलिपरिष्कृतम् ॥ ६३ ॥
नवरत्नसमाबद्धस्तम्भराजिविचित्रितम् ।
सहस्रदीपसंयुक्तदीपदण्डविराजितम् ॥ ६४ ॥
तप्तहाटकसंक्लृप्तवातायनमनोहरम् ।
नानावर्णांशुकोबद्धसुवर्णशतकोटिभिः ॥ ६५ ॥
चित्रितैश्चित्रवर्णैश्च वितानैरुपशोभितम् ।
सर्वरत्नसमायुक्तं हेमकुट्टसमुज्ज्वलम् ॥ ६६ ॥
केतकीमालतीजातीचम्पकोत्पलकेशरैः ।
मल्लिकातुलसीजातीनन्द्यावर्तकचम्पकैः ॥ ६७ ॥
एतैरन्यैश्च कुसुमैरलङ्कृतमहीतलम् ।
अम्बुकाश्मीरकस्तूरीमृगनाभितमालकैः ॥ ६८ ॥
चन्दनागुरुकर्पूरैरामोदितदिगन्तरम् ।

एवं सञ्चिन्त्य मनसा मण्डपं सुमनोहरम् ॥ ६८ ॥
तन्मध्ये भावयेन्मन्त्री पारिजातं मनोहरम् ।
तस्याधस्तात् स्मरेन्मन्त्री रत्नसिंहासनं महत् ।
तस्मिन् सञ्चिन्तयेद् देवीं महालक्ष्मीं मनोहराम् ॥७०॥

बालार्कद्युतिमिन्दुखण्डविलसत्कोटीरहारोज्ज्वलां
रत्नाकल्पविभूषितां कुचनतां शालेः करे मञ्जरीम् ।
पद्मां कौस्तुभरत्नमप्यविरतं सबिभ्रतीं सस्मितां
फुल्लाम्भोजविलोचनत्रययुतां ध्यायेत् परां देवताम् ॥ ७१ ॥

सिञ्जन्मञ्जीरसंशोभिपादाम्भोजविराजिताम् ।
नवरत्नरागकीर्णकाञ्चीदामविभूषिताम् ॥ ७२ ॥
मुक्तामाणिक्यवैदूर्य्य सन्नद्धोदरबन्धनाम् ।
विभ्राजमानां मध्येन वलित्रितयशोभिना ॥ ७३ ॥
जाह्नवीसलिलावर्त्तशोभिनाभिविभूषिताम् ।
पट्टीरपङ्ककर्पूरकुङ्कुमालङ्कृतस्तनीम् ॥ ७४ ॥
वारिवाहविनिर्मुक्तमुक्ताहारगरीयसीम् ।
बिभ्रतीमुत्तरासङ्गं दुकूलं परिकल्पितम् ॥ ७५ ॥
क्लृप्तकाञ्चनसन्नद्धवैदूर्य्याङ्गदभूषणाम् ।
पद्मरागस्फुरत्स्वर्णकङ्कणाढ्यकराम्बुजाम् ॥ ७६ ॥
माणिक्यशकलाबद्धमुद्रिकाभिरलङ्कृताम् ।
तप्तहाटकसङ्क्लृप्तमणिग्रैवेयशोभिताम् ॥ ७७ ॥
विचित्रविविधाकल्पां कम्बुसङ्काशकन्धराम् ।
उद्यद्दिनकराकारनयनत्रयसुन्दरीम् ॥ ७८ ॥
भ्रूलताजितकन्दर्पकरकार्मुकविभ्रमाम् ।
विकसत्तिलपुष्पश्रीविजयोद्यतनासिकाम् ॥ ७९ ॥
ललाटकान्तिविभवविजितार्द्धसुधाकराम् ।
सान्द्रसौरभसम्पन्नकस्तूरीतिलकाङ्किताम् ॥ ८० ॥

मत्तालिमालाविलसदलकाढ्यमुखाम्बुजाम् ।
पारिजातप्रसूनश्रीवाहिधम्मिल्लबन्धनाम् ॥ ८१ ॥
अनर्घ्यरत्नघटितमुकुटाङ्कितमस्तकाम् ।
सर्वलावण्यवसतिं भवनं विभ्रमश्रियः ॥ ८२ ॥
तेजसां जन्मभूमिं तां महालक्ष्मीं मनोहराम् ।
एवं सञ्चिन्तयन् देवीं हविष्याशी जितेन्द्रियः ॥ ८३ ॥
भानुलक्षं जपेन्मन्त्रं दशांशं जुहुयाद् घृतैः ।
जुहुयात् श्रीफलैः पद्मैः प्रत्येकमयुतं ततः ॥ ८४ ॥
तर्पयेत् सलिलैः शुद्धैः सुगन्धैरयुतद्वयम् ।
श्रीबीजस्योदिते पीठे महालक्ष्मीं प्रपूजयेत् ॥ ८५ ॥
श्रीबीजेनासनं दत्त्वा मूर्त्तिं मूलेन कल्पयेत् ।
पूजयेत् दक्षिणे पार्श्वे देव्याः शङ्करनन्दनम् ॥ ८६ ॥
अन्यतः पुष्पधन्वानं पुष्पाञ्जलिकरं यजेत् ।
अङ्गानि पूर्वमुक्तेषु स्थानेषु विधिवद् यजेत् ॥ ८७ ॥
उमाद्याः पत्रमध्यस्थाः शक्तीरष्टौ यजेत् क्रमात् ।
अथोमाश्रीसरस्वत्यौ दुर्गा धरणिसंयुता ॥ ८८ ॥
गायत्रीदेव्युषा चेति पद्महस्ताः सुभूषणाः ।
जह्नुसूर्य्यसुते पूज्ये पादप्रक्षालनोद्यते ॥ ८९ ॥
शङ्खपद्मनिधी पूज्यौ पार्श्वयोर्धृतचामरौ ।
धृतातपत्रं वरुणं पूजयेत् पश्चिमे ततः ॥ ९० ॥
संपूज्य राशिं परितो यजेदथ नवग्रहान् ।
अर्चयेद् दिग्गजान् दिक्षु चतुर्दन्तविभूषितान् ॥ ९१ ॥
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥ ९२ ॥
अभ्यर्चयेदथेन्द्रादींस्तदस्त्राण्यपि तद्बहिः ।
आगमोक्तेन विधिना सुगन्धैः सुमनोहरैः ॥ ९३ ॥

पूजयेद् गन्धपुष्पाद्यैर्देवीमन्वहमादरात् ।
दूर्वाभिराज्यसिक्ताभिर्जुहुयादायुषे नरः ॥ ९४ ॥
दशरात्रं समिद्धेऽग्नावष्टोत्तरसहस्रकम् ।
गुडूचीराज्यसंसिक्ता जुहुयात् सप्तवासरम् ॥ ९५ ॥
अष्टोत्तरसहस्रं वा स जीवेच्छरदां शतम् ।
हुत्वा तिलान् घृताभ्यक्तान् दीर्घमायुरवाप्नुयात् ॥९६॥
आरभ्यार्कदिनं मन्त्री दशरात्रं दिने दिने ।
आज्याक्तार्कसमिद्धोमादारोग्यं लभते ध्रुवम् ॥ ९७ ॥
कण्ठमात्रोदके स्थित्वा ध्यात्वा देवीं दिवाकरे ।
ऊर्ध्वबाहुर्दशशतमष्टोत्तरमिमं जपेत् ॥ ९८ ॥
आरोग्य लभते सद्यो वाञ्छितान्यपि मन्त्रवित् ।
शालिभिर्जुह्वतो नित्यमष्टोत्तरसहस्रकम् ॥ ९९ ॥
अचिरादेव महती लक्ष्मीः सञ्जायते ध्रुवम् ।
प्रसूनैर्जुहुयान्मन्त्री लक्ष्मीवल्लीसमुद्भवैः ॥ १०० ॥
नन्द्यावर्तसमुत्थैर्वा सिद्धार्थैश्च घृतप्लुतैः ।
महतीं श्रियमाप्नोति मान्यते सर्वजन्तुभिः ॥ १०१ ॥
मरीचजीरकोन्मिश्रैर्नारिकेलरजोयुतैः ।
सगुडैराज्यसंपक्वैरपूपैराज्यलोडितैः ॥ १०२ ॥
जुहुयात् पायसाहारो मन्त्रविद्विजितेन्द्रियः ।
अष्टोत्तरशतं नित्यं मण्डलाद्धनदो भवेत् ॥ १०३ ॥
हविषा गुडमिश्रेण जुहुयाद्धनवान् भवेत् ।
जवापुष्पाणि जुहुयादष्टोत्तरसहस्रकम् ॥ १०४ ॥
गृहीत्वा प्रजपेद् भस्म नागवल्लीरसान्वितम् ।
तिलकं तनुपातेन सर्ववश्यकरं भवेत् ॥ १०५ ॥
ब्रह्मवृक्षसमित्पुष्पैर्ब्राह्मणं वशयेद् वशी ।
जातिपुष्पैश्च राजानं वैश्यान्रक्तोत्पलैः सुधीः ॥ १०६ ॥

शुद्राक्षीलोत्पलैर्हुत्वा वशमानयति स्त्रियः ।
कृत्वा नवपदात्मानं मण्डलं यन्त्रभूषितम् ॥ १०७ ॥
अभिषेकं प्रकुर्वीत विधिना सर्वसिद्धये ।
कलशान् स्थापयेत् तेषु पदेषु शुभलक्षणवान् ॥ १०८ ॥
चन्दनालिप्तसर्वाङ्गान् दूर्वाक्षतसमन्वितान् ।
दुकूलवेष्टितानेतान् पूरयेत्तीर्थवारिभिः ॥ १०९ ॥
नवरत्नसमाबद्धं कर्षकाञ्चनकल्पितम् ।
मध्यकुम्भे क्षिपेत् पद्मं यन्त्राख्यं देशिकोत्तमः ॥ ११० ॥
चन्दनोशीरकर्पूरजातिकक्कोलकुङ्कुमम् ।
कृष्णागुरुतमालैलायुतं संपिष्य भागतः ॥ १११ ॥
विलोड्य सर्वकुम्भेषु रत्नान्यपि विनिक्षिपेत् ।
लक्ष्मी दूर्वा सदा भद्रा महादेवी मधुव्रता ॥ ११२ ॥
अशनी शतवल्ली च क्रान्तापामार्गपञ्चकम् ।
प्रियङ्गुमुद्गगोधूमव्रीहींश्च सतिलान् यवान् ॥ ११३ ॥
शालितण्डुलमाषांश्च प्रक्षाल्य तेषु निक्षिपेत् ।
धात्रीलकुचविल्वानां कदलीनारिकेलयोः ॥ ११४ ॥
फलान्यपि विनिक्षिप्य पुष्पाण्येतानि विन्यसेत् ।
पद्मं सौगन्धिकं जातिमल्लिकावकुलं तथा ॥ ११५ ॥
चम्पकाशोकपुन्नागतुलसीकेतकोद्भवम् ।
पल्लवानि वटाश्वत्थप्लक्षोडुम्बरशाखिनाम् ॥ ११६ ॥
ब्रह्मकूर्चञ्च निःक्षिप्य चषकैः सफलाक्षतैः ।
पिधाय कुम्भवक्त्राणि क्षौमेणाच्छादयेत्ततः ॥ ११७ ॥
आवाह्य मध्यकलसे महालक्ष्मीं प्रपूजयेत् ।
यजेद्रमाद्याः शिष्टेषु कलसेष्वष्टसु क्रमात् ॥ ११८ ॥
गन्धैर्मनोहरैः पुष्पैर्धूपदीपसमन्वितैः ।
निवेद्य भक्ष्यभोज्यानि तान् स्पृष्ट्वा प्रजपेन्मनुम् ॥ ११९ ॥

त्रिसहस्रं प्रजप्यान्ते साध्यमानीय संयतम् ।
संस्थाप्य स्थण्डिले पीठं तस्मिंस्तं विनिवेशयेत् ॥ १२० ॥
वन्यैराभरणैर्वस्त्रैरलङ्कृत्य तमादरात् ।
सुमङ्गलाभिर्नारीभिः क्षिप्तपुष्पाक्षताञ्चितम् ॥ १२१ ॥
अर्चितानां द्विजातीनामाशीर्वादपुरःसरम् ।
नदत्सु पञ्चवाद्येषु मुहूर्त्ते शोभने सुधीः ॥ १२२ ॥
मध्यस्थं कुम्भमुद्धृत्य महालक्ष्मीमनुं स्मरन् ।
अभिषिञ्चेत् क्रमादन्यैः कलसैरपि देशिकः ॥ १२३ ॥
करेणास्य शिरः स्पृष्ट्वा प्रयुञ्जीताशिषं गुरुः ।
भद्रमस्तु शिवञ्चास्तु महालक्ष्मीः प्रसीदतु ॥ १२४ ॥
रक्षन्तु त्वां सदा देवाः सम्पदः सन्तु सर्वदा ।
अथोत्थायाभिषिक्तः सन् वाससी परिधाय च ॥ १२५ ॥
यथाविधि समाचम्य प्रणमेद्दण्डवद् गुरुम् ।
वस्त्रैराभरणैर्धान्यैर्धनैर्गोमहिषादिभिः ॥ १२६ ॥
दासीदासैश्च विधिवत्तोषयेद्देवताधिया ।
ब्राह्मणान् भोजयेत् पश्चात् दीनान्धकृपणैः सह ॥१२७॥
महान्तमुत्सवं कुर्य्यात् भवने बन्धुभिः सह ।
तदा कृतार्थमात्मानं मन्यते मनुजोत्तमः ॥ १२८ ॥
अभिषिक्तो नरपतिः परान् विजयतेऽचिरात् ।
नारीतु पतिमाप्नोति राजपुत्त्रं न संशयः ॥ १२९ ॥
अभिषिक्ता सती बन्ध्या सूते पुत्त्रं महामतिम् ।
महारोगेषु जातेषु कृत्याद्रोहेषु देशिकः ॥ १३० ॥
भूतेषु दुर्निमित्तादौ विदध्यादभिषेचनम् ।
सर्वसम्पत्करं पुंसां सर्वसौभाग्यसिद्धिदम् ॥ १३१ ॥
सर्वरोगप्रशमनं सर्वापद्विनिवारणम् ।
गर्भरक्षाकरं स्त्रीणां दीर्घायुर्जनकं परम् ॥ १३२ ॥

प्रसूतानामपि स्त्रीणां सूतिकागाररक्षकम् ।
प्रनष्टपूर्वगर्भाणां परगर्भाभिरक्षणम् ॥ १३३ ॥
आसन्नशत्रुभीतीनां नाशनञ्च महीभुजाम् ।
अभिषेकमिमं प्राहुरागमार्थविशारदाः ॥ १३४ ॥
वेदादिस्थितसाध्यनामयुगशःश्रीशक्तिमारान्वितं
किञ्जल्केषु दिनेशपत्रविलसन्मन्त्राक्षरं तद्वहिः ।
पद्मं व्यञ्जनकेशरं स्वरलसत्पत्राष्टयुग्मं धरा-
बिम्बाभ्यां वषडन्तया त्वरितया यन्त्रं लिखेद् वेष्टितम् ॥१३५॥
भूपुरद्वयकोणेषु हृच्छी लेख्यौ पुनः पुनः ।
महालक्ष्मीयन्त्रमिदं सर्वैश्वर्य्यफलप्रदम् ॥ १३६ ॥
सर्वदुःखप्रशमनं सर्वापद्विनिवारणम् ।
बहुना किमिहोक्तेन परमस्मान्न विद्यते ॥ १३७ ॥
शम्भुपत्नी श्रिया रुद्रा कामो भगवती मही ।
ब्रह्मादित्यो धरा दीर्घा लक्ष्मादि भगवान्मरुत् ॥ १३८ ॥
प्रसीद युगलं भूयः श्रीरुद्रा भुवनेश्वरी ।
महालक्ष्मीं नमोऽन्तः स्यात् प्रणवादिरयं मनुः ॥ १३९ ॥
सप्तविंशत्यक्षराढ्यः प्रोक्तः सर्वसमृद्धिदः ।
कमले हृदयं प्रोक्तं शिरः स्यात् कमलालये ॥ १४० ॥
शिखां प्रसीद तेनैव कवचं चतुरक्षरैः ।
अस्त्रमेतैः पदैः कुर्य्यात् श्रीबीजपुटितैः पृथक् ॥१४१॥
सिन्दूरारुणकान्तिरब्जवसतिं सौन्दर्य्यवारां निधिं
कोटीराङ्गदहारकुण्डलकटीसूत्रादिभिर्भूषिताम् ।
हस्ताब्जैर्वसुपत्रमब्जयुगलादर्शौ वहन्तीं परा-
संवीतां परिचारिकाभिरनिशं ध्यायेत् प्रियां शार्ङ्गिणः॥१४२॥
लक्षं जपेत् फलैर्बिल्वैर्जुहुयान्मधुरोक्षितैः ।
दशांशसंस्कृते वह्नौ प्रागुक्तेनैव वर्त्मना ॥ १४३ ॥

श्रीबीजोक्ते यजेत् पीठे वक्ष्यमाणक्रमेण ताम्।
अङ्गावृतेर्बहिः पूज्या मूर्त्तयः श्रीधरादयः॥ १४४॥
श्रीधराख्यं हृषीकेशं वैकुण्ठं विश्वरूपकम्।
वासुदेवं सङ्कर्षणं प्रद्युम्नमनिरुद्धकम्॥ १४५॥
दलमूलेषु संपूज्य पत्रमध्येषु सयजेत्।
भारतीं पार्वतीं चान्द्रीं शचीञ्च दमकादिकान्॥१४६॥
तदग्रेष्वर्चयेद् बाणान् महालक्ष्म्याः क्रमादमून्।
अनुरागं च संवादं विजयं वल्लभं दमम्॥ १४७॥
हर्षं बलञ्च तेजश्च लोकपालाननन्तरम्।
तदायुधानि तद्बाह्ये पूजयेत् साधकोत्तमः॥ १४८॥
अनेन विधिना देवीं महालक्ष्मीमुपासते।
एतेषु निवसेल्लक्ष्मीरस्मरन्ती निजालयम्॥ १४९॥
उत्पलेर्जुहुयाल्लक्षं चन्दनाम्भसि संस्थितैः।
लभेत् राज्यं शत्रुनाशं विना युद्धेन पार्थिवः॥ १५०॥
जपन्राजसभां गच्छेत् सम्भाव्येत तया नरः।
दूर्वा देवी महालक्ष्मीर्विष्णुकान्ता मधुव्रता॥ १५१॥
अशनी शक्रवल्ली च सदा भद्राञ्जलिः प्रिया।
हरिचन्दनकर्पूरलाक्षाचन्दनरोचनाः॥ १५२॥
मालूरकेशरी कुष्ठं सर्वं पिष्ट्वा निशारसैः।
अष्टोत्तरसहस्रन्तु जपित्वा तिलकक्रियाम्॥ १५३॥
कुर्वतो मन्त्रिणः सर्वे वशे तिष्ठन्त्यहर्निशम्।
श्रियो मन्त्रं जपेन्मन्त्री श्रीसूक्तान्यपि संजपेत्॥ १५४
भूयसीं श्रियमाकाङ्क्षन् सत्यवादी भवेत् सदा।
प्रत्यगाशामुखोऽश्नीयात् स्मितपूर्वं प्रियं वदेत्॥ १५५॥
भूषयेद् गन्धपुष्पाद्यैरात्मानं नियतः शुचिः।
शयीत शुभशय्यायां तरुण्या सह भार्य्यया॥ १५६॥

नग्नो नावतरेदम्भस्तैलाभ्यक्तो न भक्षयेत्।
हरिद्रां न मुखे लिम्पेन्न सुप्यादशुचिः क्वचित् ॥ १५७ ॥
न वृथा विलिखेद् भूमिं न विल्वं द्रोणमम्बुजम्।
न धारयेत् मूर्द्धि चैव नाद्यात् तैलञ्च केवलम् ॥ १५८ ॥
मलिनो न भवेज्जातु कुत्सितान्नं न भक्षयेत्।
द्रोणपङ्कजविल्वानि पद्भ्यां जातु न लङ्घयेत् ॥ १५९ ॥
महादेवीमिन्द्रवल्लीं श्रीदेवीं विष्णुवल्लभाम्।
कन्यां जम्बूप्रवालञ्च धारयेन्मूर्ध्नि सर्वदा ॥ १६० ॥
इत्याचारपरो नित्यं विष्णुभक्तो दृढव्रतः।
श्रियमाप्नोति महतीं देवानामपि दुर्लभाम् ॥ १६१ ॥
इति सारदातिलके अष्टमः पटलः।

---

## नवमः पटलः।

अथ वक्ष्ये जगद्धात्रीमधुना भुवनेश्वरीम्।
ब्रह्मादयोऽपि यां ज्ञात्वा लेभिरे श्रियमूर्जिताम् ॥ १ ॥
नकुलीशोऽग्निमारूढ़ो वामनेत्रार्द्धचन्द्रवान्।
वीजं तस्या यथाख्यातं सेवितं सिद्धिकाङ्क्षिभिः ॥ २ ॥
ऋषिः शक्तिर्भवेच्छन्दो गायत्री देवता मनोः।
कथिता स्वरसङ्गेन सेविता भुवनेश्वरी ॥ ३ ॥
षड्दीर्घयुक्तवीजेन कुर्य्यादङ्गानि षट् क्रमात्।
संहारसृष्टिमार्गेण मातृकान्यस्तविग्रहः ॥ ४ ॥
मन्त्रन्यासं ततः कुर्य्याद् देवताभावसिद्धये।
हृल्लेखां मूर्ध्नि वदने गगनां हृदयाम्बुजे ॥ ५ ॥
रक्तां करालिकां गुह्ये महोच्छुष्मां पदद्वये।
ऊर्द्धप्राग्दक्षिणे देव्याः पश्चिमेषु मुखेषु च ॥ ६ ॥

मत्यादिकस्वबीजाद्या न्यस्तव्या भूतसप्रभाः ।
अङ्गानि विन्यसेत् पश्चाज्जातियुक्तानि च क्रमात् ॥ ७ ॥
ब्रह्माणं विन्यसेद्भाले गायत्र्या सह संयुतम् ।
सावित्र्या संयुतं विष्णुं कपोले दक्षिणे न्यसेत् ॥ ८ ॥
वागीश्वर्या समायुक्तं वामगण्डे महेश्वरम् ।
श्रिया धनपतिं न्यस्येद् वामकर्णाग्रके पुनः ॥ ९ ॥
रत्या स्मरं मुखे न्यस्य पुष्ट्या गणपतिं न्यसेत् ।
सव्यकर्णोपरि निधी कर्णगण्डान्तरालयोः ॥ १० ॥
न्यस्तव्यौ वदने मूलं भूयश्चैतां स्तनौ न्यसेत् ।
कण्ठमूले स्तनद्वन्द्वे वामांसे हृदयाम्बुजे ॥ ११ ॥
सव्यांसे पार्श्वयुगले नाभिदेशे च देशिकः ।
भालांसपार्श्वजठरे पार्श्वांसापरके हृदि ॥ १२ ॥
ब्रह्माख्याद्यास्ततो न्यस्या विधिना प्रोक्तलक्षणाः ।
मूलेन व्यापकं देहे न्यस्य देवीं विचिन्तयेत् ॥ १३ ॥
उद्यद्दिनकरद्युतिमिन्दुकिरीटतुङ्गकुचां त्रिनयनयुक्ताम् ।
स्मेरमुखीं वरदाङ्कुशपाशाभीतिकरां प्रभजे भुवनेशीम् ॥ १
प्रजपन्मन्त्रविन्मन्त्रं द्वात्रिंशल्लक्षमानतः ।
त्रिस्वाद्युक्तैर्जुहुयादष्टद्रव्यैर्दशांशतः ॥ १५ ॥
दद्यादर्घ्यं दिनेशाय तत्र सञ्चिन्त्य पार्वतीम् ।
पद्ममष्टदलं बाह्ये वृत्तं षोडशभिर्दलैः ॥ १६ ॥
विलिखेत् कर्णिकामध्ये षट्कोणमतिसुन्दरम् ।
ततः संपूजयेत् पीठं नवशक्तिसमन्वितम् ॥ १७ ॥
जयाख्या विजया पश्चादजिता चापराजिता ।
नित्या विलासिनी दोग्ध्री त्वघोरा मङ्गला नव ॥ १८ ॥
बीजाद्यमासनं दत्त्वा मूर्त्तिं तत्रैव कल्पयेत् ।
तस्यां संपूजयेद्देवीमावाह्यावरणैः क्रमात् ॥ १९ ॥

मध्यप्राग्दक्षिणे दिव्यपश्चिमेषु यथाक्रमात् ।
हृल्लेखाद्याः समभ्यर्च्याः पञ्चभूतसमप्रभाः ॥ २० ॥
वरपाशाङ्कुशाभीतिधारिण्यो मितभूषणाः ।
स्थानेषु पूर्वयुक्तेषु पूजयेदङ्गदेवताः ॥ २१ ॥
षट्कोणेषु यजेन्मन्त्री पश्चान्मैथुनदेवताः ।
इन्द्रकोणे लसद्दण्डकुण्डिकाक्षगुणाभयाम् ॥ २२ ॥
गायत्रीं पूजयेन्मन्त्री ब्रह्माणमपि तादृशम् ।
रक्षःकोणे शङ्खचक्रगदापङ्कजधारिणीम् ॥ २३ ॥
सावित्रीं पीतवसनां यजेद्विष्णुञ्च तादृशम् ।
वायुकोणे परश्वक्षमालाभयवरान्विताम् ॥ २४ ॥
यजेत् सरस्वतीमच्छां रुद्रं तादृशलक्षणम् ।
वह्निकोणे यजेद्रत्नकुम्भं मणिकरण्डकम् ॥ २५ ॥
कराभ्यां बिभ्रतं पीतं तुन्दिलं धननायकम् ।
आलिङ्ग्य सव्यहस्तेन वामेनाम्बुजधारिणीम् ॥ २६ ॥
धनदाङ्कसमारूढां महालक्ष्मीं प्रपूजयेत् ।
वारुणे मदनं बाणपाशाङ्कुशशरासनाम् ॥ २७ ॥
धारयन्तं जवारक्तं पूजयेद्रत्नभूषणम् ।
सव्येन पतिमाश्लिष्य वामेनोत्पलधारिणीम् ॥ २८ ॥
पाणिना रमणाङ्कस्थां रतिं सम्यक् समर्चयेत् ।
ऐशान्ये पूजयेत् सम्यग्विघ्नराजं प्रियान्वितम् ॥ २९ ॥
शूलपाशधरं कान्तावराङ्गस्पृक् कराङ्गुलिम् ।
माध्वीपूर्णकपालाढ्यं विघ्नराजं दिगम्बरम् ॥ ३० ॥
पुष्करे विगलद्रत्नस्फुरच्चषकधारिणम् ।
सिन्दूरसदृशाकारा मुद्दामसदविभ्रमाम् ॥ ३१ ॥
धृतरक्तोत्पलामन्यपाणिना तद्ध्वजस्पृशम् ।
आश्लिष्टकान्तामरुणां पुष्टिमध्ये दिगम्बरीम् ॥ ३२ ॥

कर्णिकायां निधी पूज्यौ षट्कोणस्याथ पार्श्वयोः।
अङ्गानि केशरेष्वेताः पश्चात् पत्रेषु पूजयेत्॥ ३३॥
अनङ्गकुसुमा पश्चादनङ्गकुसुमातुरा।
अनङ्गमदना तद्वदनङ्गमदनातुरा॥ ३४॥
भुवनपाला गगनवेगा चैव ततः परम्।
शशिरेखा गगनरेखा चेत्यष्टशक्तयः पराः॥ ३५॥
पाशाङ्कुशवराभीतिधारिण्योऽरुणविग्रहाः।
ततः षोड़शपत्रेषु करालो विकराल्युमा॥ ३६॥
सरस्वती श्रीदुर्गाया लक्ष्मीश्रुत्यौ स्मृतिर्धृतिः।
श्रद्धा मेधा मतिः कान्तिरार्या षोड़श शक्तयः॥ ३७॥
खड्गखेटकधारिण्यः श्यामाः पूज्याः समन्ततः।
पश्चाद् बहिः समभ्यर्च्याः शक्तयः परिचारिकाः॥ ३८॥
प्रथमानङ्गरूपा स्यादनङ्गमदना ततः।
मदनातुरा भुवनवेगा भुवनपालिका॥ ३९॥
स्यात् सर्वशिशिरानङ्गवदनानङ्गमेखला।
चषकं तालवृन्तञ्च ताम्बूलं छत्रमुज्ज्वलम्॥ ४०॥
चामरे चांशुकं पुष्पं बिभ्राणा करपल्लवैः।
सर्वाभरणसन्दीप्तान् लोकपालान् बहिर्यजेत्॥ ४१॥
वज्रादीन्यपि तद्बाह्ये देवीमित्थं प्रपूजयेत्।
पूज्यते सकलैर्देवैः किं पुनर्मनुजोत्तमैः॥ ४२॥
मन्त्री त्रिमधुरोपेतैर्हुत्वाश्वत्थसमिद्वरैः।
ब्राह्मणान् वशयेच्छीघ्रं पार्थिवान् पद्महोमतः॥ ४३॥
पलाशपुष्पैस्तत्पत्नीं मन्त्रिणं कुमुदैरपि।
पञ्चविंशतिसञ्जप्तैर्जलैः स्नानं दिने दिने॥ ४४॥
आत्मानमभिषिञ्चेद् यः सर्वसौभाग्यवान् भवेत्।
पञ्चविंशतिसञ्जप्तं जलं प्रातः पिबेन्नरः॥ ४५॥

अवाप्य महतीं प्रज्ञां कवीनामग्रणीर्भवेत् ।
कर्पूरागुरुसंयुक्तं कुङ्कुमं स्वादुसाधितम् ॥ ४६ ॥
गृहीत्वा तिलकं कुर्य्याद्राजवश्यमनुत्तमम् ।
शालिं पिष्टमयीं कृत्वा पुत्तलीं मधुरान्विताम् ॥ ४७ ॥
जप्तां प्रतिष्ठितप्राणां भक्षयेद्रविवासरे ।
वशं नयति राजानं नारीं वा नरमेव वा ॥ ४८ ॥
कण्ठमात्रोदके स्थित्वा वीक्ष्य तोयगतं रविम् ।
त्रिसहस्रं जपेन्मन्त्रमिष्टकन्यां लभेत सः ॥ ४९ ॥
अन्नं तन्मन्त्रितं मन्त्री भुञ्जीत श्रीप्रसिद्धये ।
लिखित्वा भस्मना मायां सुसाध्यां फलकादिषु ।
तत्काले दर्शयेन्मन्त्री सुखं सूयेत गर्भिणी ॥ ५० ॥
शक्त्यन्तःस्थितसाध्यकर्मभवने वह्नेर्हृतं शक्तिभि-
र्बाह्ये कोणगतैर्युतं हरिहरैर्वर्णैः कपोलार्पितैः ।
पश्चात्तैः पुनरिंयुतैर्लिपिभिरप्यावीतमिष्टार्थदं
मन्त्रं भूपुरमध्यगं त्रिगुणितं सौभाग्यसम्पत्प्रदम् ॥ ५१ ॥
बीजान्तःस्थितसाध्यनामशरणो मायारमामन्मथै-
र्वीतं वह्निपुरद्वये रसपुटेष्वालिख्य बीजत्रयम् ।
मायामात्मकमीशिकं हरिहरैरावद्धगण्डं बहिः
षड्बीजैरनुबद्धसान्धिलिपिभिर्वीतं गृहाभ्यां भुवः ॥ ५२ ॥
चिन्तामणिनृसिंहाभ्यां लसत्कोणमिदं लिखेत् ।
यन्त्रं षड्गुणितं दिव्यं वहतां सर्वसिद्धिदम् ॥ ५३ ॥
बीजं व्याहृतिभिर्वृतं गृहयुगद्वन्द्वे वसोः कोणगं
दीर्घं बीजमनन्तरैर्लिपिवरैरावद्धगण्डं लिखेत् ।
गायत्र्या रविशक्तिरुद्धविवरं त्रिष्टुब्वृतं तत्ततो
बीजं मातृकया धरापुरयुगे संसिद्धचिन्तामणिम् ।५४॥
यन्त्रं दिनेशगुणितं प्रोक्तं रक्षाप्रसिद्धिदम् ।

सर्वसौभाग्यजननं सर्वशत्रुनिवारकम् ॥ ५५ ॥
लिखेत् सरोजं रसपत्रयुक्तं मध्ये दलेष्वप्यभिलिख्य मायाम्।
स्वरावृतं यन्त्रमिदं वधूनां पुत्रप्रदं भूमिगृहान्तरस्थम् ॥५६।
षट्कोणमध्ये प्रविलिख्य शक्तिं कोणेषु तामेव विलिख्य भूयः
समध्यगर्भं वसुधापुरस्तं यन्त्रं भवेद्वश्यकरं नराणाम् ॥५७।
वाग्भवं शम्भुवनिता रमाबीजत्रयात्मकम्।
मन्त्रं समुद्धरेन्मन्त्री त्रिवर्गफलसाधनम् ॥ ५८ ॥
षड्दीर्घभाजा मध्येन वाग्भवाद्येन कल्पयेत्।
षडङ्गानि मनोरस्य जातियुक्तानि मन्त्रवित्।
कुर्य्यात् पूर्वोदिताश्चासाम् तथैवात्रापि साधकः ॥ ५९ ॥
सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुर-
त्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम्।
पाणिभ्यां मणिरत्नशुद्धचषकं रक्तोत्पलं बिभ्रतीं
सौम्यां रत्नघटस्थसव्यचरणां ध्यायेत् परामम्बिकाम् ॥६०
रविलक्षं जपेन्मन्त्रं पायसैर्मधुराप्लुतैः।
दशांशं जुहुयान्मन्त्री पीठे प्रागीरिते यजेत् ॥ ६१ ॥
देवी प्रागुक्तमार्गेण गन्धाद्यैरतिशोभनैः।
हुत्वा पलाशकुसुमैर्वाक्श्रियं महतीं लभेत् ॥ ६२ ॥
ब्राह्मीघृतं पिबेज्जप्तं कवित्वं वत्सराद्भवेत्।
सिद्धार्थान् लवणोपेतान् हुत्वा मन्त्री वशं नयेत् ॥ ६३ ॥
नरनारीनरपतीनत्र कार्य्या विचारणा।
चतुरङ्गुलजैः पुष्पैश्चन्दनाम्भः समुक्षितैः ॥ ६४ ॥
हुत्वा वशीकरोत्याशु त्रैलोक्यमपि साधकः।
जुहुयादरुणाम्भोजैरयुतं मधुराप्लुतैः ॥ ६५ ॥
राज्यश्रियमवाप्नोति सतैललशुनैस्तथा।
प्रागुक्तान्यपि कर्माणि मन्त्रेणानेन साधयेत् ॥ ६६ ॥

वाग्बीजपुटिता माया विद्येयं खेचरी मता ।
मध्येन दीर्घयुक्तेन वाक्पुटेन प्रकल्पयेत् ॥ ६७ ॥
अङ्गानि जातियुक्तानि क्रमेण मनुवित्तमः ।
यथा पुरा समुद्दिष्टा न्यासान् कुर्वीत मन्त्रवित् ॥ ६८ ॥
श्यामाङ्गीं शशिशेखरां निजकरैर्दानञ्च रक्तोत्पलं
रत्नाढ्यं चषकं परं भयहरं संबिभ्रतीं शाश्वतीम् ।
मुक्ताहारलसत्पयोधरनतां नेत्रत्रयोल्लासिनीं
वन्देऽहं सुरपूजितां हरवधूं रक्तारविन्दे स्थिताम् ॥ ६९ ॥
तत्त्वलक्षं जपेन्मन्त्रं जुहुयात्तद्दशांशतः ।
पलाशपुष्पैः स्वाद्वक्तैः पुष्पैर्वा राजवृक्षजैः ॥ ७० ॥
हृल्लेखाविहिते पीठे पूजयेत् परमेश्वरीम् ।
मध्यादि पूजयेत् मन्त्री हृल्लेखाद्याः पुरोदिताः ॥ ७१ ॥
मिथुनानि यजेन्मन्त्री षट्कोणेषु यथा पुरा ।
अङ्गपूजा केशरेषु पूज्याः पत्रेषु मारुतः ॥ ७२ ॥
भैरवाङ्कसमारूढ़ाः स्मेरवक्त्रा मदालसाः ।
असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तसंज्ञकः ॥ ७३ ॥
कपाली भीषणः पश्चात् संहारी चाष्टभैरवाः ।
शूलं कपालं प्रेतञ्च बिभ्राणाः चुद्रदुन्दुभिम् ॥ ७४ ॥
जगद्दिगम्बरा भीमाः कुटिलालकशोभिनः ।
दीर्घाद्या मातरः प्रोक्ता ह्रस्वाद्या भैरवाः स्मृताः ॥ ७५ ॥
पूज्याः षोड़शपत्रेषु कराल्याद्याः पुरोदिताः ।
तद्बाह्येऽनङ्गरूपाद्या लोकेशास्त्राणि तद्बहिः ॥ ७६ ॥
एवमाराधयेद् देवीं शास्त्रोक्तेन तु वर्त्मना ।
वशं नयति राजानं रमिताश्च मदालसाः ॥ ७७ ॥
मनुनानेन जुहुयाल्लभते वसु वाञ्छितम् ।
सुगन्धैः कुसुमैर्हुत्वा श्रियमाप्नोति वाञ्छिताम् ॥ ७८ ॥

मन्त्रेणानेन संजप्तमश्नीयादन्नमन्वहम् ।
भवेदरोगी नियतं दीर्घमायुरवाप्नुयात् ॥ ७९ ॥
अनन्तो विन्दुसंयुक्तो मायाब्रह्माग्नितारवान् ।
पाशादिव्यक्षरो मन्त्रः सर्ववश्यफलप्रदः ।
ऋष्याद्याः पूर्वमुक्ताः स्युर्बीजेनाङ्गक्रिया मता ॥ ८० ॥
वराङ्कुशौ पाशमभीतिविद्यां करैर्वहन्तीं कमलासनस्थाम् ।
बालार्ककोटिप्रतिमां त्रिनेत्रां भजेऽहमाद्यां भुवनेश्वरीं ताम् ॥ ८१ ॥
हविष्यभुग्जपेन्मन्त्रं तत्त्वलक्षं जितेन्द्रियः ।
षट्सहस्रं प्रजुहुयाज्जपान्ते मन्त्रवित्तमः ॥ ८२ ॥
दधिक्षौद्रघृताक्ताभिः समिद्भिः क्षीरभूरुहाम् ।
तत्संख्ययात्तिलैः शुद्धैः जलाक्तैर्जुहुयात्ततः ॥ ८३ ॥
हृल्लेखाकल्पिते पीठे नवशक्तिसमन्विते ।
अर्चयेत् परमेशानीं वक्ष्यमाणक्रमेण ताम् ॥ ८४ ॥
हृल्लेखाद्या यजेदादौ कर्णिकायां यथाविधि ।
अङ्गानि केशरेषु स्युः पत्रस्था मातरः क्रमात् ॥ ८५ ॥
इन्द्रादयः पुनः पूज्या स्तेषामस्त्राणि तद्बहिः ।
एवं संपूजयेद् देवीं साक्षाद्वैश्रवणो भवेत् ॥ ८६ ॥
वन्द्यते सकलैर्लोकैस्तेजसा भास्करोपमः ।
अनेनाधिष्ठितं गेहं निशि दीपशिखाकुलम् ॥ ८७ ॥
दृश्यते प्राणिभिः सर्वैर्मन्त्रस्यास्य प्रभावतः ।
सर्षपैर्लोणसंमिश्रैराज्याक्तैर्जुहुयान्निशि ॥ ८८ ॥
राजानं वशयेत् सद्यस्तत्पत्नीमपि साधकः ।
अन्नवानन्नहोमेन श्रीमान्नवहुताद्भवेत् ॥ ८९ ॥
राजवृक्षसमुद्भूतैः पुष्पैर्हुत्वा कविर्भवेत् ।
अरोगी तिलहोमेन घृतेनायुरवाप्नुयात् ।
प्राक्प्रोक्तान्यपि कर्माणि साधयेत् साधकोत्तमः ॥ ९० ॥

आलिख्याष्टदिगर्गलाग्र्यु दरगं पाशादिकं तत्परं
कोष्ठेष्वङ्कमनून् परेषु विलिखेदष्टार्णमन्त्रद्वयम् ।
अथ्पूर्वापरषट्कयुग्मयवरान् व्योमासनानर्गले-
ष्वालिख्येन्द्रजलाधिपादिगुणशः पङ्क्तिद्वयात्तत्परम् ॥९१॥
कोष्ठेष्वष्टयुगार्णमात्मसहितां युग्मस्वरान्तर्गतां
मायां केशरागां दलेषु विलिखेन्मूलं त्रिपङ्क्तिक्रमात् ।
त्रिःपाशाङ्कुशवेष्टितञ्च लिपिभिर्वीतं क्रमादुत्क्रमात्
पद्मस्थेन घटेन पङ्कजमुखेनावेष्टितं तद्बहिः ॥ ९२ ॥
घटार्गलमिदं यन्त्रं मन्त्रिणां श्रीप्रदं महत् ।
पाशश्रीशक्तिकन्दर्पकामशक्तीन्दिराङ्कुशाः ॥ ९३ ॥
प्रथमोऽष्टाक्षरो मन्त्रस्ततः कामिनि रञ्जिनि ।
स्वाहान्तोऽष्टाक्षरः सद्भिरपरः कीर्त्तितो मनुः ॥ ९४ ॥
ह्रीं गौरि रुद्रदयिते योगेश्वरि सर्वकटाक्षदठान्तः ।
षोड़शार्णोऽयं मन्त्रः सद्भिरुदीरितः ॥ ९५॥
लिखित्वा भूर्जपत्रादौ यन्त्रमेतद् यथाविधि ।
धारयन् वामबाहौ वा कण्ठे वा निजमूर्द्धनि ॥ ९६ ॥
वशयेत् सकलान् मर्त्त्यान् विशेषेण महीपतीन् ।
नीलपट्टे विलिख्यैतद् गुटिकां कृत्य तत् पुनः ॥ ९७ ॥
साध्यप्रतिकृतेः सिक्थनिर्मितायाः हृदि न्यसेत् ।
पत्रे त्रिमधुरापूर्णे निःक्षिप्यैनां विधानतः ॥ ९८ ॥
संपूज्य गन्धपुष्पाद्यैर्बलिं निःक्षिप्य रात्रिषु ।
मूलमन्त्रं जपेन्मन्त्री नित्यमष्टसहस्रकम् ॥ ९९ ॥
सप्ताहाद्वाञ्छितां नारीमाकर्षेत् स्मरविह्वलाम् ।
भूर्जपत्रे विलिख्यैतद् गुटिकां कृत्य तत् पुनः ॥ १०० ॥
लाक्षया ताम्ररजतकाञ्चनैर्वेष्टयेत् क्रमात् ।
तत्कुम्भे न्यस्य संपूज्य यथावद्भुवनेश्वरीम् ॥ १०१ ॥

संस्पृश्य तं जपेन्मन्त्रं दिवाकरसहस्रकम् ।
अभिषिच्य प्रियं साध्यं बध्नीयाद् यन्त्रमाशिषाम् ॥ १०२॥
कान्तिपुष्टिधनारोग्ययशांसि लभते नरः ।
भित्तौ विलिख्य तन्मन्त्रं पूजयेन्नित्यमादरात् ॥ १०३ ॥
भूतप्रेतपिशाचास्तं न वीक्षितुमपि क्षमाः ।
तद्विलिख्य शिरस्त्राणे साधितं साधयन् भटः ।
युद्धे रिपून् बहून् हत्वा जयमाप्नोति पार्थिवत् ॥ १०४ ॥

वज्राङ्किते वह्निपुरत्वमितां
पाशाङ्कुशाभ्यामुदरस्थसाध्याम् ।
मध्येषु कोणेषु च बाह्यवृत्ते
पुनः पुनस्तान् विलिखेत् समन्तात् ॥ १०५ ॥

भूर्जे लिखितमेतत् स्यात् सर्ववश्यकरं नृणाम् ।
आरोग्यैश्वर्यजननं युद्धेषु विजयप्रदम् ॥ १०६ ॥

लिखेत् सरोजे स्वरकेशराढ्य-
वर्गाष्टपत्रे वसुधापुरस्थे ।
पाशाङ्कुशाभ्यां गुणशः प्रबद्धं
मायां लिखन्मध्यगतां सुसाध्याम् ॥ १०७ ॥

सर्वोत्तममिदं यन्त्रं धारितं कुरुते नृणाम् ।
आरोग्यैश्वर्यसौभाग्यविजयादीनवाप्नुयात् ॥ १०८ ॥

इति सारदातिलके नवमः पटलः ॥

---

## दशमः पटलः ।

ततोऽभिधास्ये त्वरितां त्वरितं फलदायिनीम् ।
तारो माया वर्मबीजस्तद्विरीशस्वरान्विता ॥ १ ॥
कूर्मस्तदन्तो भगवान् वह्निदीर्घतनुच्छदम् ।

संवर्त्तो भगवान्माया फडन्तो द्वादशाक्षरः ॥ २ ॥
मुनिरर्जुन आख्यातो विराट्छन्दः समीरितम् ।
त्वरिता देवता प्रोक्ता पुरुषार्थफलप्रदा ॥ ३ ॥
मायाविवर्जितान् वर्णान् मूर्ध्नि भाले गले हृदि ।
नाभिगुह्योरुयुग्मेषु जानुजङ्घापदेषु च ॥ ४ ॥
विन्यस्य व्यापकं कुर्य्यात् समस्तेनैव साधकः ।
कूर्माद्यैः सप्तभिर्वर्णैः पूर्वपूर्वविवर्जितैः ।
द्वाभ्यां द्वाभ्यां षडङ्गानि कल्पयेत् साधकोत्तमः ॥ ५ ॥
श्यामां बर्हिकलापशेखरयुतामाबद्धपर्णांशुकां
गुञ्जाहारलसत्पयोधरनतामष्टाहिपान् बिभ्रतीम् ।
ताडङ्काङ्गदमेखलागुणरणन्मञ्जीरतां प्रापिताम्
कैरातीं वरदाभयोद्यतकरां देवीं त्रिनेत्रां भजे ॥ ६ ॥
लक्षं संजप्य मन्त्रज्ञो मन्त्रमेनं जितेन्द्रियः ।
दशांशैर्जुहुयाद्बिल्वैर्मधुराक्तैः समिद्वरैः ॥ ७ ॥
हृल्लेखाकल्पिते पीठे नवशक्तिसमन्विते ।
पूजयेत्त्वरितां देवीं वक्ष्यमाणविधानतः ॥ ८ ॥
संवर्त्तको विन्दुयुतः कवचं सकलं वियत् ।
गजयुग्मं वियत्सेन्दुर्वर्मान्तो दीर्घविन्दुमान् ॥ ९ ॥
पञ्चाननाय हृदयं पीठमन्त्रः प्रकीर्त्तितः ।
दद्यादासनमेतेन मूर्त्तिं मूलेन कल्पयेत् ॥ १० ॥
षड्ङ्गैः प्रणीतां गायत्रीं केशरेष्वर्चयेत् क्रमात् ।
दलेषु पूजयेदेताः श्रीवीजाद्याः सुभूषिताः ॥ ११ ॥
हुङ्कारीं खेचरीं चण्डां छेदनीं क्षेपणीं स्त्रियम् ।
क्रोङ्कारीं क्षेमकारीञ्च लोके सायुधभूषणाम् ॥ १२ ॥
फट्कारीमग्रतो वाह्ये कोदण्डशरधारिणीम् ।
द्वारस्य पार्श्वयोः पूज्ये हैमवेत्रकराम्बुजे ॥ १३ ॥

जयाख्या विजयाख्या च किङ्कराय पदन्ततः ।
रक्ष रक्ष पदस्यान्ते त्वरिताज्ञा स्थिरो भव ॥ १४ ॥
वर्मास्त्रान्तेन मनुना किङ्करं तद्वद्धियर्जेत् ।
लगुड़ं विभ्रतं कृष्णं कृष्णावर्चसमूर्द्धजम् ॥ १५ ॥
आरण्यैर्वारुणैः पुष्पैरतिरम्यैः सुगन्धिभिः ।
पूजयेद्धूपदीपाद्यैर्नृत्यगीतैर्मनोहरैः ॥ १६ ॥
एवं सिद्धमनुर्मन्त्री नरनारीनरेश्वरैः ।
मान्यते वत्सरादर्वाक् लक्ष्म्या जितधनेश्वरः ॥ १७ ॥
योनिकुण्डं प्रकल्प्यात्र कुर्य्याद्धोमं निजेच्छया ।
मल्लिकाकुसुमैर्हुत्वा वशयेदखिलं जनम् ॥ १८ ॥
कृत्वा द्रोहादिशमनं पलाशकुसुमैर्हुतम् ।
इक्षुखण्डैः शुभैर्हुत्वा महतीमृद्धिमाप्नुयात् ॥ १९ ॥
दीर्घमायुरवाप्नोति दूर्वाहोमेन साधकः ।
धान्यैः प्रक्षालितैर्हुत्वा श्रियमिष्टामवाप्नुयात् ॥ २० ॥
यवैर्धान्यसमृद्धिः स्याद् गोधूमैरिष्टसिद्धयः ।
तण्डुलैरक्षया सिद्धिः स्याट्टद्धिर्महती तिलैः ॥ २१ ॥
मन्त्री नीलोत्पलैर्हुत्वा नृपपत्नीं वशं नयेत् ।
प्रबुद्धैः पङ्कजैर्हुत्वा वशं नयति मेदिनीम् ॥ २२ ॥
अशोकैः पुत्रमाप्नोति मधुकैरिष्टमाप्नुयात् ।
फलैर्जम्बूद्भवैर्हुत्वा लभते धनमीप्सितम् ॥ २३ ॥
पुष्पैः पाटलिसम्भूतैरिष्टामाप्नोति सुन्दरीम् ।
पुष्पैर्वकुलसम्भूतैः कीर्त्तिः स्यादनपायिनी ॥ २४ ॥
दीर्घमायुर्भवेदाम्रैश्चम्पकैः काञ्चनं लभेत् ।
कुर्वीत सर्षपैर्होमं शत्रुनाशकरं सुधीः ॥ २५ ॥
पत्रैर्वकुलजैर्हुत्वा शीघ्रमुत्सादयेदरीन् ।
शाल्मलीपत्रहोमेन सपत्नान् नाशयेत् ध्रुवम् ॥ २६ ॥

कोद्रवै: कुण्डलैस्तद्वन्निम्बैर्विल्वै र्मिथो हुनेत् ।
माषहोमेन मूक: स्यादुन्मत्तोऽचैर्भवेदरि: ॥ २७ ॥
अयुतं होमसंख्या स्याज्जपस्तावान् प्रकीर्त्तित: ।
स्नानं तन्मन्त्रितं तोयं सर्वव्याधिहरं स्मृतम् ॥ २८ ॥
तज्जप्तं चुलुकं तोयं मुखे क्षिप्तं विषापहम् ।
आर्त्ताय भेषजं दद्यान्मन्त्रेणानेन मन्त्रितम् ॥ २९ ॥
स भवेद् व्याधिनिर्मुक्तो मन्त्रस्यास्य प्रभावत: ।
त्रिलोहीमुद्रिका तेन मनुना साधुसाधिता ॥ ३० ॥
धृत्वा द्रोहादिशमनी सर्वव्याधिविनाशिनी ।
सर्वसम्पत्प्रदा नित्यं सर्ववश्यकरी मता ।
यद् यद्वाञ्छति मन्त्रज्ञस्तत्तदेकेन साधयेत् ॥ ३१ ॥
मध्ये सरोजे दशपत्रयुक्ते मायां लिखेद्वाञ्छितसाध्यगर्भाम् ।
तारादिवर्णान् दशपत्रसंस्थान् षट्कोणवीतं वसुधापुरस्थम् ॥३२॥
धृत्वद्रोहादिशमनं व्यालचौरभयापहम् ।
विधृतं त्वरितायन्त्रं विशेषाद्विजयप्रदम् ॥ ३३ ॥
तारं हुं विलिखेत् सरोजकुहरे साध्याभिधानान्वितं
मन्त्रार्णान् वसुसंख्यकान् वसुदलेष्वालिख्य तद्वाह्यत: ।
शक्त्या त्रि:परिवेष्टितं घटगतं मध्यस्थमज्ञाननं
यन्त्रं वश्यकरं ग्रहादिभयहृल्लक्ष्मीप्रदं कीर्त्तिदम् ॥ ३४ ॥
कोष्ठानां शतमेकविंशतियुतं धृत्वा ध्रुवं मध्यत:
साध्याढ्यं त्वरितं शिवादि विलिखेल्लेखां विना मन्त्रवित् ।
रेखाग्रेषु लसत् त्रिशूलमसकृत् संजप्य सम्पातितं
यन्त्रं चेड़महाभिचारशमनं वश्यावहं श्रीप्रदम् ॥ ३५ ॥
एकाशीतिपदेषु टान्तविवरे साध्यं लिखेन्मध्यत:
पश्चात् पंक्तिषु दिग्गतासु लिपिशो हंसं शिखान्तं लिखेत् ।
शिष्टेष्वीशनिशाचरादि विलिखेल्लक्ष्मीमनुं पंक्तिश:

शस्त्रादिवर्षषड्‌न्तया त्वरितया वीतं चतुर्दिक्ष्वपि ॥ ३६ ॥
लान्तैः प्रवीतं कमलासनेन घटेन वीजं कमलाननेन।
मसाधितं चक्रमनुग्रहाख्यं दद्याद्‌ यथावत् कनकादिबद्धम् ॥३७॥
कृत्वापमृत्युरोगादिक्ष्वेड़भूतमहाग्रहान्।
जित्वा वर्षशतं पुत्रैः पौत्रैर्लक्ष्म्या च नन्दति ॥ ३८ ॥
श्रीसामा याया मासा श्रीसानीयाच्च श्रेया नीसा।
माया नीला नाली यामा च्रेया लानीनीलायाच्चा ॥३९॥
लिखेच्चतुःषष्टिपदेषु विद्यानीशादिकन्यादिरमामनुन्तु।
बाह्ये यथावत्त्वरिताभिवीतं लान्तैश्च वीतं वरकाञ्चनस्थम् ॥४०॥
देशे पुरे वा नगरे गृहे वा विनिक्षिपेच्चक्रमिदं यथावत्।
तत्र ध्रुवं गोमहिषादिवृद्धिः सम्यक् प्रजाशस्यसमृद्धयः स्युः ॥४१॥
कवचं भगवांश्चण्डो मेरुः सर्गसमन्वितः।
त्रिकर्तृको समाख्याता विद्यावर्णत्रयात्मिका।
हृल्लेखैर्मन्त्रवर्णैः स्यादङ्गक्लृप्तिरुदीरिता ॥ ४२ ॥
नीला नाभेरधस्तादरुणरुचिधरः कण्ठदेशात् सितास्या
युक्तैर्दंष्ट्राकरालैरुदरपरिगतैर्भीषणाङ्गैश्चतुर्भिः।
दीपं कम्बुं रथाङ्गं करसरसिरुहैर्धारयन्ती जटान्ते
स्फूर्जन्ती तां सुखण्डां भवतु भयहरी देवता या त्रिनेत्रा ॥४३॥
त्रिलक्षं प्रजपेदेनमाज्येनान्ते दशांशतः।
हुत्वा पूर्वोक्तमार्गेण पूजयेत्तां त्रिकण्टकीम् ॥ ४४ ॥
त्रिशूलमुद्रां पाणिभ्यां बद्ध्वात्मानं त्रिकण्टकीम्।
ध्यायन् स्पृष्ट्वा जपेत् ग्रन्थं सद्यस्तं मुञ्चति ग्रहः ॥ ४५ ॥
खे रुद्रा त्रित्रिवर्गोऽयं विद्यावश्या त्रिकण्टकी।
मन्त्रार्णैरीरितैः कुर्यादङ्गषट्कं यथा पुरा ॥ ४६ ॥
पूर्वोक्तां देवतां ध्यायन् मन्त्रं त्रीणि शतं जपेत्।
दशांशं सर्पिषा हुत्वा वशयेत्त्वरिता नरान् ॥ ४७ ॥

तारो माया वाग्भवान्ते नित्यक्लिन्ने मदद्रवे ।
वाङ्मायावह्निजायान्तो मन्त्रः पञ्चदशाक्षरः ॥ ४८ ॥
द्वाभ्यां द्वाभ्यां पुनर्द्वाभ्यां द्वाभ्यां पञ्चभिरक्षरैः ।
वाचं विना समस्तेनाप्यङ्गषट्कमथाचरेत् ॥ ४९ ॥
द्वीपं त्रिकोणवितलं सुरद्रुममनोहरम् ।
कूजत्कोकिलनादाढ्यं मन्दमारुतसेवितम् ॥ ५० ॥
भृङ्गपुष्पलताकीर्णं उद्यच्चन्द्रदिवाकरम् ।
स्मृत्वा सुराब्धिमध्यस्थं तस्मिन् माणिक्यमण्डपे ॥ ५१ ॥
रत्नसिंहासनोपेते त्रिकोणोज्ज्वलकर्णिके ।
पद्मे संचिन्तयेद् देवीं साक्षात्त्रैलोक्यमोहिनीम् ॥५२॥
नित्यां भजे बालशशाङ्कचूड़ां पाशाङ्कुशैः कल्पलतां कपालम् ।
हस्तैर्वहन्तीमरुणां त्रिनेत्रामास्फालयन्तं कलयन्नकीन्ताम् ॥५३
त्रिलक्षं प्रजपेत् पीठं चतुःशक्तिसमन्वितम् ।
आंपूर्वां द्राविणीं रामां शम्भुकोणे समर्चयेत् ॥ ५४ ॥
आह्लादकारिणीं ज्येष्ठामाङ्काराभ्यां हुताशने ।
पूजयेत् क्षोभिणीं रौद्रीमूकाराद्यां निशाधिपे ॥ ५५ ॥
वायौ यजेद् गुह्यशक्तिं वाग्भवाद्यां विचक्षणः ।
मायाख्यमासनं दत्त्वा मूर्त्तिं मूलेन कल्पयेत् ॥ ५६ ॥
अत्र संपूजयेद्देवीं वक्ष्यमाणविधानतः ।
अङ्गार्चना केशरेषु दलेष्वेताः समर्चयेत् ॥ ५७ ॥
आद्या नित्या सुभद्राख्या मङ्गला नववीरिणी ।
सुभगा दुर्भगा भूयः सप्तमी स्यान्मनोन्मनी ॥ ५८ ॥
अष्टमी भद्ररूपा च वीणावादनतत्परा ।
रक्ता मनोहरा दूत्यः सुवेशा मदमन्थराः ॥ ५९ ॥
आद्यन्तयुग्मरहिताः स्वराः क्लीवविवर्जिताः ।
विन्दन्ता मनवस्तासामनङ्गस्मरमन्मथाः ॥ ६० ॥

कामो मारश्च पञ्चेषुः पाशाङ्कुशधनुर्भृतः।
अपराङ्गनिषङ्गाढ्या रक्ताः पूज्याः स्वभूषणाः॥ ६१॥
मान्मथं व्योमसर्गाढ्यं तेषां वीजमुदाहृतम्।
रतिः स्याद्विरतिः प्रीतिरप्रीतिर्मतिदुर्मती॥ ६२॥
धृतिः स्याद्विरतिस्तुष्टिरतुष्टिश्च दश स्मृताः।
रक्ता वीणाकरा द्वे द्वे कामानां पार्श्वयोः स्थिताः॥६३॥
सर्वाभरणसम्पन्नाः पूज्याः स्मेरमुखाम्बुजाः।
क्लीवोष्ठद्वयनिर्मुक्तसुराढ्यश्चतुराननः॥ ६४॥
विन्दुमान् वीजमेतासां क्रमाल्लोकेश्वराश्च हि।
एवं संपूजयेद्देवीं देवानामपि दुर्लभाम्॥ ६५॥
परमैश्वर्य्यमाप्नोति प्रार्थ्यते वनिताजनैः।
वाग्भवं मान्मथं वीजं नित्यक्लिन्ने मदे पुनः॥ ६६॥
द्रवे वह्निवधूर्मन्त्रो द्वादशार्णोऽयमोरितः।
ऋषिः स्यात्सम्मोहनश्छन्दो विवृन्नित्या च देवता।
वाचा कृत्वा षड़ङ्गानि नित्यां ध्यायेन्निजेष्टदाम्॥ ६७॥

अर्द्धेन्दुमौलिमरुणाममराभिवन्द्या-
मम्भोजपाशसृणिपूर्णकपालहस्ताम्।
रक्ताङ्गरागवसनाभरणां त्रिनेत्रां
ध्यायेच्छिवस्य वनितां मदविह्वलाङ्गीम्॥ ६८॥

चतुर्लक्षं जपित्वान्ते मधुराक्तैर्मधूकजैः।
कुसुमैरयुतं हुत्वा तोषयेद् गुरुमात्मनः॥ ६९॥
शक्तिपीठे यजेद्देवीं वक्ष्यमाणेन वर्त्मना।
अङ्गान्यर्चेद् यथापूर्वं ततः शक्तीरिमा यजेत्॥ ७०॥
नित्या निरञ्जना क्लिन्ना क्लेदिनी मदनातुरा।
मदद्रवा द्राविणी च द्रविणेत्यष्टशक्तयः॥ ७१॥
नीलोत्पलकपालाढ्यकरा रक्ताम्बुजेक्षणाः।

लोकपालान् यजेदन्ते वाहनायुधसंयुतान् ॥ ७२ ॥
सिद्धमन्त्रो जपेन्मन्त्री सहस्रं शयने स्थितः ।
यां विचिन्त्य स्त्रियं रात्रौ सा समायाति तत्क्षणात् ॥ ७३॥
वाङ्मायानन्तरं भूयो नित्यक्लिन्ने मदद्रवे ।
द्विठान्तो रविसंख्यार्णो मन्त्रो वश्यप्रदायकः ॥ ७४ ॥
अङ्गिराः स्यादृषिस्त्रिष्टुपूछन्दो मुनिभिरीरितम् ।
वज्रप्रस्तारिणी प्रोक्ता देवताभीष्टदायिनी ॥ ७५ ॥
वाग्भवेन षडङ्गानि विदध्यान्मन्त्रवित्तमः ।
वज्रप्रस्तारिणीं ध्यायेत् समाहितमनास्ततः ॥ ७६ ॥
रक्ताब्धौ रत्नपोते रविदलकमलाभ्यन्तरे सन्निषण्णां
रक्ताङ्गीं रक्तमौलिस्फुरितशशिकलां स्मेरवक्त्रां त्रिनेत्राम् ।
वीजापूरेशपाशाङ्कुशमदनधनुःसत्कपालानि हस्तै-
र्बिभ्राणामानताङ्गीं स्तनभरनमितामम्बिकामाश्रयामः ॥७७॥
मन्त्रं मन्त्री जपेल्लक्षं जपान्ते जुहुयात् पुनः ।
अमृतं राजवृक्षोत्थैर्घृतमिश्रैः समिद्वरैः ॥ ७८ ॥
शक्तिपीठे यजेद् देवीमरुणैः कुसुमादिभिः ।
अङ्गानि केशरेषु स्युरर्चनीया दलेष्विमाः ॥ ७९ ॥
हृल्लेखा क्लेदिनी क्लिन्ना क्षोभिणी मदनातुरा ।
निरञ्जना रागवती सप्तमी मदनावती ॥ ८० ॥
मेखला द्राविणी पश्चाद्वेगवत्यपरा स्मरा ।
कपालोत्पलधारिण्यः शक्तयो रक्तविग्रहाः ॥ ८१ ॥
मातरो दिग्विदिक्ष्वर्च्याः पुनः पूज्याः दिगीश्वराः ।
भजन् मन्त्रमनुं नित्यमर्चनादिभिरादरात् ॥ ८२ ॥
दरिद्रो रोगनिर्मुक्तः स जीवेच्छरदां शतम् ।
अस्मिन् मन्त्रे ततो मन्त्री वशयेदखिलं जगत् ॥ ८३ ॥
नित्यामन्त्रैरधः कुर्य्यान्मुखचालनमन्वहम् ।

अञ्जनं तिलकं पुष्पं धारयेन्मन्त्रितं सुधीः॥ ८४॥
ताम्बूलं मन्त्रितं दद्यादेन्मन्त्री स स्याज्जगत्प्रियः।
श्रीमाया मदनैः प्रोक्तो मन्त्रो वीजत्रयात्मकः॥ ८५॥
ऋषिः सम्मोहनश्छन्दो गायत्री देवता स्मृता।
त्रिपुटाख्या द्विरुक्तैस्तैर्वीजैरङ्गानि षट्क्रमात्॥ ८६॥
पारिजातवने रम्ये मण्डपे मणिकुट्टिमे।
रत्नसिंहासने रम्ये पद्मे षट्कोणशोभिते॥ ८७॥
अधस्तात् कल्पवृक्षस्य निषण्णां देवतां स्मरेत्॥ ८८॥
चापं पाशाम्बुजसरसिजान्यङ्कुशं पुष्पशाणान्
बिभ्राणां तां करसरसिजै रत्नमौलिं त्रिनेत्राम्।
हेमाब्जाभां कुचभरनतां रत्नमञ्जीरकाञ्ची
ग्रैवेयाद्यैर्विलसिततनुं भावयेच्छक्तिमाद्याम्॥ ८९॥
चामरादर्शताम्बूलकरण्डकसमुद्गकान्।
वहन्तीभिः कुचार्त्ताभिर्दूतीभिः परिवारिताम्॥ ९०॥
करुणामृतवर्षिण्या पश्यन्तीं साधकं दृशा।
भानुलक्षं जपेदेनं मनुं तावत् सहस्रकम्॥ ९१॥
विल्वारग्वधसम्भूतैर्मधुराक्तैः समिद्वरैः।
जवापुष्पैश्च जुहुयात्तोषयेद्वसुना गुरुम्॥ ९२॥
हृल्लेखाविहिते पीठे पूजयेत्तां यथाविधि।
अग्न्यादिषट्सु कोणेषु लक्ष्म्याद्याः परिपूजयेत्॥ ९३॥
लक्ष्मीं हेमप्रभां तन्वीं शवराजयुगाभयाम्।
चक्रशङ्खगदाम्भोजधरं हेमनिभं हरिम्॥ ९४॥
पाशाङ्कुशाभयाभीष्टधरां गौरीं जवारुणाम्।
मृगटङ्काभयाभीष्टधरं स्वर्णनिभं शिवम्॥ ९५॥
नीलोत्पलकरां सौम्यां रतिं काञ्चनसन्निभाम्।
धृतपाशाङ्कुशेष्वासं पुष्पेषुमरुणं स्मरम्॥ ९६॥

पूर्ववद्विधियुग्मन्तु यजेदुभयपार्श्वयोः ।
बहिरङ्गानि संपूज्य पूज्याः पत्रेषु मातरः ॥ ९७ ॥
लोकेशान् वनितारूपानर्चयेत् सौम्यविग्रहान् ।
इत्थं यः पूजयेद्देवीं नित्यं भक्तिसमन्वितः ॥ ९८ ॥
संप्राप्य कवितां दिव्यां प्राप्य लक्ष्मीमनश्वराम् ।
सौभाग्यमतुलं लब्ध्वा विहरेत् सुचिरं भुवि ॥ ९९ ॥
पाशाङ्कुशपुटा शक्तिर्भिण्टीशो गगनं सक्रत् ।
परमेश्वरि शब्दान्ते द्विठान्तः प्रणवादिकः ॥ १०० ॥
चन्द्रारूढ़ा मनुः प्रोक्तस्त्रयोदशभिरक्षरैः ।
द्वाभ्यामेकेन चैकेन द्वाभ्यां पञ्चभिरक्षरैः ।
द्वाभ्यामङ्गानि षट् कुर्य्यात्ततो देवीं विचिन्तयेत् ॥ १०१ ॥
रक्तामब्जाधिरूढ़ां शशधरशकलां बद्धमौलिं त्रिनेत्रां
पाशेनाबद्धसाध्यां स्मरशरविवशां दक्षिणेनानयन्तीम् ।
हस्तेनान्येन वेत्रं वरकनकमयं धारयन्तीं मनोज्ञां
देवीं ध्यायेदजस्रं कुचभरनमितां दिव्यहाराभिरामाम् ॥ १०२
बाणलक्षं जपेन्मन्त्रमाज्येनान्ते जितेन्द्रियः ।
दशांशं जुहुयाद्देवीं शक्तिपीठे समर्चयेत् ॥ १०३ ॥
पाशादित्र्यक्षरोक्तेन विधानेन समाहितः ।
साज्याब्जाब्जहुतान्मन्त्री वाञ्छितं लभते वसु ॥ १०४ ॥
लवणैर्मधुरासिक्तैर्होमेन वशयेन्नृपान् ।
तेनैव विधिना मन्त्री वशयेद् वनितामपि ॥ १०५ ॥
लिख्य कोष्ठानि विकारसंख्यान्यस्तं चतुष्के प्रणवं सुसाध्यम् ।
ष्वथ द्वादशमन्त्रवर्णान् लिखेदिदं यन्त्रमशेषवश्यम् ॥ १०६ ॥
माया ह्रङ्गगवत्यन्ते माहेश्वरिपदं भवेत् ।
चन्द्रपूर्णं ठयुगलं मनुः सप्तदशाक्षरः ।
अङ्गानि मायया कुर्य्यात्ततो देवीं विचिन्तयेत् ॥ १०७ ॥

रक्तां विचित्रवसनां नवचन्द्रचूडा-
मन्नप्रदाननिरतां स्तनभारनम्राम्।
नृत्यन्तमिन्दुशकलाभरणां विलोक्य
हृष्टां भजे भगवतीं भवदुःखहन्त्रीम्॥ १०८॥
यथाविधि जपेन्मन्त्रं वसुयुग्मसहस्रकम्।
साज्येनान्नेन जुहुयाद्दशांशं तदनन्तरम्॥ १०९॥
शक्तिपीठे यजेद्देवीमङ्गलोकेश्वरायुधैः।
प्रातरेनं जपेन्मन्त्रं नित्यमष्टोत्तरं शतम्॥ ११०॥
तस्मादन्नसमृद्धिः स्याच्छ्रिया सह महीयसी।
माया पद्मावतिपदं ततः पावकवल्लभा॥ १११॥
समार्णो मनुराख्यातः सर्ववश्यप्रदायकः।
अङ्गानि मायया कृत्वा ध्यायेत् त्रैलोक्यमोहिनीम्॥११२॥
पद्मासनस्थां करपङ्कजाभ्यां रक्तोत्पले सन्दधतीं त्रिनेत्राम्।
आबिभ्रतीमाभरणानि रक्तां पद्मावतीं पद्ममुखीं नमामि
॥ ११३॥
पञ्चलक्षं जपेन्मन्त्रं दशांशैर्जुहुयाद् घृतैः।
शक्तिपीठे यजेद्देवीमङ्गाद्यावरणान्विताम्॥ ११४॥
किञ्जल्केष्वङ्गपूजा स्यात् पूज्याः पत्रेषु मातरः।
लोकपाला बहिः पूज्या स्तदस्त्राणि ततो बहिः॥११५॥
इत्थं यो भजते मन्त्रं जपहोमार्चनादिभिः।
सुभगः सर्वनारीणां भवेत् काम इवापरः॥ ११६॥
षडस्रमध्ये प्रविलिख्य शक्तिं कोणेषु शिष्टानि षडक्षराणि।
तद्बाह्यतो मातृकयाभिवीतं पद्मावतीयन्त्रमिदं प्रशस्तम्॥११७॥
तारं शिरसि विन्यस्येद्देवीं सञ्चिन्त्य भारतीम्।
शक्तिबीजं न्यसेद्भाले संस्मृत्य भुवनेश्वरीम्॥ ११८॥
श्रयसी नेत्रयोर्न्यस्येद्ध्यात्वा सूर्य्यं हुताशनम्।

मुखवृत्ते च विन्यस्येद्दान्तं चन्द्रमनुं स्मरन् ॥ ११९ ॥
जिह्वायां विन्यसेद् बीजं रमायास्तां विचिन्तयन् ।
स्वाहार्णौ गण्डयोर्न्यस्येत्तद्गजेन्द्रधिया सुधीः ॥ १२० ॥
अमठन्यासमाख्यातं कुर्वन् प्रतिदिनं नरः ।
कीर्तिश्रीकान्तिमेधानां वल्लभो भवति ध्रुवम् ॥ १२१ ॥
इति श्रीसारदातिलके दशमः पटलः ॥

---

## एकादशः पटलः ॥

ततो दुर्गामनुं वक्ष्ये दृष्टादृष्टफलप्रदाम् ।
मायात्रिकर्णबिन्द्वाढ्यो भूयोऽसौ सर्गवान् भवेत् ॥ १ ॥
पञ्चान्तकः प्रतिष्ठावान्मारुतो भौतिकासनः ।
ताराद्यिहृदयान्तोऽयं मन्त्रो वस्वक्षरात्मकः ॥ २ ॥
ऋषिः स्यान्नारदश्छन्दो गायत्री देवता मनोः ।
दुर्गा समीरिता सद्भिर्दुरितापन्निवारिणी ॥ ३ ॥
नमस्कारवियुक्तेन मूलमन्त्रेण साधकः ।
क्रमाद्यैः सह कुर्वीत षडङ्गानि यथाविधि ॥ ४ ॥
सिंहस्था शशिशेखरा मरकतप्रख्या चतुर्भिर्भुजैः
शङ्खं चक्रधनुःशरांश्च दधती नेत्रैस्त्रिभिः शोभिता ।
आमुक्ताङ्गदहारकङ्कणरणत्काञ्चीक्वणन्नूपुरा
दुर्गा दुर्गतिहारिणी भवतु वो रत्नोल्लसत्कुण्डला ॥ ५ ॥
वसुलक्षं जपेन्मन्त्रं तिलैर्मधुरलोलितैः ।
पयोऽन्धसा वा जुहुयात्तत्सहस्रं जितेन्द्रियः ॥ ६ ॥
पीठमित्थं यजेत् सम्यङ्नवशक्तिसमन्वितम् ।
प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी पुनः ॥ ७ ॥
सुप्रभा विजया सर्वसिद्धिदा नव शक्तयः ।

स्वरैर्ङ्कसमयक्षीवरस्थितैः पूजयेदिमाः ॥ ८ ॥
प्रणवानन्तरं वज्रनखदंष्ट्रायुधाय च।
महासिंहाय वर्मास्त्रनतिः सिंहमनुर्मतः ॥ ९ ॥
दद्यादासनमेतेन मूर्त्तिं मूलेन कल्पयेत्।
तस्यां प्रपूजयेन्मूर्त्तौ देवीमावाह्य मन्त्रवित् ॥ १० ॥
षडङ्गावृतिं पुराभ्यर्च्य शक्तीः पत्रेषु पूजयेत्।
जया च विजया कीर्त्तिः प्रीतिः पश्चात् प्रभा पुनः ॥११॥
श्रद्धा मेधा श्रुतिः प्रोक्ता स्वनामाद्यक्षरादिकाः।
पत्राग्रेष्वर्चयेदष्टावायुधानि यथाक्रमम् ॥ १२ ॥
शङ्खचक्रगदाखड्गपाशाङ्कुशशरान् धनुः।
लोकेश्वरांस्ततो बाह्ये तेषामस्त्राण्यनन्तरम् ॥ १३ ॥
इत्थं जपादिभिर्मन्त्री जपसिद्धिविधानवित्।
कुर्य्यात् प्रयोगानेतेन मनुना सुमनोषितान् ॥ १४ ॥
प्रतिष्ठाप्य विधानेन कलसान्नव शोभनान्।
रत्नहेमादिसंयुक्तान् पदेषु नव संस्थितान् ॥ १५ ॥
मध्यस्थे पूजयेद्देवीमितरेषु जयादिकाः।
संपूज्य गन्धपुष्पाद्यैरभिषिञ्चेन्नराधिपम् ॥ १६ ॥
राजा विजयते शत्रून् योधको विजयश्रियम्।
प्राप्नोति रोगी दीर्घायुः सर्वव्याधिविवर्जितः ॥ १७ ॥
वन्ध्याभिषिक्ता विधिना लभते तनयं वरम्।
मन्त्रेणानेन संजप्तमाज्यं क्षुद्रग्रहापहम्।
गर्भिणीनां विशेषेण जप्तं भक्ष्यादिकं तथा ॥१८॥
मध्ये तारे वीजवन्तः स्वसाध्यं पत्रेष्वष्टौ मन्त्रवर्णान् विलिख्य।
त्रिष्टुब्वीतं वेष्टितं मातृकार्णैर्यन्त्रं दीर्घं भूपुरस्थं विदध्यात् ॥१९॥
क्षुद्रभूतमहारोगसर्पचौरनिवारणम्।
विजयं श्रीप्रदं पुंसां गर्भिणीनां सुतप्रदम् ॥ २० ॥

भ्रान्तं चिरं समयनं श्वेतमर्दिनि ठद्वयम् ।
अष्टाचरीयमाख्याता विद्या महिषमर्दिनी ॥ २१ ॥
महिषामोहिके हुं फट् स्वाहेति परिकीर्त्तितम् ।
महिषघ्नो याविं हुं फट् शिरः समुदाहृतम् ॥ २२ ॥
महिषं हेषय द्वन्द्वं हुं फड़न्तं शिखामनुः ।
महिषं हन युग्मान्ते देवि हुं फट् तनुच्छदम् ॥ २३ ॥
महिषान्ते सूदनि हुं फड़न्तं मन्त्रमीरितम् ।
मन्त्रैरेतैर्जातिपुष्पैः पञ्चाङ्गानि प्रकल्पयेत् ॥ २४ ॥
गारुड़ोपलसन्निभां मणिमयकुण्डलमण्डितां
नौमि भालविलोचनां महिषोत्तमाङ्गनिषेदुषीम् ।
चक्रशङ्खकृपाणखेटककरालकार्मुकशूलकान्
तर्जनीमपि बिभ्रतीं निजबाहुभिः शशिशेखराम् ॥२५॥
अष्टलक्षं जपेन्मन्त्रं तत्सहस्रं तिलैः शुभैः ।
हुत्वा प्रागीरिते पीठे यजेन्महिषमर्दिनीम् ॥ २६ ॥
संपूज्याङ्गानि पत्रेषु दुर्गाख्यां वरवर्णिनीम् ।
आर्य्याह्वयां तृतीयाञ्च चतुर्थीं कनकप्रभाम् ॥ २७ ॥
पञ्चमीं कृत्तिकां संज्ञां षष्ठीमप्यभयप्रदाम् ।
कन्यां सुरूपां प्रयजेन्मन्त्री दीर्घस्वरैः क्रमात् ॥ २८ ॥
यजेद्दग्रेष्वायुधानि चक्रशङ्खासिखेटकान् ।
बाणं बाणासनं शूलं कपालं तर्जनीं क्रमात् ॥ २९ ॥
लोकपालाः पुनः पूज्यास्तदस्त्राणि ततः परम् ।
वशयेत्तिलहोमेन नरान्नरपतीनपि ॥ ३० ॥
सिद्धार्थैर्जुहुयान्मन्त्री रोगान्मुच्येत तत्क्षणात् ।
पद्मं हुत्वा जयेच्छत्रून् दूर्वाभिः शान्तिमाप्नुयात् ॥ ३१ ॥
पलाशकुसुमैः पुष्टिं धान्यैर्धान्यश्रियं व्रजेत् ।
काकपक्षैः कृतो होमो द्वेषं वितनुते नृणाम् ॥ ३२ ॥

मरिचहोमात्मरणं रिपुराप्नोति सर्वथा।
क्षुद्रारिचौरभूताद्यान् ध्यात्वा देवीं विनाशयेत्॥ ३३॥
तारो दुर्गे युगं रक्षमन्त्याकृढं सलोचनम्।
द्विठान्ता जयदुर्गेयं विद्या वेद्या दशाक्षरी॥ ३४॥
तारादि दुर्गे हृदयं दुर्गे शिर उदीरितम्।
दुर्गायै स्याच्छिखा वर्मभूतरक्षिणि कीर्त्तितम्॥ ३५॥
तारादि दुर्गे द्वितयं रक्षिण्यक्षि समीरितम्।
तारादि दुर्गे युगलं रक्षिण्यस्त्रमुदीरितम्॥ ३६॥
कालाभ्राभां कटाक्षैररिकुलभयदां मौलिबद्धेन्दुलेखां
शङ्खं चक्रं कृपाणं त्रिशिखमपि करैरुद्वहन्तीं त्रिनेत्राम्।
सिंहस्कन्धाधिरूढां त्रिभुवनमखिलं तेजसा पूरयन्तीं
ध्यायेद्दुर्गां जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामैः॥३७
बाणलक्षं जपेन्मन्त्रं घृतेन जुहुयात्ततः।
दशांशं संस्कृते वह्नौ ब्राह्मणानपि भोजयेत्॥ ३८॥
अष्टाक्षरोदिते पीठे पूजयेत् पूर्ववत् सुधीः।
मन्त्रं जपन् विंशलक्षं शक्रं हन्याद्विशेषतः॥ ३९॥
प्रजपेद्व्यवहारादौ तत्रापि विजयी भवेत्।
अर्चयेदस्त्रशस्त्राणि युद्धार्थी विद्ययानया॥ ४०॥
ज्वल ज्वल पदस्यान्ते शूलिनीशपदन्ततः।
दुष्टग्रहे हुमस्त्रान्ते वह्निजायावधिर्मनुः॥ ४१॥
भूतेन्द्रियाक्षरैः प्रोक्तो क्षुद्रग्रहविनाशनः।
ऋषिर्दीर्घतपाः प्रोक्तः ककुप्छन्द उदाहृतम्॥ ४२॥
शूलिनी देवता प्रोक्ता समस्तसुरवन्दिता।
दुर्गे ह्वरदे शीघ्रं विन्दुवासिनि तच्छिखा॥ ४३॥
असुरान्ते मर्दिनी स्याद् युद्धपूर्वप्रिये पुनः।
त्रासय द्वितयं धर्मदेवासिद्धसुपूजिते॥ ४४॥

नन्दिनि स्यात् क्षुद्रयुगं महायोगेश्वरि क्रमात् ।
शूलिन्याद्या हुं फडन्ता पञ्चाङ्गमनवः स्मृताः ॥ ४५ ॥

मध्यारूढां मृगेन्द्रं सजलजलधरश्यामलां हस्तपद्मैः
शूलं बाणं कृपाणन्त्वसिजलजगदाचापपाशान् वहन्तीम् ।
चन्द्रोत्तंसां त्रिनेत्रां चतसृभिरसिना खेटकं बिभ्रतीभिः
कन्याभिः सेव्यमानां प्रतिभयभयदां शूलिनीं भावयामि ॥४६॥

मनुमेनं जपेन्मन्त्री वर्णलक्षं विचक्षणः ।
सर्पिषान्नेन जुहुयात्तद्दशांशेन साधकः ॥ ४७ ॥
प्रागुक्ते पूजयेत् पीठे वक्ष्यमाणेन वर्त्मना ।
विधाय पूजामङ्गानां पूज्याः पत्रेषु शक्तयः ॥ ४८ ॥
दुर्गाद्या वरदाविन्ध्यवासिन्यसुरमर्दिनी ।
युद्धप्रिया पञ्चमी स्याद्देवेशि त्वं सुपूजिता ॥ ४९ ॥
सप्तमी नन्दिनी प्रोक्ता महायोगेश्वरी परा ।
दलाग्रेषु तदस्त्राणि चक्रं शङ्खमसिं पुनः ॥ ५० ॥
दलेषु चापशूलानि पाशं पश्चाद् दिशोऽधिपान् ।
इत्थं जपादिभिः सिद्धः कुर्य्यात् कर्म निजेप्सितम् ॥ ५१ ॥
अष्टोत्तरसहस्रं यस्तिलैस्त्रिमधुराप्लुतैः ।
नित्यं प्रजुहुयात्तस्य शक्तिः स्यादतिमानुषी ॥ ५२ ॥
अष्टोत्तरशतं नित्यं सर्पिषा जुहुयान्नरः ।
वाञ्छितं वत्सरादर्वाक् प्राप्नोति महतीं श्रियम् ॥ ५३ ॥
दूर्वाहोमो भवेन्नॄणां सर्ववाञ्छितसिद्धिदः ।
छुरिकाद्यानि शस्त्राणि जप्तानि मनुनामुना ॥ ५४ ॥
सम्पाताज्यविलिप्तानि वितन्वन्ति जयश्रियम् ।
अश्वत्थार्कसमिद्भिर्वा तिलैर्वा मधुरोक्षितैः ॥ ५५ ॥
होमो वशयति क्षिप्रमीप्सितान् मन्त्रितो नरान् ।
चक्रगदायुधहस्तां तां देवीं कालघनप्रभाम् ॥ ५६ ॥

ध्यात्वात्मानं जपेन्मन्त्रं स्पृष्टार्तं मुञ्चति ग्रहः।
सर्पाखुवृश्चिकादीनां विषमाशु विनाशयेत् ॥ ५७ ॥
मनुनानेन विधिवन्मन्त्रः सिद्धिमुपेयिवान्।
मन्त्रेणानेन संजप्तान् बाणानादाय योधकः ॥ ५८ ॥
विमुञ्चेत् प्रतिसेनायां सा द्रुतं विद्रुता भवेत्।
शूलपाशधरां देवीं ध्यात्वात्मानमनाकुलः ॥ ५९ ॥
प्रविशेद् युद्धदेशं यो जित्वा याति स निर्वृतिम्।
जुहुयात्तिलसिद्धार्थैर्लवणैर्मकं यथाविधि ॥ ६० ॥
नामयुक्तं जपेन्मन्त्रं यस्यासौ मृतिमेष्यति।
गुटिकां गोमयोत्पन्नां हुत्वा चोत्तरसंख्यया ॥ ६१ ॥
सप्ताहात् कुरुते मन्त्री विद्वेषं स्निग्धयोर्मिथः।
गृहीत्वा गोमयं व्योम्नि त्रिसहस्रं जपेत्ततः ॥ ६२ ॥
गमिष्यतां द्वारदेशे निखातं स्तम्भनं भवेत्।
बहुनोक्तेन किं सर्वं साधयेन्मनुनामुना ॥ ६३ ॥
उत्तिष्ठपदमाभाष्य पुरुः शिष्ये पदं पुनः।
पितामहः सनेत्रेन्दुः स्वर्पिपि स्वाभयञ्च मे ॥ ६४ ॥
समुपस्थितमुच्चार्य यदि शक्यमनन्तरम्।
अशक्यं वा पुनस्तस्मै वदेद्भगवतीन्ततः ॥ ६५ ॥
शमयाग्निं वधूः सप्तत्रिंशद्वर्णात्मको मनुः।
ऋषिरारण्यकः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ॥ ६६ ॥
देवता नवदुर्गाख्या सर्वदुर्गतिमोचनी।
पदाष्टसन्धिषु गुदलिङ्गाधारोदरेषु च ॥ ६७ ॥
पार्श्वहृत् स्तनकण्ठेषु पुनर्बाहुष्टसन्धिषु।
मुखनासाकपोलाक्षिकर्णभ्रूमध्यमूर्धसु ॥ ६८ ॥
यन्त्र चराणि विन्यस्येद् देवताभावसिद्धये।
षड्भिश्चतुर्भिरष्टाभिरष्टभिः षड्भिरिन्द्रियैः।

मन्त्रार्णैरङ्गकॢप्तिः स्यात्त्वास्त्रयुक्तैर्यथाक्रमम् ॥ ६८ ॥
सौवर्णाम्बुजमध्यगां त्रिनयनां सौदामिनीसन्निभां
चक्रं शङ्खवराभयानि दधतीमिन्दोः कलां बिभ्रतीम् ।
ग्रैवेयाङ्गदहारकुण्डलधरामाखण्डलाद्यैः स्तुतां
ध्यायेद्विन्ध्यनिवासिनीं शशिमुखीं पार्श्वस्थपञ्चाननाम् ॥७०॥
एवं ध्यात्वा जपेल्लक्षचतुष्कं तद्दशांशतः ।
जुहुयात्त्रिविधा मन्त्री शालिभिः सर्पिषा तिलैः ॥ ७१ ॥
प्रागीरिते यजेत् पीठे देवीमङ्गणैः सह ।
अङ्गपूजा यथापूर्वं दलमूलेष्विमाः पुनः ॥ ६२ ॥
आर्या दुर्गा च भद्राख्या भद्रकाली ततोऽम्बिका ।
धर्माख्या वेदगर्भाख्या क्षेमङ्कर्य्यष्टशक्तयः ॥ ७३ ॥
अस्त्राणि पत्रमध्येषु चक्रशङ्खासिखेटकान् ।
बाणकोदण्डशूलानि कपालास्त्राणि पूजयेत् ॥ ७४ ॥
ब्राह्माद्याः स्युर्दलाग्रेषु लोकपालास्ततः परम् ।
सिद्धमन्त्रप्रयोगेषु देवीमित्थं विचिन्तयेत् ॥ ७५ ॥
कालपावकसन्निभां कलितार्द्धचन्द्रशिरोरुहां
भालनेत्रविभीषणां भयदायिसिंहनिषेदुषीम् ।
चक्रशङ्खकृपाणखेटकचापबाणकरोटिकां
शूलवाहिभुजां भजे विजिताखिलासुरसैनिकाम् ॥७६॥
प्रातःस्नानरतो नित्यमष्टोत्तरसहस्रकम् ।
जपेत्तस्याशु सिध्यन्ति धनधान्यादिसम्पदः ।
अनेनैव विधानेन गृहक्षेत्ररिपून् जयेत् ॥ ७७ ॥
नाभिमात्रोदके स्थित्वा देवीमर्कगतां स्मरन् ।
जपेदष्टोत्तरशतं लभते महतीं श्रियम् ॥ ७८ ॥
अयुतं वटवृक्षोत्थैः समूलैरर्चितेऽनले ।
होमं समिद्वरैः कुर्य्यान्नाशयेदापदां कुलम् ॥ ७९ ॥

घोराभिचारान् भूतादीन् शमयेद्विधिनामुना ।
अपामार्गसमिद्भिर्वा तिलैर्वा काननोद्भवैः ॥ ८० ॥
सर्षपैर्वा कृतो होमः क्षुद्रापस्मारनाशनः ।
अभीष्टसिद्ध्यै जुहुयादार्कैर्मन्त्री समिद्वरैः ॥ ८१ ॥
सहस्रमर्कवारादिदिवसान् दश संयतः ।
सारान् शुद्धान् समादाय सकलान् मनुनामुना ॥ ८२ ॥
जुहुयादेधिते वह्नौ सप्तरात्रमतन्द्रितः ।
साधयेदखिलं शश्वदभीष्टं मन्त्रवित्तमः ॥ ८३ ॥
कुसुमैर्वशयेद्विप्रान् नृपतीन् पद्महोमतः ।
तत्पत्नीरुत्पलैः पुष्पैर्वैश्यान् कह्लारहोमतः ॥ ८४ ॥
शूद्रान् लवणहोमेन जातीपुष्पैः मतां पुनः ।
व्रीहिभिर्जुहुयान्नित्यं वत्सराद् व्रीहिमान् भवेत् ॥८५॥
दूर्वाहोमेन दीर्घायुर्मधुना रत्नवान् भवेत् ।
अन्नैरन्नसमृद्धिः स्यादाज्येन लभते धनम् ॥ ८६ ॥
गोदुग्धेन गवां वृद्धिमाप्नुयान्नात्र संशयः ।
ज्वरे गरे ग्रहे सर्पे तर्जन्या संस्पृशन् जपेत् ॥ ८७ ॥
निधायाग्रे जपेन्मन्त्रमष्टोत्तरसहस्रकम् ।
सन्ध्यासु पक्षमात्रेण वशमायाति वाञ्छितम् ॥ ८८ ॥
अभ्यर्च्य देवीमनले तीक्ष्णतैलेन मन्त्रवित् ।
हुत्वायुतं निधायाग्रे तीक्ष्णान् स्निग्धच्छरान् पुनः ॥ ८९
तेषु सम्पातयेद्भूयः स्पृष्ट्वा तान्नियुतं जपेत् ।
वेधयेत् परसेनायां क्षणान्नष्टा दिशो दश ॥ ९० ॥
प्राप्नुयान्नष्टसंज्ञा सा पलायनपरायणा ।
जपित्वा स्मितभुञ्जानां कुडवं कुलिकोदरे ॥ ९१ ॥
विकिरेच्छत्रुसेनायां गूढश्छत्रपलादिषु ।
ज्वरमारीमहारोगैः पीडिता सैन्यनायकैः ॥ ९२ ॥

परस्परविरोधेन नश्येत् सेना ततःपरम्।
सेनासंस्तम्भने मन्त्री कारस्करसमुद्भवैः ॥ ९३ ॥
पुष्पैः सहस्रं जुहुयादुत्पलैस्तान्निवारयेत्।
अङ्गारवारे कुलिके जप्त्वा भस्म चितोद्भवम् ॥ ९४ ॥
निक्षिपेन्मूर्द्धनि रिपोर्विद्विष्टो देशतो व्रजेत्।
मरुन्निपातितैः पत्रैः कारस्करसमुद्भवैः ॥ ९५ ॥
तस्य पादरजोयुक्तैर्होमादुच्चाटयेदरीन्।
कारस्करमयीं कृत्वा प्रतिमामतिशोभनाम् ॥ ९६ ॥
जप्त्वा प्रतिष्ठितप्राणां छेदयेदङ्गशः पुनः।
काकोलूकवसायुक्तमष्टोत्तरसहस्रकम् ॥ ९७ ॥
कृष्णपक्षचतुर्दश्यां श्मशाने हव्यवाहने।
जुहुयात् म्रियतेऽरातिरेवमेव दिनत्रयात् ॥ ९८ ॥
उन्मत्तसमिधा होमान्मत्ताः स्युः शत्रवः क्षणात्।
उलूककाकयोः पक्षैस्तद्रसारक्तसंयुतैः ॥ ९९ ॥
जुहुयान्निशि कान्तारे शत्रुः कालातिथिर्भवेत्।
शत्रोः प्रतिकृतिं मन्त्री प्रतिष्ठितसमीरणाम् ॥ १०० ॥
विषाष्टकविलिप्ताङ्गीमत्युष्णे निक्षिपेज्जले।
ज्वराक्रान्तो भवेच्छीघ्रं तं नयेद् यमसादनम् ॥ १०१ ॥
तर्जनीं त्रिशिखं दोर्भ्यां धारयन्तीं भयङ्करीम्।
रक्तां ध्यात्वा रविबिम्बे प्रजपेदयुतं मनुम् ॥ १०२ ॥
मारयेदचिरादेव रिपून् बन्धुसमन्वितान्।
खड्गखेटकरां क्रुद्धां सन्नद्धां भानुमण्डले ॥ १०३ ॥
ध्यात्वा मन्त्रं जपेन्मन्त्री पूर्ववन्नाशयेदरीन्।
चापबाणधरां भीमां सिंहस्थां ज्वलनोपमाम् ॥ १०४ ॥
सृजन्तीं बाणनिवहान् धावन्तीं तादृशं रिपुम्।
ध्यात्वा जपेन्मन्त्रमिममयुतं तोयमध्यगः ॥ १०५ ॥

रिपूंश्च परसेनाश्च द्रुतमुच्चाटयेद् ध्रुवम् ।
अनित्यकसमिद्धोमान्मुच्यते रोगतो गजः ॥ १०६ ॥
पुष्पैस्तदीयैर्वग्रयेन्मधुराक्तैर्मतङ्गजान् ।
रक्षार्थे पञ्चगव्येन लिपेज्जप्तेन दन्तिनः ॥ १०७ ॥
गव्याज्यतिलसिद्धार्थैरनित्यकसमिद्वरैः ।
दुग्धान्नपञ्चगव्याभ्यां तण्डुलेन घृतेन च ॥ १०८ ॥
एतैः पृथक् पृथग्द्रव्यैरष्टोत्तरसहस्रकम् ।
जुहुयाद्दिनशो विप्रान् भोजयेन्मधुरादिभिः ॥ १०९ ॥
गुरवे दक्षिणां दद्याद् वस्त्राभरणसंयुताम् ।
मातङ्गाश्च तुरङ्गाश्च वर्द्धन्ते विधिनामुना ॥ ११० ॥
सर्वव्याधिविनिर्मुक्ता क्षुद्रपीडाविवर्जिताः ।
कारयेद् ब्रह्मसूत्रेण शिल्पिनायुधपञ्चकम् ॥ १११ ॥
शङ्खखड्गरथाङ्गानि शार्ङ्गं कौमोदकीं क्रमात् ।
पञ्चगव्येषु निःक्षिप्य तानि स्पृष्ट्वा जपेन्मनुम् ॥ ११२ ॥
सम्यक् पञ्चसहस्राणि तेषु सम्पातयन् पुनः ।
तावदाज्येन जुहुयान्मन्त्रैः स्वैः पूजयेत् क्रमात् ॥११३॥
उद्धृत्य पञ्चगव्येभ्यः पूर्ववत् प्रजपेन्मनुम् ।
अवटान् पञ्च निखनेद्दिक्षु मध्यादिषु क्रमात् ॥ ११४ ॥
अवटेष्वेषु पूर्णेषु पञ्चगव्येन साधकः ।
आयुधानि प्रजप्तानि पञ्चघोषपुरःसरम् ॥ ११५ ॥
विन्यसेत्तेषु मध्यादि पूजां कुर्य्याद् यथा पुरा ।
वालुकाभिः समापूर्य्य मृद्भिः कुर्य्यात् समस्थलम् ॥११६॥
बलिञ्च विकिरेत्तत्र तेषां मन्त्रैर्यथाक्रमम् ।
दिक्पतिभ्यो बलिं दत्वा ब्राह्मणान् भोजयेत्ततः ॥११७॥
दीनान्धकृपणादींश्च तोषयेद्भोजनादिभिः ।
गुरवे दक्षिणां दद्यादात्मवित्तानुसारतः ॥ ११८ ॥

यत्रेयं विहिता रक्षा देशे वा नगरे पुरे।
ग्रामे गेहेऽथवा तत्र वर्द्धन्ते सर्वसम्पदः॥ ११९॥
अश्मपातादयो दोषा भूतप्रेतादिसंयुताः।
अभिचारकृताः कृत्या विप्रचौराद्युपद्रवाः।
नेक्षन्ते तां दिशं भीत्या तर्जिता देवताज्ञया॥ १२०॥
' भानुदलान्वितं प्रविलिखेत्तत्कर्णिकायां पुन-
र' शक्तिगबीजसाध्यसहितं तत्केशरेषु क्रमात्।
र्न्या मनुसम्भवान् युगलशोवर्णान् पुनः पत्रगान्
त्रार्णान् युगशो विधाय विलिखेदन्त्यं तदन्ते दले॥१२१॥
मातृकावर्णसंवीतं भूपुरद्वयमध्यगम्।
यन्त्रं विन्ध्यनिवासिन्याः प्रोक्तं सर्वसमृद्धिदम्॥ १२२॥
रक्षाकरं विशेषेण क्षुद्रभूतारिनाशनम्।
राज्यदं भ्रष्टराज्यानां वश्यदं वश्यमिच्छताम्॥ १२३॥
सुतार्थिनीनां सुतदं रोगिणां रोगशान्तिदम्।
बहुना किमिहोक्तेन यन्त्रं तत् कामदो मणिः॥१२४॥

इति शारदातिलके एकादशः पटलः॥

---

## द्वादशः पटलः।

अज्ञानतिमिरध्वंसि संसारार्णवतारकम्।
आनन्दबीजमवतादतर्क्यं त्रैपुरं महः॥ १॥
अथ वक्ष्ये परां विद्यां त्रिपुरामतिगोपिताम्।
यां ज्ञात्वा सिद्धसंघानामधिपो जायते नरः। २॥
वियद्भृगुर्हुताशस्थो भौतिको बिन्दुशेखरः।
वियत्तदादिकेन्द्राग्निस्थितं वामाक्षिबिन्दुमत्॥ ३॥
आकाशभृगुवह्निस्थो मनुः सर्गेन्दुखण्डवान्।

वाग्भवं प्रथमं बीजं कामबीजं द्वितीयकम् ॥ ४ ॥
तृतीयं शक्तिबीजाख्यं त्रिभिर्बीजैरितीरिता ।
पञ्चकूटात्मिका विद्या वेद्या त्रिपुरभैरवी ॥ ५ ॥
ऋषिः स्याद्दक्षिणा मूर्त्तिश्छन्दः पङ्क्तिः समीरिता ।
देवता देशिकैरुक्ता देवी त्रिपुरभैरवी ॥ ६ ॥
नाभेरावरणं न्यस्येद्वाग्भवं मन्त्रवित् पुनः ।
हृदयान्नाभिपर्य्यन्तं कामबीजं प्रविन्यसेत् ॥ ७ ॥
विशेषात् हृत्प्रदेशान्तं तार्त्तीयं विन्यसेत् पुनः ।
आद्यं द्वितीयं करयोस्तार्त्तीयमुभयोर्न्यसेत् ॥ ८ ॥
मूर्द्ध्नाधारे हृदि न्यस्येद् भूयो बीजत्रयं क्रमात् ।
नवयोन्यात्मकं न्यासं कुर्य्याद्बीजैस्त्रिभिः पुनः ॥ ९ ॥
वर्णयोश्चिबुके भूयो गण्डयोर्वदने पुनः ।
नेत्रयोर्नसि विन्यस्येदंशयोर्जठरे पुनः ॥ १० ॥
ततः कूर्परयोः कुक्षौ जानुनोर्द्विजमूर्द्धनि ।
पादयोर्गुह्यदेशे च पार्श्वयोर्हृदयाम्बुजे ॥ ११ ॥
स्तनद्वये कण्ठदेशे रत्यादिमथ विन्यसेत् ।
मूले रतिं हृदि प्रीतिं भ्रुवोर्मध्ये मनोभवाम् ॥ १२ ॥
बालाबीजैस्त्रिभिर्न्यस्येत् स्थानेष्वेषु विलोमतः ।
अमृतेशीञ्च योगेशीं विश्वयोनिं क्रमादिमाः ॥ १३ ॥
विलोमबीजैर्विन्यस्य मूर्त्तिन्यासं यथाचरेत् ।
स्वस्वनामादिकं पूर्वं मूर्द्ध्नीशानं मनोभवम् ॥ १४ ॥
न्यसेद्वक्त्रे तत्पुरुषं मकरध्वजमात्मवित् ।
हृद्यघोरकुमारादिकन्दर्पं तदनन्तरम् ॥ १५ ॥
गुह्यदेशे प्रविन्यस्येद्वामदेवादिमन्मथम् ।
सद्योजातं क्रमादेवं पादयोर्विन्यसेत्ततः ॥ १६ ॥
ऊर्द्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु मुखेषु तान् ।

प्रविन्यसेद् यथापूर्वं भृगुव्योमाग्निसंस्थितम् ॥ १७ ॥
सत्यादि पञ्चकूटस्थाख्या बीजमेषां प्रकल्पितम् ।
षड्दीर्घयुक्तेनाद्येन बीजेनाङ्गक्रिया मता ॥ १८ ॥
पञ्चबाणांस्ततो न्यस्येन्मन्त्री त्रैलोक्यमोहनान् ।
द्रामाद्यां द्राविणीं मूर्ध्नि द्रीमाद्यां क्षोभिणीं पदे ॥१९॥
क्लीं वशीकरणीं वक्त्रे गुह्ये ब्लूं बीजपूर्विकाम् ।
आकर्षिणीं हृदि पुनर्वर्गान्तभृगुसंयुताम् ॥ २० ॥
सम्मोहिनीं क्रमादेवं वर्णन्यासोऽयमीरितः ।
भालभ्रूमध्यवदने घण्टिकाकण्ठहृत्सु च ॥ २१ ॥
नाभ्यधिष्ठानयोः पञ्च ताराद्याः सुभगादिकाः ।
न्यस्तव्या विधिना देव्यो मन्त्रिणा सुभगा भगा ॥ २२ ॥
भगसर्पिण्यथ परा भगमालिन्यनन्तरम् ।
अनङ्गानङ्गकुसुमं भूयश्चानङ्गमेखला ॥ २३ ॥
अनङ्गमदना सर्वा मदविभ्रममन्थराः ।
प्रधानदेवता वर्णदूषणाद्यैरलङ्कृताः ॥ २४ ॥
अक्षस्रक्पुस्तकाभीतिवरदाढ्यकराम्बुजाः ।
वाक्कामौ ब्लूं स्त्रीं सस्ताराः तथा पञ्चोदितास्त्वमी ॥२५॥
न्यासं कुर्याद् भूषणाख्यं ततः साधकसत्तमः ।
न्यसेच्छिरसि भाले भ्रूकर्णाक्षियुगले नसि ॥ २६ ॥
गण्डयोरोष्ठयोर्दन्तपङ्क्त्योरास्ये न्यसेत् स्वरान् ।
चिबुकेऽथ गले कण्ठे पार्श्वयोः स्तनयुग्मके ॥ २७ ॥
दोर्मूलयोः कूर्परयोः पाण्योस्तत्पृष्ठदेशतः ।
नाभौ गुह्ये पुनश्चोर्वोर्जानुनोर्जङ्घयोस्ततः ॥ २८ ॥
स्फिचोः पत्तलयोः पश्चाच्चरणाङ्गुष्ठयोर्द्वयोः ।
कादिवान्तान् न्यसेद्वर्णान् स्थानेष्वेषु समाहितः ॥२९ ॥
काञ्चीं प्रवेशयेत् पश्चात् कण्ठके हृदि गुह्यके ।

कर्णकुण्डलयोर्मौलौ वनलान् प्रचसान् यहौ ॥ ३० ॥
अष्टाविमान् प्रविन्यस्येदेकं देशिकसत्तमः।
एवं न्यस्तशरीरोऽसौ ध्यायेत् त्रिपुरभैरवीम् ॥ ३१ ॥
उद्यद्भानुसहस्रकान्तिमरुणक्षौमां शिरोमालिकां
रक्तालिप्तपयोधरां जपवटीं विद्यामभीतिं वरम्।
हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्त्रारविन्दश्रियं
देवीं बद्धहिमांशुरत्नमुकुटां वन्दे समन्दस्मिताम् ॥ ३२ ॥
दीक्षां प्राप्य जपेन्मन्त्रं तत्त्वलक्षं जितेन्द्रियः।
पुष्पैर्भानुसहस्राणि जुहुयाद् ब्रह्मवृक्षजैः ॥ ३३ ॥
त्रिमध्वक्तैः प्रसूनैर्वा करवीरसमुद्भवैः।
पद्मं वसुदलोपेतं नवयोन्याढ्यकर्णिकम् ॥ ३४ ॥
इच्छादिशक्तिभिर्युक्तं भैरव्याः पीठमर्चयेत्।
इच्छाज्ञाना क्रिया पश्चात् कामिनीकामदायिनी ॥३५॥
रतीरतिप्रियानन्दा नवमी स्यान्मनोन्मनी।
वरदाभयधारिण्यः संप्रोक्ता नवशक्तयः ॥ ३६ ॥
वाक्प्रभवं लोहितायै श्रीकण्ठो लोहितोऽनलः।
दीर्घवाण्यै तथा पश्चादपरायै हसौ पुनः ॥ ३७ ॥
सदाशिवमहाप्रेतङेऽन्तं पद्मासनं नमः।
अनेन मनुना दद्यादासनं श्रीगुरुक्रमम् ॥ ३८ ॥
प्राङ्मध्ययोरन्तराले पूजयेत् कल्पयेत्ततः।
पञ्चभिः प्रणवैर्मूर्त्तिं तस्यामावाह्य देवताम् ॥ ३९ ॥
पूजयेदागमोक्तेन विधानेन समाहितः।
तारावाक्शक्तिकमला हसखफ्रे हसौ स्मृता ॥ ४० ॥
वामकोणे यजेद् देव्या रतिमिन्दुसमप्रभाम्।
रतिं पाशधरीं सौम्यां मदविभ्रमविह्वलाम् ॥ ४१ ॥
प्रीतिं दक्षिणकोणस्थां तप्तकाञ्चनसन्निभाम्।

अङ्कुशं प्रति दोर्भ्यां च धारयन्तीं समाचरेत् ॥ ४२ ॥
अग्रे मनोभवां रक्तां रक्तपुष्पाद्यलङ्कृताम् ।
इषुकार्मुकपुष्पेषुधारिणीं सस्मिताननाम् ॥ ४३ ॥
अङ्गान्यभ्यर्चयेत् पश्चाद् यथापूर्वं विधानवित् ।
दिक्ष्वग्रे च निजैर्मन्त्रैः पूजयेद् बाणदेवताः ॥ ४४ ॥
हस्ताब्जैर्धृतपुष्पेषुप्रणामाभूतसप्रभाः ।
अष्टयोनिष्वष्टशक्तीः पूजयेत् सुभगादिकाः ॥ ४५ ॥
मातरो भैरवाङ्कस्था मदविभ्रमविह्वलाः ।
अष्टपत्रेषु संपूज्या यथावत् कुसुमादिभिः ॥ ४६ ॥
लोकपालास्ततो दिक्षु तेषां मन्त्राणि तद्वहिः ।
पूर्वजन्मकृतैः पुण्यैर्मालिनीं वरदेवताम् ॥ ४७ ॥
यो भजेदुक्तमार्गेण स लभेत् सम्पदां पदम् ।
एवं सिद्धमनुर्मन्त्री साधयेदिष्टमात्मनः ॥ ४८ ॥
जुहुयादरुणाम्भोजैरदोषैर्मधराप्लुतैः ।
लक्षसंख्यं तदर्धं वा प्रत्यहं भोजयेद्द्विजान् ॥ ४९ ॥
वनिता युवती रम्या पूजयेद्देवताधिया ।
होमान्ते धनधान्याद्यैस्तोषयेद् गुरुमात्मनः ॥ ५० ॥
एवं कृते जगद्वश्यो रमाया भवनं लभेत् ।
रक्तोत्पलैस्त्रिमध्वक्तैररुणैर्वाथ वारिजैः ॥ ५१ ॥
पुष्पैः पयोऽक्तैः सघृतैर्होमाद्विश्वं वशं नयेत् ।
वाक्सिद्धिं लभते मन्त्री पलाशकुसुमैर्हुतात् ॥ ५२ ॥
कर्पूरागुरुसंयुक्तं गुग्गुलुं जुहुयात् सुधीः ।
ज्ञानं दिव्यमवाप्नोति तेनैव स भवेत् कविः ॥ ५३ ॥
चीराक्तैरमृताखण्डैर्होमः सर्वापमृत्युजित् ।
दूर्वाभिराज्यहोमः स्यात् चीराक्ताभिर्दिनत्रयम् ॥ ५४ ॥
गिरिकर्णीभवैः पुष्पैर्ब्राह्मणान् वशयेद् द्रुतम् ।

कह्लारैः पार्थिवान् पुष्पैः स्रग्धूः कर्णिकारजैः ॥ ५५ ॥
मल्लिकाकुसुमैर्हुत्वा राजपुत्रान् वशं नयेत्।
कोदण्डकुसुमैर्वैश्यान् वृषलान् पाटलोद्भवैः ॥ ५६ ॥
अनुलोमविलोमान्तःस्थितमाध्याक्षरान्वितम्।
मन्त्रमुच्चार्य्य जुहुयान्मन्त्री मधुरलोहितैः ॥ ५७ ॥
सर्षपैः पटुसंमिश्रैर्वशयेत् पार्थिवान् क्षणात्।
अनेनैव विधानेन तत्पत्नीं तत्सुतानपि ॥ ५८ ॥
जातिविल्वभवैः पुष्पैर्मधुरत्रयसंयुतैः।
नरनारीनरपतीन् होमतो वशयेद् ध्रुवम् ॥ ५९ ॥
मालतीवकुलोद्भूतैः पुष्पैश्चन्दनलोहितैः।
जुहुयात् कवितां मन्त्री लभते वत्सरान्तरे ॥ ६० ॥
मधुरत्रयसंयुक्तैः फलैर्विल्वसमुद्भवैः।
जुहुयाद्वशयेल्लोकं श्रियमाप्नोति वाञ्छिताम् ॥ ६१ ॥
पाटलैः कुसुमैः कुन्दैरुत्पलैर्नागचम्पकैः।
नन्द्यावर्त्तैर्विकसितैः क्षतमालैर्जुहोति यः ॥ ६२ ॥
जायते वत्सरादर्वाक् श्रिया विजितपार्थिवः।
माज्यमन्नं प्रजुहुयाद् भवेदन्नसमृद्धिमान् ॥ ६३ ॥
कस्तूरीकुङ्कुमोपेतं कर्पूरं जुहुयाद्वशी।
कन्दर्पादधिकं सद्यः सौन्दर्य्यमधिगच्छति ॥ ६४ ॥
लाजान् प्रजुहुयान्मन्त्री दधिक्षीरमधुप्लुतान्।
विजित्य रोगान् निखिलान् स जीवेच्छरदां शतम् ॥ ६५ ॥
पादद्वयं मलयजं पादं कुङ्कुमकेशरम्।
पादं गोरोचना चैवं यानि पिष्टा हि साम्बुना ॥ ६६ ॥
विदध्यात्तिलकं भाले यान् पश्येद् यैर्विलोक्यते।
यान् स्पृशेत् स्पृश्यते यैर्वा वश्याः स्युस्तस्य तेऽचिरात् ॥ ६७
कर्पूरकापचीराणि समभागानि कल्पयेत्।

चतुर्भागा जटामांसी भारती रोचना मता ॥ ६८ ॥
कुङ्कुमं सप्तभागं स्याद्दिग्भागं चन्दनं मतम् ।
अगुरुर्नवभागः स्यादिति भागक्रमेण च ॥ ६९ ॥
हिमाद्रिः कन्यया पिष्टमेतत् सर्वं सुसाधितम् ।
आदाय तिलकं भाले कुर्य्याद् भूमिपतीन् नरान् ॥ ७० ॥
वनितामदगर्वाढ्यान् मदोन्मत्तान् मतङ्गजान् ।
सिंहव्याघ्रमहासर्पान् भूतवेतालराक्षसान् ।
दर्शनादेव वशयेत्तिलकं धारयेन्नरः ॥ ७१ ॥
मध्याद्यं नवयोनिषु प्रविलिखेद्बीजानि वर्णांस्त्रिशो
गायत्र्याः पुनरष्टपत्रविवरेष्वालिख्य निर्वापितम् ।
भूविम्बद्वितयेन मन्मथमृजाकोणेषु संवेष्टितं
यन्त्रं त्रैपुरमीरितं त्रिभुवनप्रक्षोभकं श्रीपदम् ॥ ७२ ॥
अस्मिन् यन्त्रे समावाह्य सम्यक् संपूज्य देवताम् ।
होमेन घृतसम्पातं लाक्षालोहत्रयावृतम् ॥ ७३ ॥
विधृतं बाहुना यन्त्रं युद्धेषु विजयावहम् ।
वादे वाग्विजयं कुर्य्यात् कवित्वं पुष्कलं दिशेत् ।
आयुरारोग्यमित्राणि पुत्रान् पौत्रान् विवर्द्धयेत् ॥ ७४ ॥
कामं षट्कोणमध्ये लिखतु पुनरिमं षट्सु कोणेषु पश्चात्
पत्रेषु द्व्यष्टसंख्येष्वसुमथ परतो व्योमबीजेन वीतम् ।
क्षौणीविम्बान्तरस्थं भुजदललिखितं रोचनाकुङ्कुमाभ्यां
प्रोक्तं सौभाग्यसम्पन्निरुपमकविताकीर्त्तिदं यन्त्रमेतत् ॥ ७५ ॥
वह्नेर्गेहयुगान्तरस्थमदने मायां लिखेद्वाग्भवं
षट्कोणेष्वथ सन्धिषु प्रविलिखेत् वृ ङ्कारमावेष्टयेत् ।
स्त्रीबीजेन समीरितं त्रिभुवनप्रक्षोभणं त्रैपुरं
यन्त्रं मन्त्रमनोभवात्मकमिदं सौन्दर्य्यसम्पत्करम् ॥ ७६ ॥
आधाराद्विन्दुमानाद्यं ब्रह्मेन्द्रस्थः प्रयोयुतः ।

द्वितीयं भृगुसर्गाढ्यं मनुस्तार्त्तीयमीरितम् ॥ ७७ ॥
एषा बालेति विख्याता त्रैलोक्यवशकारिणी।
जपपूजादिकं सर्वमस्याः पूर्ववदाचरेत् ॥ ७८ ॥
मान्मथं त्रिपुरा देवि विद्महे पदमुच्चरेत्।
उक्त्वा कामेश्वरिपदं प्रवदेदथ धीमहि ॥ ७९ ॥
तदन्ते प्रवदेद् भूयस्तन्नः क्लिन्ने प्रचोदयात्।
गायत्र्येषा समाख्याता त्रैपुरी सर्वसिद्धिदा ॥ ८० ॥
स्तुत्यानया त्वां त्रिपुरे तोष्येऽभीष्टफलाप्तये।
यया व्रजन्ति तां लक्ष्मीं मनुजाः सुरपूजिताम् ॥ ८१ ॥

ब्रह्मादयः स्तुतिशतैरपि सूक्ष्मरूपां
जानन्ति नैव जगदादिमनादिमूर्त्तिम्।
तस्माद्वयं कुचनतां नवकुङ्कुमाभां
स्थूलां स्तुमः सकलवाङ्मयमातृभूताम् ॥ ८२ ॥
सद्यः समुद्यतसहस्रदिवाकराभां
विद्याक्षसूत्रवरदाभयचिह्नहस्ताम्।
नेत्रोत्पलैस्त्रिभिरलङ्कृतवक्त्रपद्मां
त्वां तारहाररुचिरे! त्रिपुरे! भजामः ॥ ८३ ॥
सिन्दूरपूररुचिरं कुचभारनम्रं
जन्मान्तरेषु कृतपुण्यफलैकगम्यम्।
अन्योन्यभेदकलहाकुलमानभेदै-
र्जानन्ति किं जड़धियस्तव रूपमम्ब! ॥ ८४ ॥
स्थूलां वदन्ति मुनयः श्रुतयो गृणन्ति
सूक्ष्मां वदन्ति वचसामधिवासमन्ये।
त्वां मूलमाहुरपरे जगतां भवानि!
मन्यामहे वयमपारकृपाम्बुराशिम् ॥ ८५ ॥
चन्द्रावतंसकलितां शरदिन्दुशुभ्रां

पञ्चाशदक्षरमयीं हृदि भावयन्ति ।
त्वां पुस्तकं जपवटीममृताढ्यकुम्भं
व्याख्याञ्च हस्तकमलैर्दधतीं त्रिनेत्राम् ॥ ८६ ॥
शम्भुस्त्वमद्रितनयाकलितार्द्धभागो
विष्णुस्त्वमम्ब ! कमलापरिबद्धदेहः ।
पद्मोद्भवस्त्वमसि वागधिवासभूमि-
स्तेषां क्रियाश्च जगति त्रिपुरे ! त्वमेव ॥ ८७ ॥
आश्रित्य वाग्भवभवांश्चतुरः परादीन्
भावान् पदेषु विहितान् समुदीरयन्तीम् ।
कण्ठादिभिश्च करणैः परदेवतां तां
संविन्मयीं हृदि कदापि न विस्मरामि ॥ ८८ ॥
आकुञ्च्य वायुमवजित्य च वैरिषट्क-
मालोक्य निश्चलधिया निजनासिकाग्रम् ।
ध्यायन्ति मूर्ध्नि कलितेन्दुकलावतंसं
तद्रूपमम्ब ! कृतिनस्तरुणार्कमित्रम् ॥ ८९ ॥
त्वं प्राप्य मन्मथरिपोर्वपुरर्द्धभागं
सृष्टिं करोषि जगतामिति वेदवादः ।
सत्यं तदद्रितनये ! जगदेकमात-
र्नोचेदशेषजगतः स्थितिरेव न स्यात् ॥ ९० ॥
पूजां विधाय कुसुमैः सुरपादपानां
पीठे तवाम्ब ! कनकाचलगह्वरेषु ।
गायन्ति सिद्धवनिताः सह किन्नरीभि-
रास्वादितासवरसारुणपद्मनेत्राः ॥ ९१ ॥
विद्युद्विलासवपुषः श्रियमुद्वहन्तीं
यान्तीं स्ववासभवनाच्छिवराजधानीम् ।
सौसुम्नवर्त्मकमलानि विकाशयन्तीं

देवीं भजे हृदि परामृतसिक्तगात्रीम्॥ ९२॥
आनन्दजन्मभवनं भवनं श्रुतीनां
चैतन्यमात्रवपुरम्ब तवाश्रयामि।
ब्रह्मेशविष्णुभिरुपासितपादपद्मां
सौभाग्यजन्मवसतिं त्रिपुरे! यथावत्॥ ९३॥
शब्दार्थभावि भुवनं सृजतीन्दुरूपा
यावद्बिभर्त्ति पुनरर्कतनुः स्वशक्त्या।
वह्न्यात्मिका हरति तत् सकलं युगान्ते
तां शारदां मनसि जातु न विस्मरामि॥ ९४॥
नारायणीति नरकार्णवतारिणीति
गौरीति खेदशमनीति सरस्वतीति।
ज्ञानप्रदेति नयनत्रयभूषितेति
तामद्रिराजतनये! विबुधा भजन्ति॥ ९५॥
ये स्तुवन्ति जगन्मातः श्लोकैर्द्वादशभिः क्रमात्।
त्वामम्ब! प्राप्य वाक्सिद्धिं प्राप्नुयुस्ते परां श्रियम्॥९६
वाग्मायाकमलातारं नमोऽन्ते भगवत्यथ।
श्रीमातङ्गीश्वरि वदेत् सर्वजनमनोहरि॥ ९७॥
सर्वादिमुखबाह्यान्ते सर्वादिमुखरञ्जनि।
सर्वराजवशं पश्चात्करि सर्वपदं वदेत्॥ ९८॥
स्त्रीपुरुषवशं ब्रूया नेत्रमन्त्यासनं ततः।
सर्वदुष्टमृगवशंकरि सर्वमृगुन्तव॥ ९९॥
शङ्करि स्यात् सर्वलोकममुकं शिवयुग्वशिः।
वशमानय जायाग्नेरष्टाशीत्यक्षरो मनुः॥ १००॥
मासान्मन्त्री तनौ कुर्याद् वक्ष्यमाणान् यथाक्रमम्।
शिरोललाटे भ्रूमध्ये तालुकण्ठगलोरसि॥ १०१॥
अनाहतभुजद्वन्द्वे जठरे नाभिमण्डले।

स्वाधिष्ठाने गुह्यदेशे पादयोर्दक्षवाम्ययोः ॥ १०२ ॥
मूलाधारे गुदे न्यस्येत् पदान्यष्टादश क्रमात् ।
गुणैकाक्षिचतुःषड्भिः सुषट्पञ्चाष्टभिः ॥ १०३ ॥
दशपंचाष्टवेदाग्निचन्द्रयुग्मगुणात्रिभिः ।
पदक्लृप्तिरियं प्रोक्ता मन्त्रवर्णैर्यथाक्रमात् ॥ १०४ ॥
रत्याद्या मूलहृदयभ्रूमध्येषु विचक्षणः ।
वाक्शक्तिलक्ष्मीबीजाद्या मातङ्ग्यन्ताः प्रविन्यसेत् ॥१०५॥
शिरोवदनहृद्गुह्यपादेषु विधिना न्यसेत् ।
हृल्लेखां गगनां रक्तां भूयो मन्त्री करालिकाम् ॥ १०६॥
महोच्छुष्मां स्वनामादिवर्णबीजपुरःसराः ।
मातङ्ग्यन्ताः षडङ्गानि ततः कुर्वीत साधकः ॥ १०७ ॥
वर्णैश्चतुर्विंशदाद्या बुद्धीन्द्रदशभिः शिरः ।
शिखाष्टादशभिः प्रोक्ता वर्म तावद्भिरक्षरैः ॥ १०८ ॥
न्यसेत्त्रयोदशैर्नेत्रं द्वाभ्या मस्त्रं समीरितम् ।
विभक्तै मूलमन्त्रार्णैर्वर्णन्यासमथा चरेत् ॥१०९॥
मूर्द्धपादास्यगुह्येषु हृदम्भोजे प्रविन्यसेत् ।
द्राविणीं शोषिणीं भूयो बन्धनीं मोहिनीं पुनः ॥११०॥
आकर्षिणीं स्वनामादिबीजाद्याः शुभलक्षणाः ।
मातङ्ग्यन्तास्ततो न्यस्येन्मन्मथान् वदनांशयोः ॥ १११ ॥
पार्श्वकक्ष्यां नाभिदेशे कटिपार्श्वांशके पुनः ।
बीजत्रयादिकान्मन्त्री मन्मथं मकरध्वजम् ॥ ११२ ॥
मदनं पुष्पधन्वानं पञ्चमं कुसुमायुधम् ।
षष्ठं कन्दर्पनामानं मनोभवरतिप्रियौ ॥ ११३ ॥
मातङ्ग्यन्तास्ततो न्यस्येत् स्थानेष्वेतेषु मन्त्रवित् ।
प्रथमानङ्गकुसुमा भूयोऽन्यानङ्गमेखला ॥ ११४ ॥
अनङ्गमदना तद्वदनङ्गमदनातुरा ।

अनङ्गमदना वेगा भूयश्चानङ्गसम्भवा ॥ ११५ ॥
समम्यनङ्गभुवनपालिनी स्यादथाष्टमी।
अनङ्गशशिरेखाख्या मातङ्ग्यन्ताः समीरिताः ॥ ११६ ॥
विन्यस्तव्यास्ततो मूलेऽधिष्ठाने मणिपूरके।
हृत्कण्ठास्ये भ्रुवोर्मध्ये मस्तके मन्त्रिणा ततः ॥ ११७ ॥
आद्ये लक्ष्मीसरस्वत्यौ रतिः प्रीतिश्च कीर्त्तिका।
शान्तिः पुष्टिस्तथा तुष्टिर्मातङ्गी पदशेखराः ॥ ११८ ॥
मूलमन्त्रं प्रविन्यस्य निजमूर्द्धनि मन्त्रवित्।
आधारदेशेऽधिष्ठाने नाभौ पश्चादनाहते ॥ ११९ ॥
कण्ठे वक्त्रे भ्रुवोर्मध्ये मस्तके विन्यसेत् क्रमात्।
ब्राह्मयाद्याः पूर्वमुद्दिष्टा मातङ्गी पदपश्चिमाः ॥ १२० ॥
एषु स्थानेषु विन्यस्य दमिताङ्गादिभैरवान्।
मातङ्ग्यन्तान् न्यसेन्मन्त्री मूलमन्त्रं स्वमूर्द्धनि ॥ १२१ ॥
आधारदेशेऽधिष्ठाने नाभौ पश्चादनाहते।
कण्ठदेशे भ्रुवोर्मध्ये बिन्दौ भूयः कलापदे ॥ १२२ ॥
निरोधितायामर्द्धेन्दौ नादनादान्तयोः पुनः।
उन्मन्यं विष्णुवक्त्रे च ध्रुवमण्डलके शिवे ॥ १२३ ॥
मातङ्ग्यन्ताः प्रविन्यस्येद्वामां ज्येष्ठामतः परम्।
रौद्रीं प्रशान्तिं श्रद्धाख्यां पुनर्माहेश्वरीमथ ॥ १२४ ॥
क्रियाशक्तिं सुलक्ष्मीञ्च सृष्टिसंज्ञाञ्च मोहिनीम्।
प्रथमां श्वासिनीं विद्युल्लतां चिच्छक्तिमप्यथ ॥ १२५ ॥
त्वत्तः स्युस्तु परा नन्दानन्दबुद्धौ इमाः क्रमात्।
शिरोभालहृदाधारैरेता वीजत्रयादिकाः ॥ १२६ ॥
मातङ्ग्यन्ताः प्रविन्यस्येद् यथावद्देशिकोत्तमः।
मातङ्गीं महदाद्यां तां महालक्ष्मीपदादिकाम् ॥ १२७ ॥
सिद्धलक्ष्मीपदाद्यां तां मूलमाधारमण्डले।

न्यस्य तेनैव कुर्वीत व्यापकं देशिकोत्तमः।
एवं न्यस्तशरीरोऽसौ चिन्तयेन्मन्त्रदेवताम्॥ १२८ ॥
ध्यायेऽहं रत्नपीठे शुककुलपठितां शृण्वतीं श्यामगात्रीं
न्यस्तैकाङ्घ्रिं सरोजे शशिशकलधरां वल्लकीं वादयन्तीम्।
कह्लारावद्धमालां नियमितविलसच्चूलिकां रक्तवस्त्रां
मातङ्गीं शङ्खपात्रां मधुमदविवशां चित्रकोद्भासभालाम्॥१२९॥
अयुतं प्रजपेन्मन्त्रं तद्दशांशं मधूकजैः।
पुष्पैस्त्रिमधुरोपेतैर्जुहुयान्मन्त्रसिद्धये॥ १३० ॥
त्रिकोणकर्णिकं पद्ममष्टपत्रं प्रकल्पयेत्।
अष्टपत्रावृतं बाह्ये वृत्तं षोड़शभिर्दलैः॥ १३१ ॥
चतुरस्रसमायुक्तं कान्त्या दृष्टिमनोहरम्।
एतस्मिन् पूजयेत् पीठे नवशक्तीः क्रमादिमाः॥ १३२ ॥
विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्त्तिश्च सन्नतिः।
तुष्टिरुत्कृष्टिरृद्धिश्च मातङ्गीपदपश्चिमाः॥ १३३ ॥
सर्वान्ते शक्तिकमलासनाय नम इत्यथ।
वाक्शक्तिलक्ष्मीबीजाढ्यो मनुरासनसंज्ञकः॥ १३४ ॥
मूलेन मूर्त्तिं संकल्प्य तस्यामावाह्य देवताम्।
अर्चयेद्विधिनानेन वक्ष्यमाणेन मन्त्रवित्॥ १३५ ॥
रत्याद्यास्त्रिषु कोणेषु पूजयेत् पूर्ववत् सुधीः।
ह्रल्लेखाद्याः पञ्च पूज्या मध्ये दिक्षु च मन्त्रिणा॥ १३६ ॥
पाशाङ्कुशाभयाभीष्टधारिण्यो भूतसप्रभाः।
अङ्गानि पूजयेत् पश्चात् यथापूर्वं विधानवित्॥ १३७ ॥
वाणानभ्यर्चयेद्दिक्षु पञ्चमं पुरतो यजेत्।
दलमध्येषु संपूज्या अनङ्गकुसुमादयः॥ १३८ ॥
पाशाङ्कुशाभयाभीष्टधारिण्योऽरुणविग्रहाः।
पत्राग्रेषु पुनः पूज्या लक्ष्म्याद्या वल्लकीकराः॥ १३९ ॥

वह्निरष्टदलेष्वर्च्या मन्मथाद्या मदोद्धताः।
अपराङ्गनिषङ्गाढ्याः पुष्पास्त्रेषु धनुर्द्धराः॥ १४० ॥
पत्रस्था मातरः पूज्या ब्रह्माद्याः प्रोक्तलक्षणाः।
तदग्रेष्वर्चयेद्विद्वान् असिताङ्गादिभैरवान्॥ १४१ ॥
पुनः षोड़शपत्रेषु पूज्याः षोड़शशक्तयः।
मायाद्याः कलवीणाभिर्गायन्त्यः श्यामविग्रहाः॥ १४२ ॥
चतुरस्रचतुर्दिक्षु चतस्रः पूजयेत् पुनः।
मातङ्गाद्या मदोन्मत्ता वीणालसितपाणयः॥ १४३ ॥
आग्नेयकोणे विघ्नेशं दुर्गां नैऋतचरे यजेत्।
वायव्ये वटुकं पश्चादीशाने क्षेत्रपं यजेत्॥ १४४ ॥
लोकपाला बहिः पूज्या वज्राद्यैरायुधैः सह।
मन्त्रेऽस्मिन् साधिते मन्त्री साधयेदिष्टमात्मनः॥ १४५ ॥
मल्लिकाजातिपुन्नागैर्होमाद् भाग्यालयो भवेत्।
फलैर्विल्वसमुद्भूतैस्तत्पत्रैर्वा हुताद् भवेत्॥ १४६ ॥
राजपुत्रस्य राज्याप्तिः पङ्कजैः श्रियमाप्नुयात्।
उत्पलैर्वशयेद्विश्वं लक्ष्मीपुष्पैस्तथा नरः॥ १४७ ॥
बन्धूकपुष्पैर्वकुलैर्जयोत्थैः किंशुकोद्भवैः।
वश्याय जुहुयान्मन्त्री मधुना सर्वसिद्धये॥ १४८ ॥
लवणैर्मधुरोपेतैर्हुत्वाकर्षति सुन्दरीः।
अर्ज्जुनस्य समिद्धोमाद् वृष्टिं वितनुतेऽचिरात्॥ १४९ ॥
क्षीराक्तैरमृताखण्डैर्होमो नाशयति ज्वरम्।
दूर्वाभीराज्यमाप्नोति कदम्बैर्वश्यमाप्नुयात्॥ १५० ॥
अन्नवानन्नहोमेन तण्डुलैर्धनवान् भवेत्।
सर्वं त्रिमधुरोपेतं होमद्रव्यमुदाहृतम्॥ १५१ ॥
नन्द्यावर्त्तभवैः पुष्पैर्होमो वाक्सिद्धिदायकः।
बिल्वप्रसूनैर्जुहुयादीप्सितां श्रियमश्नुते॥ १५२ ॥

पलाशकुसुमैर्होमात् तेजस्वी जायते नरः ।
चन्दनागुरुकर्पूररोचनाकुङ्कुमादिभिः ॥ १५३ ॥
वश्याय जुहुयान्मन्त्री वशयेदखिलं जगत् ।
एतानि जप्वा तिलकं कुर्य्याल्लोकप्रियो भवेत् ॥ १५४ ॥
निर्गुण्डीमूलहोमेन निगडान्मुच्यते नरः ।
निम्बतैलान्वितैर्लाजैर्होमः शत्रुविनाशनः ॥ १५५ ॥
हरिद्राचूर्णसंमिश्रैर्लवणैर्नाशयेत् परान् ।
रसवद्भिः फलैः पत्रैः पुष्पैः परिमलान्वितैः ॥ १५६ ॥
हुत्वा स्वर्गमवाप्नोति साधकः सर्वमीप्सितम् ।
देवतां जगतामाद्यां मातङ्गीमिष्टदायिनीम् ।
अवाप्नोति द्रुतां वाचं भूषयेद्रत्नमालया ॥ १५७ ॥
आराध्य मातश्चरणाम्बुजे ते ब्रह्मादयो विश्रुतकीर्त्तिमापुः ।
अन्ये परं वाग्विभवं मुनीन्द्राः परां श्रियं भक्तिभरेण चान्ये ॥१५८
नमामि देवीं नवचन्द्रमौलेर्मातङ्गिनीं चन्द्रकलावतंसाम् ।
अम्नाय वाग्भिः प्रतिपादितार्थं प्रबोधयन्तीं शुकमादरेण ॥१५९॥
विनम्रदेवासुरमौलिरत्नैर्नीराजितं ते चरणारविन्दम् ।
भजन्ति ये देवि ! महीपतीनां व्रजन्ति ते सम्पदमादरेण ॥१६०
मातङ्गलीला गमने भवत्याः शिञ्जानमञ्जीरमिषाद्भजन्ते ।
मातस्त्वदीयं चरणारविन्दमकृत्रिमाणां वचसां निगुम्फाः ॥१६१॥
पदात् पदं शिञ्जितनूपुराभ्यां कृतार्थयन्ती पदवीं पदाभ्याम् ।
आस्फालयन्ती कलवल्लकीं तां मातङ्गिनी मद्धृदयं धिनोतु ॥१६२
नीलांशुकाबद्धनितम्बबिम्बां तालीदलेनार्पितकर्णभूषाम् ।
माध्वीमदाघूर्णितनेत्रपद्मां घनस्तनीं शम्भुवधूं नमामि ॥१६३॥
तडिल्लताकान्तमनर्घ्यभूषं चिरेण लक्ष्यं नवरोमराज्या ।
स्मरामि भक्त्या जगतामधीशे ! वलित्रयाढ्यं तव मध्यमम्ब ॥१६४
नीलोत्पलानां श्रियमावहन्तीं कान्त्या कटाक्षैः कमलाकराणाम्।

कदम्बमालाञ्चितकेशपाशां मातङ्गकन्यां हृदि भावयामि ॥१६५

ध्यायेऽहमारक्तकपोलकान्तं बिम्बाधरं न्यस्तललामरम्यम् ।
आलोललीलालकमायताक्षं मन्दस्मितं ते वदनं महेशि ! ॥१६६

स्तुत्यानया शङ्करधर्मपत्नीं मातङ्गिनीं वागधिदेवतां ताम् ।
स्तुवन्ति ये भक्तियुता मनुष्याः परां श्रियं नित्यमुपाश्रयन्ति॥१६७

इति सारदातिलके द्वादशः पटलः ।

---

## त्रयोदशः पटलः ।

अथ वक्ष्ये गणपतेर्मन्त्रान् सर्वार्थसिद्धिदान् ।
यान् लब्ध्वा मानवा नित्यं साधयन्ति मनोरथान् ॥ १ ॥

प्रस्वान्तकं शशिधरं बीजं गणपतेर्विदुः ।
गणकः स्यान्मुनिश्छन्दो निचृद्विघ्नोऽस्य देवता ।
षड्दीर्घभाजा बीजेन षडङ्गानि प्रकल्पयेत् ॥ २ ॥

सिन्दूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानं
दन्तं पाशाङ्कुशेष्टान्युरुकरविलसद्बीजपूराभिरामम् ।
बालेन्दुद्योतमौलिं करिपतिवदनं दानपूर्वार्द्रगण्डं
भोगीन्द्राबद्धभूषं भजत गणपतिं रक्तवस्त्राङ्गरागम् ॥ ३ ॥

वेदलक्षं जपेन्मन्त्रं दशांशं जुहुयात्ततः ।
मोदकैः पृथुकैर्लाजैः सक्तुभिस्त्विक्षुपर्वभिः ॥ ४ ॥

नारिकेलैस्तिलैः शुद्धैः सुपक्वैः कदलीफलैः ।
अष्टद्रव्याणि विघ्नस्य कथितानि मनीषिभिः ॥ ५ ॥

तीव्रादिशक्तिभिर्युक्ते पीठे विघ्नेश्वरं यजेत् ।
तीव्राख्या ज्वालिनी नन्दा भोगदा कामरूपिणी ॥ ६ ॥

उग्रा तेजोवती सत्या नवमी विघ्ननाशिनी ।
सर्वादिशक्तिकमलासनाय हृदयावधि ॥ ७ ॥

पाठमन्त्रोऽयमेतेन प्रदद्यादासनं विभोः।
मूलेन मूर्त्तिं सङ्कल्प्य तस्यां विघ्नेशमर्चयेत् ॥ ८ ॥
कर्णिकायां चतुर्दिक्षु प्रथमं पूजयेदिमान्।
गणाधिपगणेशानं तृतीयं गणनायकम् ॥ ९ ॥
गणक्रीड़ं पीतगौररक्तनीलत्वचः क्रमात्।
सर्वान् नागेन्द्रभूषाढ्यान् वचोऽलङ्कृतपुष्कारान् ॥ १० ॥
यथाक्रमं तथाभ्यर्च्चेत् केशरेष्वङ्गदेवताः।
पत्रमध्ये तु विधिवद्वक्रतुण्डादिकान् यजेत् ॥ ११ ॥
वक्रतुण्डमेकदंष्ट्रं महोदरगजाननौ।
लम्बोदराख्यं विकटं विघ्नराजमनन्तरम् ॥ १२ ॥
धूम्रवर्णं दलाग्रेषु ब्राह्मयाद्याः पूजयेत्ततः।
लोकपालांस्तदस्त्राणि देवमित्थं समर्चयेत् ॥ १३ ॥
सिद्धमन्त्रः प्रकुर्वीत प्रयोगान् कल्पचोदितान्।
तर्पयेत् सलिलैः शुद्धैर्दिनशो गणनायकम् ॥ १४ ॥
चतुश्चत्वारिंशदाख्यं चतुःशतमतन्द्रितः।
प्राप्नुयात् मण्डलादर्वागभीष्टमधिकं नरः ॥ १५ ॥
नारिकेलैः कृतो होमश्चतुर्थ्यां श्रीप्रदो भवेत्।
शुक्लपक्षप्रतिपदमारभ्य दिनशः सुधीः ॥ १६ ॥
चतुर्थ्यन्तं नारिकेलशक्तुलाजतिलैः क्रमात्।
चतुःशतं प्रजुहुयाद्वश्याः स्युः सर्वजन्तवः ॥ १७ ॥
सतिलैस्तण्डुलैर्होमो लक्ष्मीवश्यप्रदो भवेत्।
लाजैस्त्रिमधुरोपेतैर्होमः कन्यां प्रयच्छति ॥ १८ ॥
अनेन विधिना कन्या वरमाप्नोति वाञ्छितम्।
आज्याक्तहविषा होमः साधयेदीप्सितं नृणाम् ॥ १९ ॥
दध्ना विलोड़ितैर्लाजैर्होमो निशि चतुर्दिनम्।
सम्प्रीतिं कुरुते तद्वद्वश्यं वितनुते सदा ॥ २० ॥

श्वेतार्कतरुमूलेन रक्तचन्दनदारुणा।
इभभग्नेन निम्बेन दन्तिदन्तेन वा कृतम्॥ २१॥
विघ्नेश्वरं समभ्यर्च्य शीतांशुग्रहणे जपेत्।
स्पृष्ट्वा मन्त्री निराहारस्तं शिखायां समुद्वहन्।
युद्धेषु व्यवहारादौ विजयश्रियमाप्नुयात्॥ २२॥
मन्त्रेणानेन संजप्ता रोचनाम्बुदसंयुता।
तिलकक्रियया सर्वान् वशं नयति मानवान्॥ २३॥
अनुलोमविलोमस्थबीजेनासनमालिखेत्।
नवनीते समभ्यर्च्य स्पृष्ट्वा प्राणमनुं जपेत्॥ २४॥
अष्टोत्तरशतं भूयान्मूलमन्त्रं प्रजप्य तत्।
भक्षयेन्मौनमास्थाय यामिन्यां सप्तवासरम्॥ २५॥
स वश्यो जायते शीघ्रं साधकस्य न संशयः।
श्रीशक्तिस्मरभूविघ्नबीजानि प्रथमं वदेत्॥ २६॥
ङेऽन्तं गणपतिं पश्चाद्वरान्ते वरदं पदम्।
उक्त्वा सर्वजनं मेऽन्ते वशमानय ठद्वयम्॥ २७॥
अष्टाविंशत्यक्षरोऽयं ताराद्यो मनुरीरितः।
गणकः स्यादृषिश्छन्दो गायत्री विहृदन्विता॥ २८॥
महागणपतिः प्रोक्तो देवता देववन्दिता।
षड्बीजस्वस्वबीजेन दीर्घभाजा प्रकल्पयेत्॥ २९॥
षडङ्गानि मनोरस्य यथाविधि विधानवित्।
नवरत्नमयं द्वीपं स्मरेदिक्षुरसाम्बुधौ॥ ३०॥
तद्वीचिधौतपर्यन्तं मन्दमारुतसेवितम्।
मन्दारपारिजातादिकल्पद्रुमलताकुलम्॥ ३१॥
तत्तूत्तरलच्छायाभिररुणीकृतभूतलम्।
उद्यद्दिनकरेन्दुभ्यामुद्भासितदिगन्तरम्॥ ३२॥
तस्य मध्ये पारिजातं नवरत्नमयं स्मरेत्।

ऋतुभिः सेवितं षड्भिरनिशं प्रीतिवर्द्धनैः ॥ ३३ ॥
तस्याधस्तान्महापीठे रतिके मातृकाम्बुजे ।
षट्‌कोणान्तस्त्रिकोणस्थं महागणपतिं स्मरेत् ॥ ३४ ॥
हस्तीन्द्राननमिन्दुचूड़मरुणच्छायं त्रिनेत्रं रसा-
दाश्लिष्टं प्रियया सपद्मकरया स्वाङ्कस्थया सन्ततम् ।
बीजापूरगदाधनुस्त्रिशिखयुक्चक्राब्जपाशोत्पलं
व्रीह्यग्रे स्वविषाणरत्नकलसान् हस्तैर्वहन्तं भजे ॥३५॥
गण्डपालीगलद्दामपूरलालसमानसान् ।
द्विरेफान् कर्णतालाभ्यां वारयन्तं मुहुर्मुहुः ॥ ३६ ॥
करायधृतमाणिक्यकुम्भवक्त्रविनिःसृतैः ।
रत्नवर्षैः प्रीणयन्तं साधकं मदविह्वलम् ॥ ३७ ॥
माणिक्यमुकुटोपेतं वस्त्राभरणभूषितम् ।
ध्यायेन्मन्त्रं जपेन्मन्त्री चतुर्लक्षं समाहितः ॥ ३८ ॥
चतुःसहस्रसंयुक्तं चत्वारिंशत्सहस्रकम् ।
दशांशं जुहुयाद् द्रव्यैरष्टभिर्मोदकादिभिः ॥ ३९ ॥
तर्पयेद्दिनशो विघ्नं प्रागुक्तेनैव वर्त्मना ।
प्रागुक्ते पूजयेत् पीठे विधिना गणनायकम् ॥ ४० ॥
त्रिकोणबाह्ये पूर्वादिचतुर्दिक्षु समर्चयेत् ।
अग्रस्थविल्ववृक्षाधः श्रियं श्रीपतिमर्चयेत् ॥ ४१ ॥
पद्मयुग्मधरा पद्मा शङ्खचक्रधरो हरिः ।
दक्षिणे वटवृक्षाधो गौरीं गौरीपतिं यजेत् ॥ ४२ ॥
पाशाङ्कुशधरा गौरी टङ्कशूलधरो हरिः ।
पश्चिमे पिप्पलस्याधो रतिं रतिपतिं यजेत् ॥ ४३ ॥
रतिरुत्पलहस्ताढ्या कोदण्डास्त्रधरः स्मरः ।
सौम्ये प्रियङ्गुवृक्षाधो महीं पोत्रिणमर्चयेत् ॥ ४४ ॥
शुकव्रीह्यग्रहस्ताभूर्गदाचक्रधरः पतिः ।

देवाग्रे पूजयेल्लक्ष्मीसहितं गणनायकम् ॥ ४५ ॥
षट्कोणेषु च संपूज्या आमोदाद्याः प्रियान्विताः ।
आमोदं सिद्धिसहितमग्रकोणे समर्चयेत् ॥ ४६ ॥
समृद्ध्या युतमभ्यर्चेत् प्रमोदं वह्निकोणतः ।
सुमुखं कान्तिसंयुक्तमीशकोणे समर्चयेत् ॥ ४७ ॥
दुर्मुखं मदनावत्या यजेद्वरुणकोणके ।
विघ्नं मदद्रवायुक्तं कोणे नैशाचरेऽर्चयेत् ॥ ४८ ॥
वायव्ये विघ्नकर्त्तारं द्राविण्या सह संयजेत् ।
पाशाङ्कुशाभयाभीष्टधारिण्योऽवशविग्रहाः ॥ ४८ ॥
गण्डभित्तिगलद्दानपूरधौतमुखाम्बुजाः ।
विघ्नास्तत्प्रमदाः सर्वाः सदा घूर्णितलोचनाः ॥ ५० ॥
एकहस्तधृताम्भोजा इतरालिङ्गितप्रियाः ।
षट्कोणपार्श्वयोः पूज्यौ शङ्खपद्मनिधी क्रमात् ॥ ५१ ॥
निजप्रियाभ्यां सहितौ पूर्वोदीरितलक्षणौ ।
केशरेष्वङ्गपूजा स्याद् ब्राह्मयाद्याः पत्रमध्यगाः ॥ ५२ ॥
बहिर्लोकेश्वराः पूज्या वज्रादीनि ततः परम् ।
इत्थं जपादिभिः सिद्धः प्रयोगान् सुमनीषितान् ॥५३॥
साधयेदष्टभिर्द्रव्यैरन्यैर्वा कल्पनोदितैः ।
पद्महोमेन भूपालांस्तत्पत्नीरुत्पलैः शुभैः ॥ ४५ ॥
मन्त्रिणः कुमुदैः फुल्लैर्विप्रान् पिप्पलसम्भवैः ।
समिद्भिर्नरपतीनुदुम्बरसमुद्भवैः ॥ ५५ ॥
प्लक्षैर्वैश्यान् वटोद्भूतैः शूद्रानग्नौ वशं नयेत् ।
मधुना स्वर्णलाभः स्याद् गोदुग्धेन लभेत गाः ॥ ५६ ॥
आज्यहोमेन महतीं श्रियमाप्नोति मानवः ।
दध्ना सर्वसमृद्धिः स्यादन्नैरन्नपतिर्भवेत् ॥ ५७ ॥
वृष्टिकामः प्रजुहुयाद्वेतसानां समिद्भिः ।

कुसुम्भकुसुमैर्हुत्वा वासांसि लभतेऽचिरात् ॥ ५८ ॥
प्रत्येकमादौ मूलेन चतुर्वारं प्रतर्पयेत्।
श्रीशक्तिरतिभूलक्ष्मीः स्वबीजाद्याः प्रियान्विताः ॥५९॥
आमोदादीन् स्वबीजाद्यान् शक्तियुक्तांश्च तर्पयेत्।
चतुश्चतुः पृथक्सन्तौ शङ्खपद्मनिधी पुनः ॥ ६० ॥
नामादिबीजसहितौ तर्पयेत् स्वप्रियान्वितौ।
तर्पणेनामुनात्मीयमिष्टमाप्नोति मण्डलात्।
स्मृतिस्थमासनं विन्दुयुतं भूबीजमीरितम् ॥ ६१ ॥
बीजं षट्कोणमध्ये स्फुरदनलपुरे तारगं दिक्षु लक्ष्मी-
मायाकन्दर्पभूमिस्तदनुरसपुटेष्वालिखेद्बीजषट्कम्।
तत्सन्धिष्वङ्गमन्त्रान् वसुदलकमले मूलमन्त्रस्य वर्णान्
शिष्टान् पत्रेषु विद्वान् विलिखतु गुणशश्चान्त्यमन्त्ये पत्राग्रे
॥ ६२ ॥
आवीतं लिपिभिः क्रमोत्क्रमवशात् पाशाङ्कुशाभ्यामपि
क्ष्मागेहद्वितयेन संयुतमिदं यन्त्रं गणाधीशितुः।
लाक्षाकुङ्कुमरोचनामृगमदैर्भूर्जे वरे हेम्नि वा
संलिख्याभिरमां लभेत सकलैः सम्प्रार्थनीयां श्रियम् ॥ ६३ ॥
उक्तं महागणपतेर्विधानं सुरपूजितम्।
सर्वसिद्धिकरं पुंसां समस्तपुरुषार्थदम् ॥ ६४ ॥
मायाविधिपदद्वन्द्वं ततो गणपतिं वदेत्।
खड्गीशपावकौ पश्चाद्वरान्ते प्रवदेत् पुनः ॥ ६५ ॥
सर्वलोकं मे पदान्ते वशमानय ठद्वयम्।
षड्विंशत्यक्षरो मन्त्रो भजतां सुरपादपः ॥ ६६ ॥
गणकः स्यादृषिश्छन्दो गायत्रं देवता मनोः।
विधिविघ्नेश्वरः प्रोक्तो भजतां सर्वकामदः ॥ ६७ ॥
अन्तःकरणवेद्येषु भूतपञ्चविलोचनैः।

एवं विभक्तैर्मन्त्रार्णैर्भायाद्यैरङ्गकल्पना ।
महागणपतेः प्रोक्तस्थाने मन्त्री विचिन्तयेत् ॥ ६८ ॥
सिन्दूराभनिभाननं त्रिनयनं हस्तेषु पाशाङ्कुशौ
बिभ्राणं मधुमत्कपालमनिशं सार्द्धेन्दुमौलिं भजे ।
पुष्ट्याश्लिष्टतनुं ध्वजाग्रकरया पद्मोल्लसद्धस्तया
तद्योन्याहितपाणिमात्तवसुमत्पात्रोल्लसत्पुष्करम् ॥ ६९ ॥
चतुर्लक्षं जपेन्मन्त्रं तद्दशांशं हुतक्रिया ।
प्राक्प्रोक्तैरष्टभिर्द्रव्यैस्त्रिमध्वक्तैः समीरिता ॥ ७० ॥
पूर्वोक्ते पूजयेत् पीठे तीव्रादिनवशक्तिके ।
मूलेन मूर्त्तिं सङ्कल्प्य तत्रावाह्यार्चयेद्विभुम् ॥ ७१ ॥
मिथुनावृतिराद्या स्यादामोदाद्यैर्दिगम्बरैः ।
द्वितीयाङ्गैस्तृतीया स्याच्चतुर्थी मातृभिः स्मृता ॥ ७२ ॥
पञ्चमी लोकपालैः स्यात् षष्ठी वज्रादिभिः स्मृता ।
एवं सिद्धमनुर्मन्त्री प्रफुल्लैः सरसीरुहैः ॥ ७३ ॥
जुहुयाद्दशगाः सर्वे तण्डुलैस्तिलमिश्रितैः ।
हुत्वा विजयमाप्नोति पार्थिवो युद्धभूमिषु ॥ ७४ ॥
मधुत्रयेण हवनं वशं नयति पार्थिवान् ।
भक्ष्यभोज्यादिकं सर्वं हुत्वाभीष्टानि साधयेत् ॥ ७५ ॥
शक्तिरुद्धं निजं वीजं महागणपतिं वदेत् ।
ङेऽन्तमग्निवधूः प्रोक्तो मन्त्रोऽयं द्वादशाक्षरः ॥ ७६ ॥
गणकः स्यादृषिश्छन्दो गायत्री विवृदादिका ।
उदिता देवता तन्त्रे नाम्ना शक्तिगणाधिपः ।
व्यस्तैः समस्तैर्मन्त्रस्य पदैरङ्गानि कल्पयेत् ॥ ७७ ॥
मुक्तागौरं मदगजमुखं चन्द्रचूडं त्रिनेत्रं
हस्तैः स्वीयैर्दधतमरविन्दाङ्कुशौ रत्नकुम्भम् ।
अङ्कस्थायाः सरसिजरुचः स्वध्वजालम्बिपाणे-

दंष्ट्रा योनौ विनिहितकरं रक्तमौलिं भजामः ॥ ७८ ॥
लक्षमेकं जपेन्मन्त्रमपूपैस्तद्दशांशतः ।
जुहुयादर्चिते वह्नौ दिनशो देवमर्चयेत् ॥ ७९ ॥
प्राक्प्रोक्ते पूजयेत् पीठे प्रागुक्तेनैव वर्त्मना ।
हुत्वेक्षुखण्डैर्मतिमानाज्यश्रियमवाप्नुयात् ॥ ८० ॥
नारिकेलैः फलैस्तद्वत् रम्भापक्वफलैस्ततः ।
वशयत्यखिलं लोकं पृथुकैः शर्करान्वितैः ॥ ८१ ॥
वशं नयति राजानं शक्तुभिर्ब्राह्मणान् शुभैः ।
घृतहोमेन धनवान् जायते नात्र संशयः ॥ ८२ ॥
शक्त्याद्यं निजं बीजं वशमानय ठद्वयम् ।
ताराद्यो मनुराख्यातो रुद्रसंख्याक्षरान्वितः ॥ ८३ ॥
षड्भिर्वर्णैः पूर्वमुक्ताः स्युरङ्गं मन्त्रपदैर्भवेत् ।
एकेनादौ त्रिभिर्द्वाभ्यां त्रिभिर्द्वाभ्यामनन्तरम् ।
समस्तेनास्त्रमाख्यातमङ्गक्लृप्तिरियं मता ॥ ८४ ॥
हस्तैर्बिभ्रतमिक्षुदण्डवरदौ पाशाङ्कुशौ पुष्कर-
स्पृष्टस्वप्रमदावराङ्गमनयाश्लिष्टं ध्वजाग्रस्पृशा ।
श्यामाङ्ग्या विधृताब्जया त्रिनयनं चन्द्रार्धचूडं जवा-
रक्तं हस्तिमुखं स्मरामि सततं भोगातिलोलं विभुम् ॥८५॥
लक्षत्रयं जपेन्मन्त्रमिक्षुदण्डैर्दशांशतः।
अपूपैराज्ययुक्तैर्वा जुहुयान्मन्त्रसिद्धये ॥ ८६ ॥
सगुडं धनधान्याद्यैः प्रीणयेत् प्रीतमानसः ।
पूजा पूर्ववदादिष्टा ततः कर्माणि साधयेत् ॥ ८७ ॥
हुत्वापूपैस्त्रिमध्वक्तैर्वशयेद् भुवि पार्थिवान् ।
चतुर्थ्यां नारिकेलेन महतीं श्रियमाप्नुयात् ॥ ८८ ॥
लवणैर्मधुसंयुक्तैर्वशयेद्वनिताजनम् ।
संवर्त्तको नेत्रयुग्मः पार्श्वो बकासनस्थितः ॥ ८९ ॥

प्रसादनाय ह्रस्वान्तः सबीजाद्यो दशाक्षरः।
गणको मुनिरस्य स्याद् विराट्छन्द उदीरितम् ॥९०॥
क्षिप्रप्रसादनो विघ्नो देवता च समीरिता।
दीर्घयुक्तेन बीजेन षडङ्गानि प्रकल्पयेत् ॥ ९१ ॥
पाशाङ्कुशौ कल्पलतां विषाणं दधत् स्वहस्ताहितबीजपूरः।
रक्तस्त्रिनेत्रस्तरुणेन्दुमौलिर्हारोज्ज्वलो हस्तिमुखोऽवताद्वः ॥९२॥
लक्षं जपेज्जपस्यान्ते जुहुयादयुतं तिलैः।
समधुत्रितयैर्द्रव्यैरथवाष्टभिरीरितैः ॥ ९३ ॥
एकाक्षरोदिते पीठे वक्ष्यमाणेन वर्त्मना।
पूजयेद्वनपुष्पाद्यैर्धूपदीपैर्गजाननम् ॥ ९४ ॥
अङ्गानि पूर्वमभ्यर्च्य विघ्नानष्टौ यजेत्ततः।
विघ्नविनायकं वीरं शूरं वरदसंज्ञकम् ॥ ९५ ॥
इभवक्त्रं चैकदन्तं लम्बोदरमनन्तरम्।
पत्राग्रेष्वर्चयेत् पश्चाद् ब्राह्म्याद्यास्तदनन्तरम् ॥ ९६ ॥
लोकपालांस्तदस्त्राणि विघ्नपूजा समीरिता।
आज्यान्नैर्जुहुयान्नित्यं वत्सरादन्नवान् भवेत् ॥ ९७ ॥
पायसाज्येन महतीं श्रियमाप्नोति मानवः।
आज्यहोमेन वशयेत् प्राणिनः सकलान् सुधीः ॥ ९८ ॥
नारिकेलफलं पक्वं लोष्ट्रचर्मसमन्वितम्।
जुहुयात् प्रत्यहं मन्त्री मण्डलात् सिद्धिमाप्नुयात् ॥९९॥
जुहुयादष्टभिर्द्रव्यैर्मधुरत्रयसंयुतैः।
वशयेत् पार्थिवान् सर्वांस्तत्पत्नीर्विधिनामुना ॥१००॥
दिनादिषु चतुश्चत्वारिंशद्वारं शुभोदकैः।
तर्पयेद्विघ्नराजस्य मस्तके श्रीप्रसिद्धये ॥ १०१ ॥
पाशाङ्कुशौ कल्पलतां स्वदन्तं
करैर्वहन्तं कनकादिकान्तम्।

सोपानपङ्क्त्या दिननाथबिम्बा-

दायातमम्भोजगतं विचिन्त्य ॥ १०२ ॥

प्रागुक्तमन्त्रसंप्रोक्तान् प्रयोगान् मनुनामुना।

तैरस्मिन्नथवा प्रोक्तान् कुर्य्यान्मन्त्री विधानवित् ॥१०३॥

पश्चान्तको विन्दुयुतो वामकर्णविभूषितः।

तारादिर्हृदयान्तोऽयं हेरम्बमनुरीरितः ॥ १०४ ॥

चतुर्वर्णात्मको नृणां चतुर्वर्गफलप्रदः।

षड्दीर्घभाजा वीजेन षडङ्गानि समाचरेत् ॥ १०५ ॥

मुक्ताकाञ्चननीलकुन्दघसृणच्छायैस्त्रिनेत्रान्वितै-

र्नागास्यैर्हरिवाहनं शशिधरं हेरम्बमर्कप्रभम्।

दृप्तं दानमभीतिमोदकरदान्टङ्कं शिरोऽक्षात्मिकां

मालां मुद्गरमङ्कुशं त्रिशिखकं दोर्भिर्दधानं भजे ॥१०६॥

लक्षत्रयं जपेन्मन्त्रं दशांशं जुहुयात्तिलैः।

तीव्रादिपूजिते पीठे देवं हेरम्बमर्चयेत् ॥ १०७ ॥

प्रणवः कवचद्वन्द्वं महासिंहाय गां ततः।

हेरम्बेति पदं पश्चादासनाय हृदन्वितम् ॥ १०८ ॥

अयमासनमन्त्रः स्यात् प्रदद्यादनुशासनम्।

तारादिविघ्नवीजेन मूर्त्तिं तस्य प्रकल्पयेत् ॥ १०९ ॥

आवाह्य पूजयेत्तस्यामङ्गावरणसंयुतम्।

बाह्ये लोकेश्वराः पूज्या वज्रादीनि ततः परम् ॥ ११० ॥

एवमभ्यर्चयेन्नित्यं साधयेत् स्वमनीषितान्।

मोदकैर्जुहुयात् षष्ठ्यामष्टम्यां कुसुमैस्तथा ॥ १११ ॥

चतुर्दशीदिनेऽपूपैर्जुहुयाद्वाञ्छितासये।

एभिर्द्रव्यैः प्रजुहुयान्मन्त्री पर्वदिनेष्वपि।

साधयेत् सकलान् कामान् प्रयत्नेनैव साधकः ॥ ११२ ॥

अम्भोजं प्रथमं लिखेदसुदलं मध्ये स्ववीजान्तरे

साध्याख्यां वहिरङ्गमन्त्रविलसत् किञ्जल्कसंशोभितम्।
पत्राणामुदरे विभज्य मुनिशो मालामनून् शेषितान्
षड्वर्णांश्चरमे दले परिवृतान् शक्तयक्षरैः संयुतान् ॥ ११३॥
रोचनामदकाश्मीरैर्भूर्जपत्रे लिखेत्ततः।
वेष्टितं श्वेतसूत्रेण लोहैस्त्रिभिरपि क्रमात् ॥ ११४ ॥
धारयेद्बाहुना यन्त्रं सर्वकामानवाप्नुयात्।
शक्त्यङ्कुशौ भुवान्तेस्यात् स्वबीजं हृदयं ततः ॥ ११५ ॥
सर्वविघ्नाधिपायान्ते ङेऽन्तं सर्वार्थसिद्धिदम्।
प्रवदेत् सर्वदुःखप्रशमनाय पदं ततः ॥ ११६ ॥
एह्येहि भगवन्! सर्वान् खादय स्तम्भय द्वयम्।
भुवनेशीं स्वबीजं गां नतिः पावकवल्लभा ॥ ११७ ॥
पुनरङ्कुशमायान्तं पञ्चपञ्चाशदक्षरैः।
मालामन्त्रोऽयममुना प्रयोगान् साधयेत् सुधीः।
तारं खड्गीश्वरः कूर्मो निस्वरो शान्त ईरितः ॥ ११८ ॥
भुवे नतिः सप्तवर्णः सुब्रह्मण्यात्मको मनुः।
वह्निबीजेन षड्दीर्घयुक्तेनाङ्गक्रिया मता ॥ ११९ ॥
सिन्दूरारुणकान्तिमिन्दुवदनं केयूरहारादिभि-
र्दिव्यैराभरणैर्विभूषितमनुं स्वर्गस्य सौख्यप्रदम्।
अम्भोजाभयशक्तिकुक्कुटधरं रक्ताङ्गरागांशुकं
सुब्रह्मण्यमुपास्महे प्रणमतां भीतिप्रणाशोद्यतम् ॥ १२० ॥
लक्षमेकं जपेन्मन्त्रं साज्येन हविषा ततः।
दशांशं जुहुयादन्ते ब्राह्मणानपि भोजयेत् ॥ १२१ ॥
धर्मादिकल्पिते पीठे वह्निमण्डलपश्चिमे।
पूजयेद्विधिना देवमुपचारैर्यथोदितैः ॥ १२२ ॥
केशरेष्वङ्गपूजा स्यात् पत्रमध्यगतानिमान्।
जयन्ताख्यमग्निवेशं कृत्तिकापुत्रसंज्ञकम् ॥ १२३ ॥

अनन्तरं भूतपतिं सेनान्यं गुहसंज्ञकम् ।
इभशूलं विशालाख्यं शक्तित्रयकरान् यजेत् ॥ १२४ ॥
दिग्दलाग्रेषु पूर्वादि देवसेनापतिं पुनः ।
विद्यां मेधां ततो वज्रं कोणस्थान् शक्तिकुक्कुटौ ॥ १२५ ॥
मयूरं द्विपमभ्यर्च्य वाह्यलोकेश्वरान् पुनः ।
अस्त्राणि तेषामन्ते स्युः स्वब्राह्मण्याचनेरिता ॥ १२६ ॥
स्वादुभिर्भक्ष्यभोज्याद्यैः षष्ठांशं प्रीणयेद्द्विजान् ।
पूजयेद्देवताबुद्ध्या कुमारान् ब्रह्मचारिणः ॥ १२७ ॥
सन्तानं विजयं वीर्य्यं रक्षामायुः श्रियं यशः ।
प्रदद्यात् साधकस्याशु स्वब्रह्मण्यः सुरार्चितः ॥ १२८ ॥
जपतर्पणपूजादौ विघ्नेशं सर्वसिद्धिदम् ।
प्रीणयेदनया स्तुत्या प्राप्तये सर्वसम्पदाम् ॥ १२९ ॥

ओँकारमाद्यं प्रवदन्ति सन्तो वाचः श्रुतीनामपि यं गृणन्ति ।
गजाननं देवगणानताङ्घ्रिं भजेऽहमर्द्धेन्दुकृतावतंसम् ॥१३०॥
पादारविन्दार्चनतत्पराणां संसारदावानलभङ्गदक्षम् ।
निरन्तरं निर्गतदानतोयैस्तं नौमि विघ्नेश्वरमम्बुदाभम् ॥१३१॥
कृताङ्गरागं नवकुङ्कुमेन मत्तालिमालां मदपङ्कलग्नाम् ।
निवारयन्तं निजकर्णतालैः को विस्मरेत् पुत्रमनङ्गशत्रोः ॥१३२॥
शम्भोर्जटाजूटनिवासिगङ्गाजलं समादाय कराम्बुजेन ।
लीलाभिराराच्छिवमर्चयन्तं गजाननं तं शरणं भजामि ॥१३३॥
कुमारभुक्तौ पुनरात्महेतोः पयोधरौ पर्वतराजपुत्र्याः ।
प्रक्षालयन्तं करशीकरेण मौग्ध्येन तं नागमुखं भजामि ॥१३४॥
त्वया समुद्धृत्य गजास्यहस्तात् ये शीकराः पुष्कररन्ध्रमुक्ताः ।
व्योमाङ्गणे ते विचरन्ति ताराः कालात्मका मौक्तिकतुल्यभासः
॥१३५॥
क्रीड़ारते वारिनिधौ गजास्ये वेलामतिक्रामति वारिपूरे ।

कल्पावसानं प्रविचिन्त्य देवाः कैलासनाथं श्रुतिभिः स्तुवन्ति
॥ १३६ ॥
नागानने नागकृतोत्तरीये क्रीडारते देवकुमारसंघैः।
त्वयि क्षणं कालहृतिं विहाय तौ प्रापतुः कन्दुकतामिनेन्दू १३७
मदोल्लसत्पञ्चमुखैरजस्रमध्यापयन्तं सकलागमार्थान्।
देवानृषीन् भक्तजनैकमित्रं हेरम्बमर्कारुणमाश्रयामि ॥१३८॥
पादाम्बुजाभ्यामतिवामनाभ्यां कृतार्थयन्तं कृपया धरित्रीम्।
अकारणं कारणमाप्तवाचां तं नागवक्त्रं न जहाति चेतः ॥१३९॥
येनार्पितं सत्यवतीसुताय पुराणमालिख्य विषाणकोट्या।
तं चन्द्रमौलेस्तनयं तपोभिराराध्यमानन्दघनं भजामि ॥१४०॥
पदं श्रुतीनामपदं स्तुतीनां लीलावतारं परमार्थमूर्तेः।
नागात्मको वा पुरुषात्मको वेत्यभेद्यमाद्यं भज विघ्नराजम् १४१
पाशाङ्कुशौ भग्नरदं त्वभीष्टं करैर्दधानं कररन्ध्रमुक्तैः।
मुक्ताफलाभैः पृथुशीकरौघैः सिञ्चन्तमङ्गं शिवयोर्भजामि ॥१४२॥
अनेकमेकं गजमेकदन्तं चैतन्यरूपं जगदादिबीजम्।
ब्रह्मेति यं ब्रह्मविदो वदन्ति तं शम्भुसूनुं शरणं भजामि ॥१४३॥
स्वाङ्कस्थिताया निजवल्लभाया मुखाम्बुजालोकनलोलनेत्रम्।
स्मेराननाब्जं मदवैभवेन रुद्धं भजे विश्वविमोहनं तम् ॥१४४॥
ये पूर्वमाराध्य गजाननं त्वां सर्वाणि शास्त्राणि पठन्ति तेषाम्।
त्वत्तो नचान्यत् प्रतिपाद्यमस्ति तदस्ति चेत् सर्वमसत्यकल्पम्
॥ १४५ ॥
हिरण्यवर्णं जगदीशितारं कविं पुराणं रविमण्डलस्थम्।
गजाननं यं प्रविशन्ति सन्तस्तत्कालयोगैस्तमहं प्रपद्ये ॥१४६॥
वेदान्तगीतं पुरुषं भजेम आनन्दमानन्दघनं हृदिस्थम्।
गजाननं यन्महसा जनानां विघ्नान्धकारो विलयं प्रयाति ॥१४७
शम्भोः समालोक्य जटाकलापे शशाङ्कखण्डं निजपुष्करेण।

स्वभग्नदन्तं प्रतिचिन्त्य मौग्ध्यादाक्रोष्टुकामः श्रियमातनोतु
॥ १४८ ॥
विघ्नार्गलानाम् विनिपाटनार्थं यं नारिकेलैः कदलीफलाद्यैः ।
प्रतारयन्तो मदवारणास्यं प्राप्नुवन्त्यभीष्टमजं भजे तम् ॥१४९॥
यज्ञैरनेकैर्बहुभिस्तपोभिराराध्यमाद्यं गजराजवक्त्रम् ॥
स्तुत्यानया ये विधिना स्तुवन्ति ते सर्वलक्ष्मीनिधयो भवन्ति
॥ १५० ॥

इति सारदातिलके त्रयोदशः पटलः ॥

---

# चतुर्दशः पटलः ।

अथोच्यते चन्द्रमसो मनुः सर्वसमृद्धिदः ।
स्वङ्गोशस्थो भृगुर्बिन्दुमनूत्तसमन्वितः ॥ १ ॥
सोमाय हृदयान्तोऽयं मन्त्रः प्रोक्तः षडक्षरः ।
ऋषिरुक्तो भृगुश्छन्दः पङ्क्तिः सोमोऽस्य देवता ॥ २ ॥
दीर्घभाजा स्ववीजेन मनोरङ्गक्रिया मता ॥ ३ ॥
कर्पूरस्फटिकावदातमनिशं पूर्णेन्दुविम्बाननं
मुक्तादामविभूषितेन वपुषा निर्मूलयन्तं तमः ।
हस्ताभ्यां कुमुदं वरञ्च दधतं लीलालकोद्भासितं
स्वस्याङ्कस्थमृगोदिताश्रयगुणं सोमं सुधाब्धिं भजे ॥ ४ ॥
वसुलक्षं जपेन्मन्त्रं साधको विजितेन्द्रियः ।
षट्सहस्रं प्रजुहुयात् पायसेन ससर्पिषा ॥ ५ ॥
सोमान्तं पूजिते पीठे पूजयेद्रोहिणीपतिम् ।
अङ्गानि केशरेषु स्युस्ताभ्यः पत्रमध्यगाः ॥ ६ ॥
रोहिणी कृत्तिका भूयो रेवती भरणी पुनः ।
रात्रिरार्द्रा तथा ज्योत्स्ना मुक्ताहारसमप्रभाः ॥ ७ ॥

श्वेतमाल्याम्बरधरा मुक्ताहारविभूषणाः।
पयोधरभराक्रान्ता रचिताञ्जलयः शुभाः॥ ८॥
वल्लभासक्तमनसो मदविभ्रममन्थराः।
समभ्यर्च्याः सरोजाक्ष्यश्चन्द्रबिम्बनिभाननाः॥ ९॥
आदित्यमङ्गलबुधमन्दवाक्पतिराहवः।
शुक्रकेतुयुताः पूज्या दलाग्रेषु ग्रहा इमे॥ १०॥
स्वस्ववर्णाम्बरोपेताः स्वनामाद्यर्णबीजकाः।
रक्तारुणाः श्वेतनीलपीतधूम्रसितासिताः॥ ११॥
वामोरुन्यस्तहस्ता दक्षिणेन धृताभयाः।
अम्बुजाढ्यकरो भानुर्दंष्ट्राभीममुखः शनिः॥ १२॥
राहुर्विकृतवक्त्रः स्यात् केतुः स्याद्विधृताञ्जलिः।
लोकपालास्ततः पूज्या वज्राद्यस्त्रैः सह क्रमात्॥ १३॥
एवं सिद्धमनुर्मन्त्री सम्पदां वसतिर्भवेत्।
हृत्पुण्डरीकमध्यस्थं तारहारविभूषितम्॥ १४॥
तारापतिं स्मरन्मन्त्री त्रिसहस्रं मनुं जपेत्।
राज्यैश्वर्य्यं दरिद्रोऽपि प्राप्नुयाद्वत्सरान्तरे॥ १५॥
पूर्वोक्तसंख्यं प्रजपेच्छशिनं मूर्ध्नि चिन्तयन्।
रोगापमृत्युदुःखानि जित्वा वर्षशतं वसेत्॥ १६॥
ब्रह्मचर्य्यरतः शुद्धश्चतुर्लक्षमिमं जपेत्।
निधानं भूगतं सद्यः प्राप्नुयान्मृत्युवर्जितम्॥ १७॥
जितेन्द्रियो जपेन्मन्त्रं पौर्णमास्यां विशेषतः।
भवेत् सौभाग्यनिलयः सम्पदामपरो निधिः॥ १८॥
घोरज्वरांश्चिररोगानभिचाराद्युपद्रवान्।
विषाणामपि सङ्घातान्मुच्यते मनुनामुना॥ १९॥
पौर्णमास्यां निराहारो दद्यादर्घं विधूदये।
प्राक् प्रत्युदगायतं कुर्य्याद् भूतले मण्डलत्रयम्॥ २०॥

निषण्णः पश्चिमे मन्त्री मण्डले विहितासने ।
मध्यस्थे स्थापयेत् पश्चात् पूजाद्रव्यमशेषतः ॥ २१ ॥
अन्यस्मिन् मण्डले सोममर्चयित्वाम्बुजान्विते ।
राजतं चषकं पश्चात् स्थापयेत् पुरतः सुधीः ॥ २२ ॥
गोदुग्धेन समापूर्य्य स्पृष्ट्वा तत् प्रजपेन्मनुम् ।
अष्टोत्तरशतं पश्चाद् विद्यामन्त्रेण देशिकः ॥ २३ ॥
दद्यादर्घ्यं शशाङ्काय सर्वकामार्थसिद्धये ।
अनेन विधिना कुर्वन् प्रतिमासमतन्द्रितः ॥ २४ ॥
षण्मासाभ्यन्तरे सिद्धिं साधकेन्द्रः समश्नुते ।
श्रियमप्युर्जितां पुत्त्रान् सौभाग्यं पुष्कलं यशः ॥ २५ ॥
कन्यामिष्टामवाप्नोति कन्यापि वरमाप्नुयात् ।
बहुना किमिहोक्तेन सर्वं दद्यान्निशापतिः ॥ २६ ॥
विद्याविद्ये मानिनि स्याच्चन्द्रिण्यन्ते ततो भवेत् ।
पुनश्चन्द्रमुखि स्वाहा विद्यामन्त्र उदाहृतः ॥ २७ ॥
तारो घृणिर्भृगुः पश्चाद्वामकर्णविभूषितः ।
वज्रासनो मरुच्छेषः सनेत्रोऽदिष्टपश्चिमः ॥ २८ ॥
अष्टाक्षरो मनुः प्रोक्तो भानोरभिमतप्रदः ।
देवभागो मुनिः प्रोक्तो गायत्त्री छन्द ईरितम् ॥ २९ ॥
आदित्यो देवता प्रोक्तो दृष्टादृष्टफलप्रदः ।
सत्याय हृदयं प्रोक्तं ब्रह्मणे शिर ईरितम् ॥ ३० ॥
विष्णवे स्याच्छिखा वर्म रुद्राय परिकीर्त्तितम् ।
अग्नये नेत्रमाख्यातं शर्वायास्त्रमुदाहृतम् ॥ ३१ ॥
तेजोज्वालामणे हुं फट् द्विठान्ताः पृथगीरिताः ।
अङ्गमन्त्रान् पुनर्न्यस्येत् पञ्चमूर्त्तीर्यथाक्रमात् ॥ ३२ ॥
आदित्यं विन्यसेन्मूर्ध्नि रविं मुखगतं न्यसेत् ।
हृदये भानुनामानं भास्करं गुह्यदेशतः ॥ ३३ ॥

सूर्य्यस्वरणयोर्न्यस्येद् द्रव्यैः संख्यादिपञ्चभिः ।
प्रधानमूर्त्तिं प्रतिमाः सर्व्वाभरणभूषिताः ॥ ३४ ॥
मूर्द्धास्यकण्ठहृत्कुक्षिनाभिगुह्यध्वजाङ्घ्रिषु ।
मन्त्रवर्णान् न्यसेदष्टौ प्रत्येकं प्रणवादिकान् ।
एवं न्यस्तशरीरोऽसौ चिन्तयेत्तेजसां निधिम् ॥ ३५ ॥
रक्ताब्जयुग्माभयदानहस्तं केयूरहाराङ्गदकुण्डलाढ्यम् ।
माणिक्यमौलिं दिननाथमीडे बन्धूककान्तिं विलसत्त्रिनेत्रम् ॥ ३६ ॥
वर्णलक्षं जपेन्मन्त्रं समिद्भिः क्षीरभूरुहाम् ।
तत्सहस्रं प्रजुहुयात् क्षीराक्ताभिर्जितेन्द्रियः ॥ ३७ ॥
पीठस्य क्लृप्तिः प्रथमं दिक्षु मध्ये च संयजेत् ।
प्रभूतं विमलं सारं समाराध्यमनन्तरम् ॥ ३८ ॥
परमादिसुखं पीठं स्वबिम्बान्तं प्रकल्पयेत् ।
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला पुनः ॥ ३९ ॥
अमोघा विद्युता शक्तितोमुखी पीठशक्तयः ।
प्रदीपशिखाकारा वीजान्यासां विदुः क्रमात् ॥४०॥
अक्षीवक्रस्वत्रितयस्वरान् विन्द्वग्निसंयुतान् ।
वदेत् पदं चतुर्थ्यन्तं ब्रह्मविष्णुशिवात्मकम् ॥ ४१ ॥
सौराय योगपीठाय नमः पदमनन्तरम् ।
पीठमन्त्रोऽयमाख्यातो दिनेशस्य जगत्पतेः ॥ ४२ ॥
तारादि खं खसौल्काय मनुना मूर्त्तिकल्पना ।
काङ्क्षिणं सर्वलोकानां तस्यामावाह्य पूजयेत् ॥ ४३ ॥
अङ्गानि पूजयेदादौ दिक्पत्रेष्वर्कमूर्त्तयः ।
आदित्याद्याश्चतस्रोऽर्च्याः शक्तयः कोणपत्रगाः ॥ ४४ ॥
स्वस्वनामादिवर्णाः स्युस्तासां वीजान्यनुक्रमात् ।
उषा प्रज्ञा प्रभा सन्ध्या शक्तयः परिकीर्त्तिताः ॥ ४५ ॥

पत्राग्रसंस्था ब्राह्म्याद्याः पुरतोऽरुणमर्चयेत् ।
चन्द्रादीन् पूजयेत् पश्चाद् ग्रहानष्टौ ततो बहिः ॥ ४६ ॥
इन्द्रादयस्तदस्त्राणि यथापूर्वं समर्चयेत् ।
एवं संपूज्य विधिवद्भास्करं भक्तवत्सलम् ॥ ४७ ॥
दद्यादर्घ्यं प्रतिदिनं वारे वा तस्य चोदिते ।
प्रभाते मण्डलं कृत्वा पूर्ववत् पीठमर्चयेत् ॥ ४८ ॥
पात्रं ताम्रमयं प्रस्थं तोयग्राहि मनोहरम् ।
विधाय तत्र मनुना पूरयेत्तत् शुभोदकैः ॥ ४९ ॥
कुङ्कुमं रोचनाराजिरक्तचन्दनवैणवान् ।
करवीरजवाशालिकुशश्यामाकतण्डुलान् ॥ ५० ॥
निःक्षिपेच्छुभिने तस्मिन्नैक्यं सङ्कल्प्य भानुना ।
साङ्गमभ्यर्चयेत्तस्मिन् भास्करं प्रोक्तलक्षणम् ॥ ५१ ॥
गन्धपुष्पादिनैवेद्यैर्यथाविधि विधानवित् ।
तत् पिधाय जपेन्मन्त्रं सम्यगष्टोत्तरं शतम् ॥ ५२ ॥
पुनः संपूज्य गन्धाद्यैर्जानुभ्यामवनीङ्गतः ।
आमस्तकं तदुद्धृत्य व्योम्नि सावरणे रवौ ॥ ५३ ॥
दृष्टिं विधाय स्वैक्येन मूलमन्त्रं धिया जपन् ।
दद्यादर्घ्यं दिनेशाय प्रसन्नेनान्तरात्मना ॥ ५३ ॥
कृत्वा पुष्पाञ्जलीन् भूयो जपेदष्टोत्तरं शतम् ।
यावदर्घ्यामृतं भानुः समादत्ते निजैः करैः ॥ ५४ ॥
तेन तृप्तो दिनपतिर्दद्यादस्मै मनोरथान् ।
अर्घ्यदानमिदं पुंसामायुरारोग्यवर्द्धनम् ॥ ५५ ॥
धनधान्यपशुक्षेत्रपुत्रमित्रकलत्रदम् ।
तेजोवीर्य्ययशःकान्तिविद्याविभवभाग्यदम् ॥ ५६ ॥
अशोकामग्निदीर्घेन्दुसंयुतां भुवनेश्वरीम् ।
सर्गान्वितो भवेद् भानोस्त्र्यक्षरो मन्त्र ईरितः ॥ ५७ ॥

आधारादिपदाग्रान्तं कण्ठादाधारकावधि ।
मूर्द्धादिकण्ठपर्य्यन्तं क्रमाद् वीजत्रयं न्यसेत् ।
षड्दीर्घस्वरयुक्तेन मध्येनाङ्गानि कल्पयेत् ॥ ५८ ॥

रक्ताम्बुजासनमशेषगुणैकसिन्धुं
भानुं समस्तजगतामधिपं भजामि ।
पद्मद्वयाभयवरान्दधतं कराब्जै-
र्माणिक्यमौलिमरुणाङ्गरुचिं त्रिनेत्रम् ॥ ५९ ॥

भानुलक्षं जपेन्मन्त्रमस्राज्येन दशांशतः ।
तिलैर्वा मधुना सिक्तैर्जुहुयाद्विजितेन्द्रियः ॥ ६० ॥
पूर्वोक्ते पूजयेत् पीठे विधानेनामुना रविम् ।
प्रथमावृत्तिराङ्गैः स्यात् परा चन्द्रादिभिर्ग्रहैः ॥ ६१ ॥
तृतीया लोकपालैः स्याच्चतुर्थी स्यात्तदायुधैः ।
इति संपूज्य निर्माल्यं तेजश्चण्डाय दीयताम् ॥ ६२ ॥
अर्घ्यं प्रागीरितं दद्याद्भानवे विजितेन्द्रियः ।
सोऽपि बहुधनं धान्यं पुत्रपौत्रयशःपशून् ॥ ६३ ॥
वस्त्राणि भूषणादीनि दद्यात्तस्मै न संशयः ।
आकाशमग्निपवनमथान्ताधीशविन्दुमत् ॥ ६४ ॥
मार्त्तण्डभैरवं नाम वीजमेतदुदाहृतम् ।
पुटितं विश्ववीजेन सर्वकामफलप्रदम् ॥ ६४ ॥
टान्तं दहननेत्रेन्दुसहितं तदुदीरितम् ।
पञ्चक्रूराख्यवीजेन पञ्चमूर्त्तिं प्रविन्यसेत् ॥ ६६ ॥
अङ्गुष्ठाङ्ककनिष्ठाङ्गमङ्गुली शक्रमादिमान् ।
सूर्य्यस्तु भास्करो भानुस्ततो रविर्दिवाकरौ ॥ ६७ ॥
शिरोवदनहृद्गुह्यपाददेशेषु ताम् पुनः ।
दीर्घयुक्तेन वीजेन नेत्रान्ताङ्गानि विन्यसेत् ।
व्यापकं मूलवीजेन कुर्वीत तदनन्तरम् ॥ ६८ ॥

हेमाम्भोजप्रवालप्रतिमनिजरुचिं चारुखट्वाङ्गपद्मौ
चक्रं शक्तिं सपाशं सृणिमणिरुचिरामक्षमालाकपालम् ।
हस्ताम्भोजैर्दधानं त्रिनयनविलसद्वेदवक्त्राभिरामं
मार्त्तण्डं वल्लभार्द्धं मणिमयमुकुटं हारदीप्तं भजामः ॥ ६८ ॥
लक्षत्रयं जपेन्मन्त्री वीजं विश्वपुटीकृतम् ।
दशांशं कमलैः फुल्लैर्जुहुयान्मधुरोक्षितैः ॥ ७० ॥
पीठे दीप्तादिभिर्युक्ते कर्णिकायामुषादिकाः ।
पूर्वादिदिक्षु संपूज्य मूर्त्तिं मूलेन कल्पयेत् ॥ ७१ ॥
आवाह्य पूजयेद्देवं वक्ष्यमाणविधानतः ।
सूर्य्यादींश्चतुरो दिक्षु विदिक्ष्वन्यं समर्च्चयेत् ॥ ७२ ॥
अङ्गपूजा यथापूर्वं नेत्रमीशानदिग्गतम् ।
ग्रहानष्टौ ततो बाह्ये लोकपालानतः परम् ॥ ७३ ॥
अर्घ्यं प्रदानं प्रजपन्मन्त्री मार्त्तण्डभैरवम् ।
इति सिद्धमनुर्मन्त्री साधयेदिष्टमात्मनः ॥ ७४ ॥
शाल्याज्यतिलविल्वानां लक्षहोमाद्भवेन्निधिः ।
राजवृक्षसमुद्भूतैः पुष्पैर्होमो रमाकरः ॥ ७५ ॥
जवाकुसुमहोमेन वशयेदचिरान्नृपान् ।
मातुलुङ्गफलैर्हुत्वा धनमिष्टं लभेत सः ॥ ७६ ॥
इमं मन्त्रं जपन्मर्त्त्यः कीर्त्तिं पुत्रान् धनं द्युतिम् ।
वाक्सिद्धिममितां लक्ष्मीं सौभाग्यमपि साधयेत् ॥ ७७ ॥
वियदर्द्धेन्दुललितं तदादि. स्वर्गसंयुतः ।
अजपाख्यो मनुः प्रोक्तो द्व्यक्षरः स्वरपादपः ॥ ७८ ॥
ऋषिर्ब्रह्मा स्मृतो देवी गायत्री छन्द ईरितः ।
देवता जगतामादिः संप्रोक्तो गिरिजापतिः ।
हंसा षड्दीर्घयुक्तेन कुर्य्यादङ्गक्रिया मनोः ॥ ७९ ॥
उद्यद्भानुस्फुरिततड़िदाकारमर्द्धाम्बिकेशं

पाशाभीतिवरदपरशून् सन्दधानं कराब्जैः ।
दिव्याकल्पैर्नवमणिमयैः शोभितं विश्वमूलं
सौम्याग्नेयं वपुरवतु वश्चन्द्रचूडं त्रिनेत्रम् ॥ ८० ॥
ध्यात्वा लक्षं जपेन्मन्त्रं पायसेन ससर्पिषा ।
दशांशं जुहुयात् सम्यक् ततः सिद्धो भवेन्मनुः ॥ ८१ ॥
दीप्तादिपूजिते पीठे प्रागुक्ते पूजयेद्विभुं ।
मूर्त्तिं मूलेन सङ्कल्प्य यजेदङ्गादिभिः सह ॥ ८२ ॥
‥तं वसु नवरवौ दिग्दलेषु विदिक्ष्वथ ।
‥र्चयेत् ऋतजां गोजामब्जामर्यादिजां पुनः ॥ ८३ ॥
‥ोकेश्वरांस्तदस्त्राणि प्रयजेद्देवमव्ययम् ।
‥र्यं च विधिवद्दद्यात् प्रागुक्तेनैव वर्त्मना ॥ ८४ ॥
‥न्त्राद्यमातृकाम्भोजे पूर्णकुम्भं निधाय तम् ।
‥धाय वामहस्तेन न्यस्तमन्त्रेण संयतः ॥ ८५ ॥
‥ष्टोत्तरशतं मन्त्रं जपेत्तोयं सुधामयम् ।
‥त्वा तेनाभिषिञ्चेद् यं स भवेद्विगतामयः ॥ ८६ ॥
‥ायुरारोग्यविभवानमितान् लभते नरः ।
‥नेनैव विधानेन विषार्त्तो निर्विषो भवेत् ॥ ८७ ॥
‥न्दुभ्यां विगलत्सुधापरिवृतं मन्त्राम्बुबीजं ततः
‥च्योतत्परमामृतार्द्रशशिना संसिक्तमात्मं स्मरन् ।
‥न्त्री मन्त्रमिमं जपेद्विषगदोन्मादापमृत्युज्वरान्
‥त्वा वर्षशतं विशिष्टविभवो जीवेत् सुखं बन्धुभिः ॥८८॥
‥ाहुतित्रयमग्निः स्याज्जातवेद इहावह ।
‥र्वकर्माणि सम्भाव्य साधयाग्निप्रियां ततः ॥ ८९ ॥
ताराद्योऽयं मनुः प्रोक्तः पञ्चविंशतिवर्णवान् ।
ऋषिर्भृगुर्भवेच्छन्दो गायत्रीदेवता मतः ॥ ९० ॥
विभक्तैः पञ्चभिः षड्भिश्चतुर्भिः पञ्चभिस्त्रिभिः ।

द्वाभ्यामङ्गक्रिया प्रोक्ता वर्णैर्मूलमनोः क्रमात् ॥ ९१ ॥

अंसासक्तसुवर्णमाल्यमरुणं स्रक्चन्दनालङ्कृतं

ज्वालापुञ्जजटाकलापविलसन्मौलिस्थ शुक्लांशुकम् ।

शक्तिस्वस्तिकदर्भमुष्टिकजपस्रक्स्रुग्भवाभीवरान्

दोर्भिर्बिभ्रतमस्थितं त्रिनयनं रक्ताभमग्निं भजे ॥ ९२ ॥

गुरोर्लब्धमनुर्मन्त्री चतुर्दश्यामुपोषितः ।

जपेल्लक्षानुसहस्राणि शुद्धाचारो जितेन्द्रियः ॥ ९३ ॥

अमावस्यादिने विप्रान् भोजयेन्मधुरोत्तरैः ।

भक्ष्यैर्भोज्यैर्यथाशक्ति दद्यात्तेभ्योऽपि दक्षिणाम् ॥ ९४ ॥

यष्ट्वा स्वयं समानीय होमद्रव्याणि शोधयेत् ।

अपरं दिनमारभ्य होमं कुर्य्यादतन्द्रितः ॥ ९५ ॥

क्रमाद्वटसमिद्व्रीहितिलराजिहविर्घृतैः ।

प्रत्येकमष्टोत्तरशतं जुहुयाद्दिनशः सुधीः ॥ ९६ ॥

दशाहमेवं निर्वर्त्य विधानेन विधानवित् ।

दत्त्वा पूर्णाहुतिं सम्यगेकादश्यां द्विजोत्तमान् ॥ ९७ ॥

संपूज्य तर्पयेद्वित्तैर्यथाविभवमादरात् ।

गुरवे दक्षिणां दद्यादरुणां गां पयस्विनीम् ॥ ९८ ॥

वासांसि धनधान्यानि दत्त्वा सम्प्रीणयेत् गुरुम् ।

सुमण्डलान्तं प्रजपेत् पीठं सनवशक्तिकम् ॥ ९९ ॥

पीता श्वेतारुणा कृष्णा धूम्रा तीव्रा स्फुलिङ्गिनी ।

रुचिरा ज्वालिनी प्रोक्ताः कृशानोर्नवशक्तयः ॥ १०० ॥

स्वबीजेनासनं दत्त्वा मूर्त्तिं मूलेन कल्पयेत् ।

तत्र संपूजयेदग्निं विधिना प्रोक्तलक्षणम् ॥ १०१ ॥

अङ्गपूजां पुरा कृत्वा मूर्त्तीरष्टौ दलेष्विमाः ।

जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः ॥ १०२ ॥

अश्वोदरजसंज्ञोऽन्यः पुनर्वैश्वानराह्वयः ।

कौमारतेजाः स्यादिश्वमुखो देवमुखः परः ॥ १०३ ॥
अर्च्याः स्वस्तिकशङ्खाभ्यां विराजितकराम्बुजाः ।
लोकेशानर्चयेद्वाह्ये वज्राद्यायुधसंयुतान् ॥ १०४ ॥
इति संपूजयेन्नित्यं जपेत् साष्टसहस्रकम् ।
जायते वत्सरादर्वाक् धनधान्यसमृद्धिमान् ॥ १०५ ॥
साज्यमन्नं प्रजुहुयाद्वत्सराल्लभते श्रियम् ।
कुसुमैर्ब्रह्मवृक्षस्य दधिक्षीरघृतप्लुतैः ॥ १०६ ॥
करवीरप्रसूनैर्वा मण्डलात् स्यात् समृद्धिमान् ।
षण्मासं कपिलाज्येन जुहुयाद्वत्सरान्तरे ॥ १०७ ॥
तस्य सञ्जायते लक्ष्मीः कीर्त्तिस्त्रैलोक्यवन्दिता ।
शालिभिर्जुहुयान्नित्यं विधिनाष्टोत्तरं शतम् ॥ १०८ ॥
व्रीहिगोमहिषाद्याढ्यैर्भवनं तस्य पूर्य्यते ।
तिलहोमेन महतीं लक्ष्मीमाप्नोति मानवः ॥ १०९ ॥
पलाशबिल्वखदिरशमीदुग्धमहीरुहान् ।
विकङ्कतारग्वधर्योः समिद्भिः करवीरजैः ॥ ११० ॥
प्रसूने कुसुमैः पद्मैः कह्लारैरुत्पलैः ।
जातीप्रसूनैर्दूर्वाभिर्नित्यमष्टोत्तरं शतम् ॥ १११ ॥
एकेन जुहुयान्मन्त्री प्रतिपत्स्वथवा सुधीः ।
साधयेदखिलान् कामान् षण्मासान्नात्र संशयः ॥ ११२ ॥
उत्तिष्ठ पुरुषं ब्रूयात् हरिपिङ्गलतत्परम् ।
लोहिताक्षपदं देहि मे ददापय ठद्वयम् ॥ ११३ ॥
चतुर्विंशत्यक्षरात्मा समृद्धिमनुरीरितः ।
ऋष्यादयः पुरा प्रोक्ताः षड्भूतकरणैस्त्रिभिः ॥ ११४ ॥
चतुर्भिर्युगलैर्नान्त्यैर्मूलमन्त्रसमुद्भवैः ।
विदधीत षडङ्गानि जातियुक्तानि मन्त्रवित् ॥ ११५ ॥
स्वर्णाश्वत्थविनिर्गतं हुतवहं सिन्दूरपुञ्जप्रभं

ज्वालाभिर्निचिताङ्गरोमनिचयं कान्त्या जगन्मोहनम् ।
अश्वाकारमनर्घ्यरत्नविलसद्भूषालसत्कन्धरं
रत्नैरिन्द्रियनिर्गतैर्वसुमतीमाच्छादयन्तं स्मरेत् ॥११६॥
लक्षं मनुं जपेदेनं पयोऽन्नेन ससर्पिषा ।
दशांशं जुहुयाद्दक्षो तुरङ्गाग्निमनुं स्मरन् ॥ ११७ ॥
पीठे प्रागीरितेऽभ्यर्चेदङ्गैस्तन्मूर्त्तिभिः सह ।
आशापालैस्तदीयास्त्रैरर्चयेद्धव्यवाहनम् ॥ ११८ ॥
प्रातः स्नानरतो मन्त्री सहस्रं यो जपेन्मनुम् ।
जित्वा रोगान् सुखं जीवेच्छ्रिया वर्षशतं नरः ॥ ११९ ॥
हृत्प्रमाणे जले स्थित्वा भानुमालोक्य संयतः ।
चतुःसहस्रं प्रजपेन्नित्यं संवत्सरावधि ॥ १२० ॥
अपमृत्युभयं रोगकृत्यादारिद्रासम्भवान् ।
क्लेशान्निहत्य तेजस्वी जीवेद्वर्षशतं सुखम् ॥ १२१ ॥
कृत्तिकायां प्रतिपदि शालिहोमो धनप्रदः ।
दध्नाश्वत्थसमिद्भिर्वा प्रतिपत्सु भवेद्धनम् ॥ १२२ ॥
इष्टावाप्तिर्भवेदाज्यैः पशुर्ग्राममवाप्नुयात् ।
तैलैर्ज्योतिष्मतीभूतैरिपुराष्ट्रं जयेन्नृपः ॥ १२३ ॥
अश्वत्थ समिधो होमि घृताक्ता जुहुयान्नरः ।
कन्यामिष्टामवाप्नोति सापि तं प्राप्नुयात् पतिम् ॥ १२४ ॥
शुद्धाज्येन कृतो होमो ज्वरनाशकरः स्मृतः ।
सप्ताहं जुहुयान्मन्त्री बन्धूककुसुमैः शुभैः ॥ १२५ ॥
साग्रं सहस्रमचिरान्महतीं श्रियमश्नुते ।
मासं चीरेण गव्येन क्षीराहारो जितेन्द्रियः ॥ १२६ ॥
सहस्रं जुहुयान्मन्त्री सम्पदामधिपो भवेत् ।
आज्याक्तदूर्वाहोमेन जीवेद्वर्षशतं नरः ॥ १२७ ॥
अष्टोत्तरशतं नित्यं हविषा मृगमुद्रया ।

जुह्वतो जायते लक्ष्मीर्धनधान्यसमृद्धिदा ॥ १२८ ॥
प्रतिमासं प्रतिपदि जुहुयादयुतं घृतैः ।
श्रीर्भवेन्महती तस्य षण्मासादनपायिनी ॥ १२९ ॥
अरुणैरुत्पलैः फुल्लैर्मधुरत्रयसंयुतैः ।
जुहुयाद्वत्सरादर्वाक् स भवेदिन्दिरापतिः ॥ १३० ॥
अरुणाभैस्त्रिमध्वक्तैर्जुहुयादन्वहं सुधीः ।
सहस्रं वत्सरार्द्धेन भवेद्भूमिपुरन्दरः ॥ १३१ ॥
वत्सरं जुह्वतस्तैः स्याल्लक्ष्मीरिन्द्रेण वाञ्छिता ।
जुहुयादमृताखण्डैः पयोऽक्तैः सप्तवासरान् ॥ १३२ ॥
त्रिसहस्रं प्रतिदिनं मन्त्रविद्विजितेन्द्रियः ।
कृत्याद्रोहज्वरोन्मादरोगाञ्जित्वा निरन्तरम् ॥ १३३ ॥
जीवेद्वर्षशतं हुत्वा तेजसा भास्करप्रभः ।
करवीरजवाबिल्वपलाशनृपभूरुहाम् ॥ १३४ ॥
प्रसूनैः कुमुदैः फुल्लैः कुरण्टैर्जातिसम्भवैः ।
पुष्यैर्हुत्वा त्रिमध्वक्तैर्मन्त्री प्रतिपदं प्रति ॥ १३५ ॥
प्राप्नुयान्महतीं लक्ष्मीं वत्सराद्वाञ्छिताधिकाम् ।
आदाय तण्डुलप्रस्थं निर्मलं साधुशोधितम् ॥ १३६ ॥
गोदुग्धेन हविःपक्वकमलान्तेन कल्पयेत् ।
आज्याक्तं तत् समादाय पूजिते हव्यवाहने ॥ १३७ ॥
गन्धपुष्पादिभिः सम्यग्जपित्वाष्टोत्तरं शतम् ।
जुहुयात् प्रतिपद्यग्निं ध्यात्वोत्तरपरिग्रहम् ॥ १३८ ॥
जायते वत्सरादेव लक्ष्मीस्त्रैलोक्यमोहिनी ।
मन्त्रेणानेन संजप्तां वचां खादेद्दिनागमे ॥ १३९ ॥
भारती निवसेत्तस्य मुखाम्भोजे विनिश्चला ।
अष्टोत्तरशतं जप्तं जलं प्रातः पिबेन्नरः ॥ १४० ॥
जठराग्निर्ज्वलेत्तस्य घृतैरिव हुताशनः ।

कृत्वा नवपदात्मानं मण्डलं प्रागुदीरितम् ॥ १४१ ॥
कलसानथ कल्याणान् स्थापयेत् प्रोक्तवर्त्मना ।
क्षीरद्रुचत्वगुद्भूतैः क्वाथैस्तान् पूजयेत् क्रमात् ॥ १४२ ॥
वस्त्रादिभिरलङ्कृत्य नवरत्नानि निःक्षिपेत् ।
मध्ये संपूजयेदग्निं मूर्त्तीरष्टौ दिशां क्रमात् ॥ १४३ ॥
कुम्भेषु गन्धपुष्पाद्यैर्धूपदीपमनोहरैः ।
स्पृष्ट्वा जपेन्नवकुम्भान्मन्त्रमष्टोत्तरं शतम् ॥ १४४ ॥
अभिषिञ्चेत् पुनः साध्यं विनीतं दत्तदक्षिणम् ।
ज्वरग्रहमहारोगदारिद्र्यादीन् विजित्य सः ।
जीवेद्वर्षशतं सम्यगभिषिक्तः श्रिया सह ॥ १४५ ॥

इति शारदातिलके चतुर्दशः पटलः ॥

---

## पञ्चदशः पटलः ।

अथ वक्ष्ये महामन्त्रान् विष्णोः सर्वार्थसाधकान् ।
यस्य संस्मरणात् सन्तो भवाब्धेः पारमाश्रिताः ॥ १ ॥
तारं नमः पदं ब्रूयान्नारौ दीर्घसमन्वितौ ।
पवनोणाय मन्त्रोऽयं प्रोक्तो वस्वक्षरात्मकः ॥ २ ॥
साध्यो नारायणः प्रोक्तो मुनिश्छन्द उदाहृतम् ।
मन्त्रस्य देवी गायत्री देवता विष्णुरव्ययः ॥ ३ ॥
क्रुद्धोल्काय हृदाख्यातं महोल्काय शिरः स्मृतम् ।
वीरोल्काय शिखा प्रोक्ता उल्काय कवचं स्मृतम् ॥ ४ ॥
सहस्रोल्कायास्त्रमुक्तमङ्गकॢप्तिरियं मता ।
भूयो वर्णैर्मनोः षड्भिः षडङ्गानि समाचरेत् ॥ ५ ॥
अवशिष्टौ पुनर्वर्णौ विन्यसेत् कुक्षिपृष्ठयोः ।
षड्दिक्चक्रमन्त्रेण मन्त्रवर्णांस्तनौ न्यसेत् ॥ ६ ॥

आधारे हृदये वक्त्रे दोःपन्मूलेषु नाभिके ।
कण्ठे नाभौ हृदि कुचे पार्श्वपृष्ठेषु तत्परम् ॥ ७ ॥
मूर्द्धास्यश्रवणे चैव घ्राणेषु तदनन्तरम् ।
दोःपादसन्ध्यङ्गुलीषु धातुप्राणेषु हृत्स्थले ॥ ८ ॥
मूर्द्धचणास्यहृत्कुक्षिसोरुजङ्घापदद्वये ।
एकैकशो न्यसेद्वर्णान् गण्डांसोरुपदेषु च ॥ ९ ॥
शङ्खचक्रगदाम्भोजपदेष्ववर्गाङ्कितो न्यसेत् ।
अष्टोर्णोऽष्टप्रकृत्यात्मा ज्ञेयोऽसौ चतुरात्मनाम् ॥ १० ॥
संयोगः सूरिभिः प्रोक्तो विशिष्टो द्वादशाक्षरः ।
अतस्तन्मन्त्रवर्णाद्या द्वादशस्वरसंयुताः ॥ ११ ॥
द्वादशादित्यसहिता मूर्त्तीर्द्वादश विन्यसेत् ।
केशवाद्याः क्रमाद्देहे वक्ष्यमाणविधानतः ॥ १२ ॥
ललाटे केशवं धात्रा कुक्षौ नारायणं पुनः ।
अर्य्यम्णा हृदि मित्रेण माधवं कण्ठदेशतः ॥ १३ ॥
वरुणेन च गोविन्दं पुनर्दक्षिणपार्श्वके ।
अंसेन विष्णुमंसस्थं भगेन मधुसूदनम् ॥ १४ ॥
गले विवस्वता युक्तं त्रिविक्रममनन्तरम् ।
वामपार्श्वस्थमिन्द्रेण वामनाख्यमथांसके ॥ १५ ॥
पुष्णा श्रीधरनामानं गले पर्जन्यसंयुतम् ।
हृषीकेशाह्वयं पृष्ठे पद्मनाभं ततः परम् ॥ १६ ॥
त्वष्ट्रा दामोदरं पश्चाद्विष्णुना ककुदि न्यसेत् ।
द्वादशार्णं महामन्त्रं ततो मूर्ध्नि प्रविन्यसेत् ॥ १७ ॥
पुनः किरीटमन्त्रेण व्यापकं विन्यसेत्ततः ।
ब्रूयात् किरीटकेयूरहारं मकरमण्डलम् ॥ १८ ॥
शङ्खचक्रगदाम्भोजहस्तं पीताम्बरं धरम् ।
श्रीवत्साङ्कितवक्षोऽन्ते स्थलशब्दमुदीरयेत् ॥ १९ ॥

श्रीभूमिसहितं सात्माज्योतिर्द्वयमुदाहरेत् ।
पश्चाद्दीप्तिकरायेति सहस्रादित्यतेजसे ॥ २० ॥
नमोऽन्तः प्रणवाद्योऽयं किरीटमनुरीरितः ।
एवं न्यासं तनौ कृत्वा ध्यायेन्नारायणं परम् ॥ २१ ॥
उद्यत्कोटिदिवाकराभमनिशं शङ्खं गदापङ्कजं
चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभिपार्श्वद्वयम् ।
कोटीराङ्गदहारकुण्डलधरं पीताम्बरं कौस्तुभ
दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजे ॥ २२ ॥
विकारलक्षं प्रजपेन्मनुमेनं समाहितः ।
तद्दशांशं सरसिजैर्जुहुयान्मधुराप्लुतैः ॥ २३ ॥
पीठे संपूजयेद्देवं विमलादिसमन्वितम् ।
विमलोत्कर्षिणी ज्ञाना क्रिया योगा ततः परम् ॥ २४ ॥
प्रह्वी सत्या तथेशानानुग्रहा नवमी मता ।
नमो भगवते ब्रूयात् विष्णवेऽथ पदं वदेत् ॥ २५ ॥
सर्वभूतात्मने वासुदेवायेति वदेत्ततः ।
सर्वात्मसंयोगपदाद् योगपद्मपदं पुनः ॥ २६ ॥
पीठात्मने हृदन्तोऽयं मन्त्रस्ताराादिरीरितः ।
दत्त्वानेनासनं मन्त्री मूर्त्तिं मूलेन कल्पयेत् ॥ २७ ॥
अथावाह्य पूजयेद्देवं सुगन्धिकुसुमादिभिः ।
अङ्गान्यभ्यर्च्य मन्त्रार्णान् केशरेषु समर्चयेत् ॥ २८ ॥
दलेषु वासुदेवाद्या मूर्त्तीः शक्तिसमन्विताः ।
वासुदेवं सङ्कर्षणं प्रद्युम्नमनिरुद्धकम् ॥ २९ ॥
हिमपीततमालेन्द्रनीलाभाः पीतवाससः ।
शङ्खचक्रगदाम्भोजधरा एते चतुर्भुजाः ॥ ३० ॥
शान्तिं श्रियं सरस्वत्या रतिं कोणदलेषु ताः ।
श्वेतकाञ्चनगोदुग्धदूर्वावर्णाः सुभूषिताः ॥ ३१ ॥

द्वितीयरचैंदलाग्रेषु शङ्खं चक्रं गदाम्बुजे ।
कौस्तुभं मुषलं खड्गं वनमालां यथाक्रमम् ॥ ३२ ॥
रक्ताभपीतकनकश्यामकृष्णासिपाण्डुरान् ।
बहिरग्रे समभ्यर्च्चेद् गरुडं कुङ्कुमप्रभम् ॥ ३३ ॥
मुक्तामाणिक्यसङ्काशौ दक्षिणोत्तरयोर्निधी ।
ध्वजं वरुणदिग्भागे श्यामलं पूजयेत्ततः ॥ ३४ ॥
अरुणं विघ्नमाप्राय श्याममार्च्यं निशाचरे ।
श्यामां दुर्गां वायुकोणे सेनान्यं प्रीतमीश्वरे ॥ ३५ ॥
इन्द्रादीन् पूजयेत् पश्चात् वज्राद्यायुधसंयुतान् ।
इति संपूजयेद्विष्णुं प्रोक्तैरावरणैः सह ॥ ३६ ॥
धर्मार्थकामान् लब्ध्वान्ते विष्णोः सायुज्यमाप्नुयात् ।
प्रणवो भगवते वासुदेवाय कीर्त्तितः ॥ ३७ ॥
प्रधानं वैष्णवे तन्त्रे मन्त्रोऽयं द्वादशाक्षरः ।
ऋषिः प्रजापतिश्छन्दो गायत्री परिकीर्त्तितम् ॥ ३८ ॥
देवतास्य मनोः प्रोक्तो वासुदेवो मनीषिभिः ।
तारेण हृदयं प्रोक्तं नमसा शिर ईरितम् ॥ ३९ ॥
चतुर्वर्णैः शिखा प्रोक्ता पञ्चार्णैः कवचं मतम् ।
समस्तेन भवेदस्त्रमङ्गकल्पनमीरितम् ॥ ४० ॥
मूर्ध्नि भाले दृशोरास्ये गलदोर्हृदयाम्बुजे ।
कुक्षौ नाभौ ध्वजे जानुद्वये पादद्वये न्यसेत् ॥ ४१ ॥
विष्णुं शारदचन्द्रकोटिसदृशं शङ्खं रथाङ्गं गदा-
मम्भोजं दधतं सिताब्जनिलयं कान्त्या जगन्मोहनम् ।
आबद्धाङ्गदहारकुण्डलमहामौलिं स्फुरत्कङ्कणं
श्रीवत्साङ्कमुदारकौस्तुभधरं वन्दे मुनीन्द्रस्तुतम् ॥४२॥
वर्णलक्षं जपेदेनं दीक्षितो विजितेन्द्रियः ।
तत्सहस्रं प्रजुहुयात्तिलैराज्यपरिप्लुतैः ॥ ४३ ॥

पीठे प्राग्गोरिते मन्त्री मूर्त्तिं मूलेन कल्पयेत् ।
पूजयेद्विधिनानेन वासुदेवं विधानवित् ॥ ४४ ॥
प्रथमा वृतिरङ्गैः स्याद्वासुदेवादिभिः परा ।
शान्त्यादिशक्तिसहितैः परा द्वादशमूर्त्तिभिः ॥ ४५ ॥
चतुर्थी स्वरणार्थाद्यैर्वज्राद्यैः पञ्चमी मता ।
एवं संपूजिते विष्णौ प्रदद्यादिष्टमात्मनः ॥ ४६ ॥
पायसेन घृताक्तेन मन्त्रवर्णसहस्रकम् ।
जुहुयान्मनसः शुद्धौ समिद्भिः चीरभूरुहाम् ॥ ४७ ॥
तत्संख्यया पयोक्ताभिः सर्वपापविमुक्तये ।
हृल्लेखाबीजयुगलं रमाबीजयुगं पुनः ॥ ४८ ॥
लक्ष्म्यान्ते वासुदेवाय हृदन्तः प्रणवादिकः ।
चतुर्दशाक्षरः प्रोक्तो मन्त्रोऽयं सुरपादपः ॥ ४९ ॥
हृदयं शक्तिबीजाभ्यां रमाभ्यां शिर ईरितम् ।
लक्ष्म्याः प्रोक्तं शिखावर्म वासुदेवाय कीर्त्तितम् ।
नमसास्त्रं समुद्दिष्टं सर्वतारादि कल्पयेत् ॥ ५० ॥
विद्युच्चन्द्रनिभं वपुः कमलजावैकुण्ठयोरेकतां
प्राप्तं स्नेहवशेन रत्नविलसद्भूषाभरालङ्कृतम् ।
विद्यापङ्कजदर्पणान्मणिमयं कुम्भं सरोजं गदां
शङ्खचक्रममूनि बिभ्रतमिमां दिश्याच्छ्रियं वः सदा ॥५१॥
वर्णलक्षं जपेदेनं तत्सहस्रं सरोरुहैः ।
होमं कुर्य्याद्विकसितैर्मधुरत्रयसंयुतैः ॥ ५२ ॥
पूजा स्याद्वैष्णवे पीठे द्वादशाक्षरवर्त्मना ।
पायसेन कृतो होमो लक्ष्मीवश्यप्रदायकः ॥ ५३ ॥
मधुराक्तैस्तिलैर्हुत्वा सर्वकार्य्याणि साधयेत् ।
तारो हृद्विष्णवे पश्चात् ङेन्तः स्वरपतिर्भवेत् ॥ ५४ ॥
महाबलाय ठद्वन्द्वं मनुरष्टादशाक्षरः ।

त्रिधिर्बिन्दुर्विराट्छन्दो देवता दधिवामनः ॥ ५५ ॥
षडेकेन शिरो द्वाभ्यां शिखा त्रिभिरुदाहृता ।
कवचं पञ्चभिः प्रोक्तं नेत्रन्त्वाखिरचरैः ॥ ५६ ॥
द्वाभ्यामस्त्रमिति प्रोक्तं प्रकारोऽङ्गस्य सूरिभिः ।
मूर्ध्नि भाले दृशोर्युग्मे कर्णनासौष्ठतालुषु ॥ ५७ ॥
कण्ठे बाहुद्वये पश्चाद् हृदयोदरनाभिषु ।
गुह्योरुजानुयुग्मेषु जङ्घयोः पादयोर्न्यसेत् ।
अष्टादश मनोर्वर्णान् पश्चाद् देवं विचिन्तयेत् ॥ ५८ ॥
मुक्तागौरं नवमणिलसद्भूषणञ्चन्द्रसंस्थं
भृङ्गाकारैर्वनकालकैः शोभिवक्त्रारविन्दम् ।
हस्ताब्जाभ्यां कनककलसं शुद्धतोयाभिपूर्णं
दध्यन्नाढ्यं कनकचषकं धारयन्तं भजामः ॥ ६० ॥
गुणलक्षं जपेन्मन्त्रं तद्दशांशं घृताप्लुतैः ।
पायसान्नैः प्रजुहुयाद् दध्यन्नैर्वा यथाविधि ॥ ६१ ॥
चन्द्रात्मकल्पिते पीठे प्रागुक्ते तं समर्चयेत् ।
मूर्त्तिं मूलेन सङ्कल्प्य वक्ष्यमाणविधानतः ॥ ६२ ॥
षडङ्गानि समभ्यर्चेत् केशरेषु यथा पुरा ।
अभ्यर्च्य वासुदेवादीन् ध्वजादीनर्चयेत्ततः ॥ ६३ ॥
केशवाद्या दलाग्रेषु सुरेन्द्रादीननन्तरम् ।
वज्रादीनि गजानष्टौ समावरणमीरितम् ॥ ६४ ॥
विधानमेतद्देवस्य कीर्त्तितं सुरपूजितम् ।
पायसाज्येन जुहुयात् सहस्रं श्रियमाप्नुयात् ॥ ६५ ॥
धान्यहोमेन धान्याप्तिः शतपुष्पासमुद्भवैः ।
बीजैः सहस्रसंख्यातैर्होमो भयविनाशनः ॥ ६६ ॥
दध्योदनेन शुद्धेन हुत्वा मुच्येत दुर्गतेः ।
स्मृत्वा त्रिविक्रमं रूपं जपन्मन्त्रमनन्यधीः ॥ ६७ ॥

मुक्तोबन्धाद्भवेत् सद्यो नात्र कार्य्या विचारणा ।
पटे संपाद्य देवेशं भित्तौ वा पूजयेत् सुधीः ।
सुगन्धिकुसुमैर्नित्यं महतीं श्रियमश्नुते ॥ ६८ ॥
समध्यतारोज्ज्वलकर्णिकाढ्यमष्टाक्षरैरुज्ज्वलकेशराढ्यम् ।
मन्त्राक्षरद्वन्द्वयुताष्टपत्रं शिष्टार्णयुग्मोल्लसिताब्धपत्रम् ॥ ६९॥
द्वादशाक्षरसम्बीतं तत्परं मातृकाक्षरैः ।
विदध्याद्वेष्टितं यन्त्रं सर्वसम्पत्प्रदायकम् ॥ ७० ॥
उद्गिरत् पदमाभाष्य प्रणवोद्गीथशब्दतः ।
सर्ववागीश्वरेत्यन्ते प्रवदेदीश्वरेत्यथ ॥ ७१ ॥
सर्ववेदमयाचिन्त्य पदान्ते सर्वमुच्चरेत् ।
बोधय द्वितयान्तोऽयं मन्त्रस्तारादिरीरितः ॥ ७२ ॥
ऋषिर्ब्रह्मास्य निर्दिष्टश्छन्दोऽनुष्टुबुदाहृतम् ।
देवता स्यात् हयग्रीवो वागैश्वर्य्यप्रदायकः ।
तारेण पादैर्मन्त्रस्य पञ्चाङ्गानि प्रकल्पयेत् ॥ ७३ ॥
शरच्छशाङ्कप्रभमश्ववक्त्रं मुक्तामयैराभरणैरुपेतम् ।
रथाङ्गशङ्खाञ्चितबाहुयुग्मं जानुद्वयन्यस्तकरं भजामः ॥७४॥
वर्णलक्षं जपेन्मन्त्रं कुन्दपुष्पैर्मधुप्लुतैः ।
दशांशं वैष्णवे वह्नौ जुहुयान्मन्त्रसिद्धये ॥ ७५ ॥
अष्टाक्षरोदिते पीठे हयग्रीवं प्रपूजयेत् ।
वीजेन मूर्त्तिं सङ्कल्प्य वीजमुच्चियते यथा ॥ ७६ ॥
वियद्भृगुस्थमर्घीशं विन्दुमद्बीजमीरितम् ।
केशरेषु चतुर्वेदांश्चतुर्दिक्षु समर्चयेत् ॥ ७७ ॥
विदिक्ष्वङ्गस्मृतिन्यायसर्वशास्त्राणि पूजयेत् ।
अर्चयेत् पत्रमध्येषु विधानेनाङ्गदेवताः ॥ ७८ ॥
बाह्ये लोकेश्वरांस्तेषां वज्राद्यस्त्राणि संयजेत् ।
एवं यो भजते देवं साक्षाद् वागीश्वरो भवेत् ॥ ७९ ॥

बिल्वैः फलैः कृतो होमः श्रीकरः परिगीयते ।
कुन्दपुष्पाणि जुहुयादिच्छन् वाक्श्रियमुत्तमाम् ॥ ८० ॥
मनुनानेन संजप्तं घृतं ब्राह्मीरसैः सृतम् ।
कवितामाहरेत् पुंसामनर्गलविजृम्भिणीम् ॥ ८१ ॥
वचामनेन संजप्तां भक्षयेत् प्रातरन्वहम् ।
सर्ववेदागमादीनां व्याख्याता जायतेऽचिरात् ॥ ८२ ॥
मनोरस्य समो नास्ति ज्ञानैश्वर्य्यप्रदः पुनः ।
अनन्तोऽग्न्यासनः सेन्दुबीजं रामाय हृन्मनुः ॥ ८३ ॥
षडक्षरोऽयमादिष्टो भजतां कामदो मणिः ।
ब्रह्मा प्रोक्तो मुनिश्छन्दो गायत्रं देवता मनोः ॥ ८४ ॥
देशिकेन्द्रैः समाख्यातो रामो राक्षसमर्दनः ।
दीर्घभाजा स्वबीजेन कुर्य्यादङ्गानि षट् क्रमात् ॥ ८५ ॥
ब्रह्मरन्ध्रे भ्रुवोर्मध्ये हृन्नाभ्यन्धुषु पादयोः ।
षडक्षराणि विन्यस्येन्मन्त्रस्य मनुवित्तमः । ८६ ॥
कालाम्भोधरकान्तिमनिशं वीरासनाध्यासिनं
मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यन्तं मुकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे ॥ ८७ ॥
वर्णलक्षं जपेन्मन्त्रं दशांशं कमलैः शुभैः ।
जुहुयादर्चिते वह्नौ ब्राह्मणान् भोजयेत्ततः ॥ ८८ ॥
पूजयेद्वैष्णवे पीठे मूर्त्तिं मूलेन कल्पयेत् ।
श्रीं सीतायै हिठान्तेन सीतां पार्श्वगतां यजेत् ॥ ८९ ॥
अग्रे पार्श्वद्वये साङ्गं शरणाङ्गानि तद्बहिः ।
हनूमन्तं ससुग्रीवं भरतं सविभीषणम् ॥ ९० ॥
लक्ष्मणाङ्गदशत्रुघ्नान् जाम्बवन्तं दलेष्विमान् ।
वारयन्तं हनूमन्तमग्रतो धृतपुस्तकम् ॥ ९१ ॥

भजे भरतशत्रुघ्नौ पार्श्वयोः तच्चामरौ।
छत्रातपत्रे हस्ताभ्यां लक्ष्मणं पश्चिमे यजेत् ॥ ९२ ॥
सृष्टिं जयन्तं विजयं स्वराष्ट्रं राष्ट्रवर्द्धनम्।
अकोपं धर्मपालाख्यं सुमन्त्रञ्च दलाग्रतः ॥ ९३ ॥
सर्वाभरणसम्पन्नान् लोकेशानर्चयेत्ततः।
ततस्तानि ततो बाह्ये वज्रादीनि प्रपूजयेत् ॥ ९४ ॥
एवं पूजादिभिः सिद्धे मन्त्री कर्म्माणि साधयेत्।
जातिप्रसूनैर्जुहुयाच्चन्दनाम्भःसमुक्षितैः ॥ ९५ ॥
राजवैश्याय कमलैर्धनधान्यादिसम्पदे।
नीलोत्पलानां होमेन वश्येर्दखिलं जगत् ॥ ९६ ॥
विल्वप्रसूनैर्जुहुयादिन्दिरावाप्तये नरः।
दूर्वाहोमेन दीर्घायुर्भवेन्मन्त्री निरामयः ॥ ९७ ॥
रक्तोत्पलहुतान्मन्त्री धनमाप्नोति वाञ्छितम्।
मेधाकामेन होतव्यं पलाशकुसुमैर्नरैः ॥ ९८ ॥
तज्जप्तमम्भः प्रतिवेत् कविर्भवति वत्सरात्।
तन्मन्त्रितान्नं भुञ्जीत महदारोग्यमाप्नुयात् ॥ ९९ ॥
तारं मध्ये विलिखतु मनुं षट्सु कोणेषु सन्धि-
ष्वङ्ग मायां स्मरमपि लिखेत् कोणगण्डेषु पश्चात्।
किञ्जल्केषु स्वरगणमथो पत्रमध्येषु माला-
मन्त्रोऽस्यार्णान् गुहमुखमितानष्टमे पञ्चवर्णान् ॥ १०० ॥
दशाक्षरेण संवेष्ट्य कादिवर्णैश्च भूपुरे।
दिग्विदिक्षु लिखेद्बीजे नरसिंहवराहयोः ॥ १०१ ॥
नमो भगवते ब्रूयाच्चतुर्थ्या रघुनन्दनम्।
रक्षोघ्नविषदायान्ते मधुरादि समीरयेत् ॥ १०२ ॥
प्रसन्नवदनायेति पश्चादमिततेजसे।
बलाय पश्चाद्रामाय विष्णवे तदनन्तरम् ॥ १०३ ॥

प्रणवादि नमोऽन्तोऽयं मालामनुरुदीरितः।
जानकीवल्लभायाथ भवेत् पावकवल्लभा ॥ १०४ ॥
कुमादिरेषु कथितो राममन्त्रो दशाक्षरः।
जपादिसाधितं यन्त्रं स्वर्णपट्टादिकल्पितम् ॥ १०५ ॥
बाहुना विधृतं दद्यात् विजयश्रीपराक्रमान्।
गदितं रामचन्द्रस्य विधानं सुरपूजितम् ॥ १०६ ॥
तारं नमो भगवते वराहपदमीरयेत्।
रूपाय भूर्भुवः स्वः स्यात् पतये तदनन्तरम् ॥ १०७ ॥
भूपतित्वं मे पदान्ते देह्यन्ते च ददापय।
वह्निजायावधिर्मन्त्रः स्यात् त्रयस्त्रिंशदक्षरः ॥ १०८ ॥
भार्गवो मुनिराख्यातश्छन्दोऽनुष्टुबुदाहृतम्।
देवतादिवराहोऽस्य मन्त्रस्य कथितो बुधैः ॥ १०९ ॥
एकदंष्ट्राय हृदयं व्योमोल्काय शिरः स्मृतम्।
शिखा तेजोऽधिपतये विश्वरूपाय वर्म च।
महादंष्ट्राय शस्त्रं स्यात् पञ्चाङ्गमिति कल्पयेत् ॥ ११० ॥

आपादं जानुदेशाद्वरकनकनिभं नाभिदेशादधस्ता-
न्मुक्ताभं कण्ठदेशात्तरुणरविनिभं मस्तकान्नीलभासम्।
ईडे हस्तैर्दधानं रथचरणदरौ खड्गखेटौ गदाख्यां
शक्तिं दानाभये च क्षितिधरणलसद्दंष्ट्रमाद्यं वराहम् ॥ १११ ॥

लक्ष्यं मनुं जपेन्मन्त्री मधुराक्तैः सरोरुहैः।
जुहुयात्तद्दशांशेन पीठे विष्णोः प्रपूजयेत् ॥ ११२ ॥
मूर्तिं मूलेन सङ्कल्प्य वक्ष्यमाणविधानतः।
पूर्वादिषु चतुर्दिक्षु हृदाद्यङ्गानि पूजयेत् ॥ ११३ ॥
अस्त्रं कोणेष्वथाथोर्ध्वं चक्राद्यस्त्राणि तद्बहिः।
चक्रं शङ्खमसिं खेटं गदां शक्तिं वराभये ॥ ११४ ॥
संपूज्य बाह्ये लोकेशान् वज्रिरस्त्राणि पूजयेत्।

ध्यानाद्देवो धनं दद्याद्धोमाद्‌द्यादृसुन्धराम् ॥ ११५ ॥
प्रदद्याज्जपपूजाद्यैर्धनधान्यं महीं श्रियम् ।
रवौ सिंहगतेऽष्टम्यां शुक्लपक्षे सितां शिलाम् ॥ ११६ ॥
पञ्चगव्येषु निःक्षिप्य स्पृष्ट्वा तामयुतं जपेत् ।
उत्तराभिमुखो भूत्वा तां शिलां निखनेद्भुवि ॥ ११७ ॥
शत्रुचोरमहाभूतैः कृतां बाधां विनाशयेत् ।
भानूदये भौमवारे साध्यक्षेत्रात् समाहरेत् ॥ ११८ ॥
मृत्तिकां संजपन्मन्त्रं तां पुनर्विभजेत् त्रिधा ।
चुल्यामेकं समारोप्य पाकपात्रे तथा परम् ॥ ११९ ॥
गोदुग्धे परमालोड्य शोधितांस्तण्डुलान् क्षिपेत् ।
संस्कृताग्नौ पचेत् सम्यक् चरुं मन्त्री जपन्मनुम् ॥१२०॥
अवतार्य्य चरुं पश्चादग्नौ देवं यथाविधि ।
धूपदीपादिकैरिष्ट्वा पुनराज्यप्लुतं चरुम् ॥ १२१ ॥
जुहुयादेधिते वह्नौ यावदष्टोत्तरं शतम् ।
एवं जप्तारवारेषु जुहुयात् क्षेत्रसिद्धये ॥ १२२ ॥
प्रातःकाले भृगोर्वारे मृदं साध्यमहीतलात् ।
आदाय हविरापाद्य पूर्ववत् जुहुयात् सुधीः ॥ १२३ ॥
विरोधो नश्यति क्षेत्रे सह चौराद्युपद्रवैः ।
राजवृक्षसमुत्थाभिः समिद्भिर्मनुनामुना ॥ १२४ ॥
त्रिसहस्रं प्रजुहुयात्तस्य स्युः सर्वसम्पदः ।
शालिभिर्जुहुयान्मन्त्री नित्यमष्टोत्तरं शतम् ॥ १२५ ॥
समृद्धैर्धान्यसंघातैः शोभते तस्य मन्दिरम् ।
तावदाज्येन जुहुयात् मण्डलात् सर्वमाप्नुयात् ॥ १२६॥
लाजैः कन्यामवाप्नोति मध्वक्तैर्निजवाञ्छितम् ।
मधुरत्रयसंसिक्तैर्जुहुयादुत्पलैर्नवैः ॥

महतीं श्रियमाप्नोति मण्डलात् पूर्वसंख्यया ॥ १२७ ॥
मध्ये वीजं सतारं दहनपुरयुगे चक्रवर्णान् षडस्रे-
ष्वालिख्याङ्गानि सन्धिष्वथ करणदलैरम्बुजं केशरेषु ।
अष्टार्णान् पत्रमध्ये लिखतु वसुमितान्मन्त्रवर्णांश्चतुर्थे
शिष्टं पत्रेष्वधस्तात् वसुदलकमले केशरस्थस्वराढ्ये ॥१२८॥
मन्त्रार्णान् वेदसंख्यान्दलमनुर्विलिखेदन्त्यमन्तेऽथ बाह्ये
किञ्जल्कैः कादिवर्णैर्विकसितकमले षोड़शारे यथावत्।
मन्त्रार्णान् युग्मशस्तांश्चरमदलगतं शिष्टवर्णं लिखित्वा
तारच्छाकोणवीजैस्तदनुपरिवृतं साध्यनामार्णमध्यैः ॥१२९॥
अभितः साध्यनामार्णैर्मन्त्रार्णैश्च वृतं बहिः।
भूवीजेनास्य कोणेषु भूवीजं साध्यसंयुतम् ॥ १३० ॥
अष्टमूलेषु वाराहं भूवीजसहितं लिखेत्।
सार्घीशविन्दुगगनं वीजं वाराहमीरितम् ॥ १३१ ॥
रोचनागुरुकर्पूरलाक्षाकुङ्कुमचन्दनैः।
गोमयाम्भसि संपिष्टैर्लिखेद् यन्त्रं शुभे दिने ॥ १३२ ॥
लेखन्या हेममय्या च सर्वकामप्रसिद्धये।
स्वर्णपट्टे लिखेद् यन्त्रं राज्यश्रीसमवाप्तये ॥ १३३ ॥
ग्रामसिद्धै च रजते ताम्रपट्टे धनाप्तये।
भूर्जपत्रे निजेष्टाप्त्यै क्षौमे भूसिद्धये लिखेत् ॥ १३४ ॥
जपपूजादिभिः सिद्धं यन्त्रं कुर्यान्निजेप्सितम्।
ग्रामपत्तनराष्ट्रेषु यन्त्रमेतत् सुसाधितम् ॥ १३५ ॥
निखनेच्छुभवारादौ साङ्गं दिक्षु समर्चयेत्।
क्षुद्रापमृत्युचौरादिभूतव्यालमहाभयैः ॥ १३६ ॥
न शक्यते परं द्रष्टुं तं देशं देवताबलात्।
हृदयं भगवत्यै स्यात् धरण्यै तदनन्तरम् ॥ १३७ ॥
धरस्वन्ते धरहन्त्वं द्विठान्तोऽयं धरादिकः।

एकोनविंशत्यर्णाढ्यं धरा हृदयमीरितम् ॥ १३८ ॥
वराहस्य मनुः प्रोक्तश्छन्दो त्रिष्टुदुदाहृतम्।
देवता सर्वभूतानां प्रकृतिर्वसुधा मता ॥ १३९ ॥
हृदयं त्रिभिराख्यातं चतुर्भिः शिरः ईरितम्।
त्रिभिः शिखा समुद्दिष्टा पञ्चभिः कवचं मतम् ॥ १४० ॥
द्वाभ्यां नेत्रं समाख्यातं द्वाभ्यामस्त्रं पुनर्भवेत्।
मन्त्रवर्णैः षडङ्गानि कुर्य्यादेवं विधानवित् ॥ १४१ ॥

श्यामां विचित्रां शुकरत्नभूषणां
पद्मासनां तुङ्गपयोधरानताम्।
इन्दीवरे द्वे नवशालिमञ्जरीं
शुकं दधानां वसुधां भजामहे ॥ १४२ ॥

लक्षमानं जपेन्मन्त्री धराहृदयमादरात्।
ससर्पिषा पायसेन जुहुयात्तद्दशांशतः ॥ १४३ ॥
तां विष्णोः पूजयेत् पीठे वक्ष्यमाणविधानतः।
अङ्गानि पूजयेदादौ भूवह्निजलमारुतान् ॥ १४४ ॥
दिक्पत्रेषु समभ्यर्च्य कोणपत्रेषु तत्कलाः।
आशापालाः पुनः पूज्या वज्राद्यस्त्रसमन्विताः ॥ १४५ ॥
एवं सिद्धमनुर्मन्त्री साधयेत् सुमनोरथान्।
मधुरत्रयसंसिक्तैर्जुहुयादरुणोत्पलैः ॥ १४६ ॥
सहस्रं भूसमृद्धिः स्यात्तथा नीलोत्पलैः शुभैः।
प्रियङ्गुपुष्पैर्मध्वक्तैर्धनधान्यमहीश्रियः ॥ १४७ ॥
मञ्जरीं शालिसम्भूतां मधुरत्रयलोड़िताम्।
जुहुयात् साधिते वह्नौ मण्डलात् स्याद्धरापतिः ॥ १४८ ॥
शुक्रवारे दिनमुखे गृहीत्वा साध्यभूमृदम्।
तामम्भसि विनिक्षिप्य शोधितेऽत्र चरुं पचेत् ॥ १४९ ॥
पयोघृताभ्यां सहितं जुहुयात्तं हुताशने।

षण्मासं शुक्रवारेषु हुत्वैवं प्राप्नुयाद्धराम् ॥ १५० ॥
धरामेवं जपेन्मन्त्री पशुरत्नधनादिभिः।
धराया वल्लभः स स्यादत्र कार्य्या विचारणा ॥ १५१ ॥
इति सारदातिलके पञ्चदशः पटलः।

---

## षोड़शः पटलः।

अथाभिधास्ये विधिवन्नारसिंहं महामनुम्।
उग्रं वीरं वदेत् पूर्वं महाविष्णुमनन्तरम् ॥ १ ॥
ज्वलन्तं पदमाभाष्य सर्वतोमुखमीरयेत्।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं वदेत् ततः ॥ २ ॥
नमाम्यहमयं प्रोक्तो मन्त्रराजः सुरद्रुमः।
ऋषिर्ब्रह्मा समुद्दिष्टश्छन्दोऽनुष्टुबुदाहृतम् ॥ ३ ॥
देवता नरसिंहोऽस्य सुरासुरनमस्कृतः।
चतुर्भिर्हृदयं प्रोक्तं शिरस्तावद्भिरक्षरैः ॥ ४ ॥
शिखाष्टभिः समादिष्टा षड्भिः कवचमीरितम्।
तावद्भिर्नयनं प्रोक्तं अस्त्रं स्यात् करणाक्षरैः ॥ ५ ॥
शिरोललाटनेत्रेषु मुखबाह्वङ्घ्रिसन्धिषु।
साग्रेषु कुक्षौ हृदये गले पार्श्वद्वये पुनः।
अपराङ्गे ककुदि च न्यसेद् वर्णान् यथाक्रमम् ॥ ६ ॥
माणिक्याद्रिसमप्रभं निजरुचा संत्रस्तरक्षोगणं
जानुन्यस्तकराम्बुजं त्रिनयनं रत्नोल्लसद्भूषणम्।
बाहुभ्यां धृतशङ्खचक्रमनिशं दंष्ट्रोग्रवक्त्रोल्लस-
ज्ज्वालाजिह्वमुदग्रकेशनिचयं वन्दे नृसिंहं विभुम् ॥ ७ ॥
वर्णलक्षं जपेन्मन्त्रं तत्सहस्रं घृतप्लुतैः।
पायसान्नैः प्रजुहुयाद्विधिवत् पूजितेऽनले ॥ ८ ॥

एवं कृते भवेन्मन्त्री सिद्धमन्त्रः प्रतापवान्।
पूजा प्रागीरिते पीठे मूर्त्तिं मूलेन कल्पयेत्॥ ९॥
पूजयेद्विधिवत्तस्यां दैत्यशत्रुमनन्यधीः।
अङ्गान्यादौ समाराध्य दिग्दले पूजयेदथ॥ १०॥
पक्षीन्द्रं शङ्करं शेषमब्जयोनिं यथाक्रमम्।
श्रियं ह्रियं धृतिं पुष्टिमग्न्यादिषु यजेत् पुनः॥ ११॥
लोकपालाः समभ्यर्च्यास्तदस्त्राणि ततः परम्।
इत्थं जपादिभिः सिद्धे मनौ काम्यानि साधयेत्॥ १२॥
उद्यत्कोटिरविप्रभं नरहरिं कोटीरहारोज्ज्वलं
दंष्ट्राभीममुखं लसन्नखमुखैर्दीर्घैरनेकैर्भुजैः।
निर्भिन्नासुरनाथमग्निशशिभृतं सूर्य्यात्मनेत्रत्रयं
विद्युत्पुञ्जसटाकलापभयदं वह्निं वमन्तं भजे॥ १३॥
सौम्ये सौम्यं स्मरेत् कार्य्ये क्रूरे क्रूरमिमं भजेत्।
श्रीपुष्पैर्जुहुयान्मन्त्री विल्वकाष्ठैधितेऽनले॥ १४॥
सहस्रं श्रियमाप्नोति पत्रैर्वा विल्वसम्भवैः।
प्रसूनैर्वा फलैस्तद्वत् दूर्वाहोमादरोगताम्॥ १५॥
मन्त्रजप्तां वचां श्वेतां भक्षयेत् प्रातरन्वहम्।
वाक्सिद्धिं लभते मन्त्री वाचस्पतिरिवापरः॥ १६॥
सलिले देवमभ्यर्च्य गन्धपुष्पादिभिः शुभैः।
दूर्वाभिस्तत्र जुहुयान्नित्यमष्टोत्तरं शतम्॥ १७॥
उपसर्गा विनश्यन्ति क्षुद्रभूतज्वरादिभिः।
दुःस्वप्ने निशि सञ्जाते स्नात्वा मन्त्रमनुं जपेत्॥ १८॥
अनिद्रो मन्त्रवित् पश्चात् सुस्वप्नस्तस्य जायते।
व्याघ्रचोरमृगादिभ्यो महारण्ये भयाकुले॥ १९॥
रक्षेन्मनुरयं जप्तो भयेष्वन्येषु मन्त्रिणम्।
अनेन मन्त्रितं भस्म विषग्रहमहाभयम्॥ २०॥

नाशयेदचिरादेव मन्त्रस्यास्य प्रभावतः।
घोराभिचारे सोन्मादे महोत्पाते महाभये॥ २१॥
जपेन्मन्त्रं स्मरेद् देवं दुःखान्मुक्तो भवेन्नरः।
सिंहरूपं महाभीमं नखदंष्ट्राविभीषणम्॥ २२॥
स्मृत्वात्मानं रिपुं पश्चात् ध्यायेन्मृगरिपुं पुनः।
निशितैर्नखदंष्ट्राग्रैः खण्डयमानं रिपुं स्मरन्॥ २३॥
नित्यमष्टोत्तरशतं जपेन्मन्त्रमतन्द्रितः।
जायते मण्डलादर्वाक् शत्रुर्वैवस्वतप्रियः॥ २४॥
यत्नं कुर्वीत विधिवच्छत्रुसेनानिवारणे।
विभीतकाष्ठैर्ज्वलिते पावके रिपुमर्दनम्॥ २५॥
विचिन्त्य देवं नृहरिं संपूज्य कुसुमादिभिः।
समूलचूतैर्जुहुयाच्छरैरष्टशतं पृथक्॥ २६॥
रिपुं खादन्निव जपेत् निर्भिन्दन्निव तान् क्षिपेत्।
हुत्वा सप्तदिनं मन्त्री सेनामिष्टां महीपतेः॥ २७॥
प्रस्थापयेच्छुभे लग्ने परराष्ट्रजयेच्छया।
तस्याः पुरस्तान्नृहरिं निघ्नन्तं रिपुमण्डलम्॥ २८॥
स्मृत्वा प्रयोगं कुर्वीत यावदायाति सा पुनः।
विजित्य निखिलान् शत्रून् सह वीरश्रिया सुखम्॥ २९
आगत्य विजयी राजा ग्रामक्षेत्रधनादिभिः।
प्रीणयेन्मन्त्रिणं सम्यग्विभवैः प्रीतमानसः।
मन्त्री यदि न सन्तुष्येदनर्थः स्यान्महीपतेः॥ ३०॥
बीजं साध्यसमन्वितं प्रविलिखेन्मध्येषु पत्रेष्वथो
मन्त्रार्णान् श्रुतिशो विभज्य विलिखेल्लिप्याबहिर्वेष्टयेत्
बाह्ये कोणजबीजवसुधागेहद्वयेनावृतं
यन्त्रं क्षुद्रविषग्रहामयरिपुप्रध्वंसनं श्रीपदम्॥ ३१॥
कृत्वा नवपदात्मानं मण्डलं यन्त्रसंयुतम्।

अस्मिन् संस्थापयेन्मन्त्री कलसानव शोभनान् ॥ ३२ ॥
कषायतोयसम्पूर्णान् वस्त्ररत्नादिसंयुतान्।
मध्ये संपूजयेद्देवं नृसिंहं शान्तविग्रहम् ॥ ३३ ॥
तार्क्ष्यादीन् पूजयेन्मन्त्री पूर्वादिषु यथाक्रमम्।
इति संशोधितैस्तोयैरभिषिञ्चेत् प्रियं नरम् ॥ ३४ ॥
अभिचारग्रहोन्मादा विनश्यन्त्यरिभिः सह।
अभिषिक्तस्तदा विप्रान् प्रभजेद्देवताधिया ॥ ३५ ॥
यथावत् पूजयेत् पश्चाद्भक्त्या गुरुमवञ्चयन्।
राजा विजयमाप्नोति युद्धेषु विधिनामुना ॥ ३६ ॥
वीजाढ्यं फणपञ्चजं प्रविलिखेच्छेषस्य भोगी पुन-
र्द्वात्रिंशत् पदसंयुते प्रविलिखेन्मन्त्राक्षराणि क्रमात्।
पुच्छे नामजपादिसाधितमिदं होमेन सम्पातितं
भूतापस्मृतिदुःखरोगशमनं यन्त्रं रिपुध्वंसनम् ॥ ३७ ॥
ककारो वह्निमारूढ़ो मनुस्वरसमन्वितः।
विन्दुनादलसन्मूर्द्धा वीजं नरहरेर्मतम् ॥ ३८ ॥
वीजं नमो भगवते नरसिंहाय तत्परम्।
स्याज्ज्वालामालिने पश्चात् दीप्तदंष्ट्राय तत्परम् ॥ ३९ ॥
अग्निनेत्राय सर्वादिरक्षोघ्नाय पदं वदेत्।
सर्वभूतविनाशान्ते नकारो दीर्घवान्मरुत् ॥ ४० ॥
सर्वज्वरविनाशान्ते नाग्यार्णौ दहयुग्मकम्।
पचद्वयं रक्षयुग्मं हुं फट् स्वाहा ध्रुवादिकः ॥ ४१ ॥
सप्तषष्ट्यक्षरैः प्रोक्तो ज्वालामाली महामनुः।
हृत्त्रयोदशभिः प्रोक्तं शिरो दशभिरीरितम् ॥ ४२ ॥
शिखैकादशभिः प्रोक्ता वर्माष्टादशभिर्मतम्।
वर्णैर्द्वादशभिर्नेत्रं चक्रं स्यात् करणाक्षरैः।
एवमङ्गानि विन्यस्य चिन्तयेन्मन्त्रदेवताम् ॥ ४३ ॥

उज्ज्वलप्रलयानलाभमयुग्मनेत्रमनारतं
भास्वतं शिखिनः शिखाभिरुदग्रदंष्ट्रमुखाम्बुजम् ।
रक्षसां भयदं विकीर्णसटाकलापविभीषणं
शङ्खचक्रकृपाणखेटकधारिणं नृहरिं भजे ॥ ४४ ॥
लक्षमेकं जपेन्मन्त्रं तद्दशांशं समाहितः ।
कपिलाज्येन जुहुयात् समृद्धे हव्यवाहने ॥ ४५ ॥
प्रागुक्ते पूजयेत् पीठे देवं प्रागुक्तवर्त्मना ।
कुर्वीत मन्त्रराजोक्तान् प्रयोगान्मनुनामुना ॥ ४६ ॥
विशेषात् क्षुद्रभूतादिनाशनोऽयं मनुः स्मृतः ।
पाशः शक्तिर्नरहरिरङ्कुशो वर्म फट् मनुः ॥ ४७ ॥
षडक्षरो नरहरेः कथितः सर्वकामदः ।
ऋषिर्ब्रह्मा समुद्दिष्टः पंक्तिश्छन्द उदाहृतम् ।
देवता नरसिंहस्य षड्बीजैरङ्गकल्पना ॥ ४८ ॥
कोपादालोलजिह्वं विवृतनिजमुखं सोमसूर्य्याग्निनेत्रं
पादादानाभिरक्तप्रभमुपरि सितं भिन्नदैत्येन्द्रगात्रम् ।
शङ्खं चक्रं सपाशाङ्कुशकुलिशगदादारुणान्युद्वहन्तं
भीमं तीक्ष्णाग्रदंष्ट्रं मणिमयविविधाकल्पमीडे नृसिंहम् ॥४९॥
ऋतुलक्षं जपेदेनं घृतेन जुहुयात्ततः ।
तत्सहस्रं समिद्धेऽग्नौ तोषयेद् द्रविणैर्गुरुम् ॥ ५० ॥
अर्चा शशीरिति पीठे मूर्त्तिं मूलेन कल्पयेत् ।
अङ्गावृतेर्बहिश्चक्रं शङ्खं पाशाङ्कुशौ पुनः ॥ ५१ ॥
वज्रं कौमोदकीं खड्गखेटौ पत्रेषु पूजयेत् ।
वज्रादीनि तदस्त्राणि पूजयेत् बाह्यतः सुधीः ॥ ५२ ॥
एवं कृत्वा पुरश्चर्य्यां मन्त्रेणानेन मन्त्रवित् ।
प्रयोगान् कल्पनिर्दिष्टान् कुर्य्यात् स्वस्य परस्य वा ॥५३॥
रक्तोत्पलैस्त्रिमध्वक्तैः सहस्रं जुहुयाद्रवेः ।

नित्यं मासाद्भवेदिष्टं वस्त्रकाञ्चनधान्यवान् ॥ ५४ ॥
रक्तैस्त्रिमधुरोपेतैः पद्मैर्भानुसहस्रकम् ।
जुहुयान्महतीं लक्ष्मीमायुर्वश्यमवाप्नुयात् ॥ ५५ ॥
लाजांस्त्रिमधुरोपेतान् प्रातःकालेषु जुह्वतः ।
कन्यासिद्धिर्भवेत् पश्चात् कन्यायाः सदृशो भवेत् ॥ ५६ ॥
दूर्वापयोघृताभ्यक्तां ह्यष्टोत्तरशतं सुधीः ।
अन्वहं जुहुयात् सम्यक्दीर्घमायुरवाप्नुयात् ॥ ५७ ॥
तस्य रोगाः प्रणश्यन्ति कृत्या द्रोहादिभिः सह ।
सपञ्चगव्यां जुहुयादपामार्गस्य मञ्जरीम् ॥ ५८ ॥
नित्यं सहस्रमानेन सप्ताहं विजितेन्द्रियः ।
होमोऽयं सर्वथा भूतकृत्यरोगान् प्रणाशयेत् ॥ ५९ ॥
सतिलैराज्यपामार्गहविराद्यैर्यथाक्रमम् ।
द्विसहस्रं प्रजुहुयात् क्षुद्ररोगग्रहान् जयेत् ॥ ६० ॥
पयोक्तैरमृताखण्डैस्त्रिसहस्रं चतुर्गुणम् ।
अनेन विहितो होमो ग्रहज्वरविनाशनः ॥ ६१ ॥
नृसिंहशक्तिबीजे द्वे शूले तारगते लिखेत् ।
तत्र ग्रहार्त्तं संस्थाप्य जपेन्मन्त्रं षडक्षरम् ।
आविश्य सद्यस्तं मुञ्चेत् ग्रहः क्रन्दन् भयाकुलः ॥ ६२ ॥
आलिख्याग्निपुरद्वयं तदुदरे शक्तिं ससाध्यां लिखेत्
षट्कोणेषु षडक्षराण्यथ मनोः किञ्जल्कसंस्थान् स्वरान् ।
पत्रेष्वष्टसु मन्त्रराजविहितान् वर्णान् क्रमाद्दिक्षु
कार्य्याः पुनरावृतं क्षितिपुरे कोणेषु चिन्तामणिम् ॥ ६३॥
नारसिंहमिदं यन्त्रं लिखितं भूर्जपत्रके ।
विधृतं शिरसा शीर्षे रोगभूतज्वरान् हरेत् ॥ ६४ ॥
बहुना किमिहोक्तेन मन्त्रैरेतैरुदीरितैः ।
समो नास्ति मनुः कश्चिच्छापानुग्रहकारकः ॥ ६५ ॥

तारो भृगुर्वियद्भूयस्तदाद्यं वह्निदीर्घयुक् ।
पावकः कवचास्त्रान्तो मनुः सप्ताक्षरः स्मृतः ॥ ६६ ॥
अस्त्रिरब्जो मुनिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ।
देवता मुनिभिः प्रोक्तश्चक्ररूपी हरिः स्वयम् ॥ ६७ ॥
आचक्राय हृदाख्यातं विचक्राय शिरः स्मृतम् ।
सुचक्राय शिखा प्रोक्ता धीचक्राय तनुच्छदम् ॥ ६८ ॥
सचक्राय स्मृतं नेत्रं ज्वालाचक्राय तत्परम् ।
षडङ्गमन्त्राः प्रत्येकं द्विठान्ता जातिसंयुताः ॥ ६९ ॥
ऐन्द्रीचक्रेण बध्नाति नमश्चक्राय च द्वयम् ।
मन्त्रेणानेन कुर्वीत दिशां प्रागादिबन्धनम् ॥ ७० ॥
त्रैलोक्यान्ते रक्षयुगं हुं फट् स्वाहा भुवादिकः ।
अग्निप्राकारमन्त्रोऽयं रक्षार्थं पुनरात्मनः ॥ ७१ ॥
प्राकारं तेन कुर्वीत मन्त्रेण मनुवित्तमः ।
सितरक्ताञ्जनप्रख्यं तारं मूर्ध्नि प्रविन्यसेत् ॥ ७२ ॥
अन्यानग्निनिभान् वर्णान् भ्रुवोर्मध्ये मुखे हृदि ।
गुह्यनाभिपदद्वन्द्वसन्धिषु क्रमशो न्यसेत् ॥ ७३ ॥

कल्पान्तार्कप्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं
रक्ताक्षं पिङ्गकेशं रिपुकुलभयदं भीमदंष्ट्राट्टहासम् ।
चक्रं शङ्खं गदाब्जे पृथुतरमुषलं चापपाशाङ्कुशान् स्वै-
र्बिभ्राणं दोर्भिराद्यं मनसि मुररिपुं भावयेच्चक्रसंज्ञम् ॥ ७४ ॥

अर्कलक्षं जपेन्मन्त्रं जुहुयात्तत्सहस्रकम् ।
तिलैः ससर्षपैः पद्मैर्बिल्वैर्दुग्धौदनैः क्रमात् ॥ ७५ ॥
विष्णोः संपूजयेत् पीठे मूर्तिं मूलेन कल्पयेत् ।
अङ्गानि पूर्वमभ्यर्च्य चक्राद्यस्त्राणि तद्बहिः ॥ ७६ ॥
चक्रं शङ्खं गदां पद्मं मुषलं सशरं धनुः ।
पाशाङ्कुशौ दलाग्रेषु लक्ष्म्याद्याः पूजयेत्ततः ॥ ७७ ॥

लक्ष्मीं सरस्वतीं पश्चात् रतिं प्रीतिं ततः परम्।
कीर्त्तिं कान्तिं तुष्टिपुष्टी सर्वा एताः स्मृता स्त्रियः॥ ७८॥
पीतरक्तसितश्यामा इन्द्राद्यस्त्राणि तद्बहिः।
इति सिद्धे मनौ मन्त्री प्रयोगान् कर्त्तुमर्हति॥ ७९॥
आत्मनो वा परस्यार्थान् दृष्टादृष्टफलप्रदान्।
दूर्व्वाहोमो विधातव्यो दीर्घमायुरभीप्सता॥ ८०॥
श्रीकामो जुहुयात् पद्मैः फुल्लैराज्यपरिप्लुतैः।
मेधाकामेन होतव्यं प्रसूनैर्ब्रह्मवृक्षजैः॥ ८१॥
दिनत्रयं यो जुहोति तिलकैः पुरुनिर्मितैः।
अष्टोत्तरसहस्रेण स जयेन्निखिलापदः ८२॥
गव्येनाज्येन गोसिद्धैर जुहुयाद्दिवसत्रयम्।
उडुम्बरसमिद्धोमः पुत्रदायी भवेन्नृणाम्॥ ८३॥
प्रलयाग्निसमं चक्रं यस्य मूर्द्धनि चिन्तयेत्।
मासाद्दाहज्वरमूर्च्छार्त्तो मण्डलान्मृतिमेति सः॥ ८४॥
अकारादिस्वरावीतं याहि याहि पदावृतम्।
मकारं चिन्तयेच्छत्रोर्मूर्द्ध्नोच्चाटनमावहेत्॥ ८५॥
अनेन विधिना शत्रुर्मण्डलान्मृत्युभाग् भवेत्।
शरच्चन्द्रनिभं साध्यं सुधाधाराभिवर्षिणम्॥ ८६॥
अरेर्मूर्द्धनि यस्यासौ स जीवेद्विगतामयः।
आत्मानं चक्रनाभिस्थं ध्यात्वा मन्त्रमसुं जपन्॥ ८७॥
एकोऽपि रणभूमिस्थो जयेत् प्रत्यर्थिनो बहून्।
अपामार्गस्य समिधो जुहुयादयुतावधि॥ ८८॥
ज्वरभूतपिशाचारिपीड़ा तस्य न जायते।
निर्गुण्डीसर्जकनकश्वेतकिंशुकसम्भवैः॥ ८९॥
समिद्वरैः कृतो होमः क्षुद्ररोगग्रहापहः।
अपामार्गस्य समिधः सर्पिर्मध्ये स्तृतस्वरः॥ ९०॥

साज्यमेतानि जुहुयादष्टोत्तरशतं पृथक्।
साधकाय पुनर्दद्याच्चरुसम्पातसाधितम्॥ ९१॥
अभिचारकृता द्रोहास्तस्य नश्यन्ति सर्वथा।
अपामार्गस्य समिधः पञ्चगव्यपरिप्लुताः॥ ९२॥
जुहुयादयुतं मन्त्री निशासु बलिमाहरेत्।
दध्योदनेन मधुना क्षुद्ररोगादिशान्तये॥ ९३॥
क्षीरवृक्षसमित्क्षीरैर्हविराज्यैः पृथक् पृथक्।
चतुःसहस्रं होतव्यं शान्तिः स्यात् सर्वतोमुखी॥ ९४॥
दक्षिणोत्तरगं मन्त्री चक्रयुग्मं समालिखेत्।
वेदादीन् विलिखेन्मध्ये मन्त्रवर्णान् षडस्रिषु॥ ९५॥
मध्यं पीतं कोणषट्कं रक्तं श्याममनन्तरम्।
नेमिं श्वेतां लसद्वह्निशिखाभिरुपशोभिताम्॥ ९६॥
पार्थिवं मण्डलं बाह्ये कुर्यादेवं यथाविधि।
रक्ततोयेन सम्पूर्णं कुम्भं सौम्ये प्रविन्यसेत्॥ ९७॥
आवाह्य पूजयेत् तस्मिंश्चक्रात्मानं जनार्दनम्।
दक्षिणे मण्डले कुर्याद्धोमकर्म विधानवित्॥ ९८॥
क्रमात् सर्पिरपामार्गैस्तण्डुलैः सर्षपैस्तिलैः।
पायसैर्गव्यसर्पिर्भ्यां षड्विंशत्यधिकं शतम्॥ ९९॥
जुहुयादेधिते वह्नौ प्रतिद्रव्यं विधानवित्।
सम्पातयेत् कुम्भतोये पूजिते सौम्यमण्डले॥ १००॥
शस्यार्द्धं चरुणा पिण्डं कृत्वा तस्मिन् विनिक्षिपेत्।
बाह्ये बलिप्रदानार्थं तदर्द्धमवशेषयेत्॥ १०१॥
स्नातं विशुद्धवस्त्राढ्यं साध्यमानीय तं पुनः।
दक्षिणे स्थापयेन्मन्त्री कुम्भाग्निभ्यामनन्तरम्॥ १०२॥
नीराज्य तौ नयेद् बाह्ये शामादष्टमराशिके।
स्थापयेत्तौ यथापूर्वं सपरिस्तरणे क्रमात्॥ १०३॥

हुत्वा वह्नौ यथापूर्वं शिष्टान्नेन बलिं हरेत् ।
मनुना वक्ष्यमाणेन दशदिक्षु यथाविधि ॥ १०४ ॥
महद्विष्णुगणेभ्योऽन्ते सर्वशान्तिकरे पुनः ।
द्वौ बलौ प्रतिगृह्णन्तु शान्तये हृदयं ततः ॥ १०५ ॥
ब्राह्मणान् भोजयेत् सम्यङ्मधुरोत्तरमादरात् ।
गुरवे दक्षिणां दद्याद्वस्त्रभूषणसंयुताम् ॥ १०६ ॥
इन्त्यादयं विधिः पुंसां कृत्यारोगज्वरग्रहान् ।
रक्षःपिशाचमायादिक्लेशान् शीघ्रं न संशयः ॥ १०७ ॥
विधाय पञ्जरं मन्त्री फलकैः क्षीरशाखिनाम् ।
पञ्चगव्येन संपूज्य तस्मिन् साध्यं निवेशयेत् ॥ १०८ ॥
धौतवस्त्रं विशुद्धाङ्गं स्पृष्ट्वा सम्यक् जपेन्मनुम् ।
पूर्वादिदिक्षु संस्थाप्य वह्निं ब्राह्मणसत्तमैः ॥ १०९ ॥
कारयेत् पूर्वसन्दिष्टैर्द्रव्यैर्होमं विधानवित् ।
तोषयेद्दक्षिणाभिस्तान् यजमानः स्वशक्तितः ॥ ११० ॥
गुरुञ्च धनधान्याद्यैर्नत्वा संप्रीणयेत्तदा ।
सर्वरोगप्रशमनः कृत्याद्रोहादिनाशनः ॥ १११ ॥
अपमृत्युहरः पुंसां विधिरेष प्रकीर्त्तितः ।
पञ्चगव्यैः कषायैर्वा क्षीरभूरुहसम्भवैः ॥ ११२ ॥
पूरितैः सकलैर्जलैः कृतसम्पातसंयुतैः ।
अभिषिञ्चेद् ग्रहाविष्टमभिचारातुरं नरम् ॥ ११३ ॥
स्वस्थो भवति शीघ्रं हि विधानेनामुना नरः ।
भानुवारेऽभिषेकस्य विधानेन सुसाधितैः ॥ ११४ ॥
सलिलैः स्नापयेन्नारीं सुखप्रसवकाङ्क्षिणीम् ।
सप्तवाराभिषेकेण सर्वे नश्यन्त्युपद्रवाः ॥ ११५ ॥
पञ्चगव्ये सृतं सर्पिर्मन्त्रितं मनुनामुना ।
गर्भिणीनां ग्रहार्त्तानां सेवितं तत् शुभावहम् ॥ ११६ ॥

उच्चस्थानगते शुक्रे मनुना साधुसाधिता।
त्रिलोहीमुद्रिका हन्यात् चुद्रभूतग्रहज्वरान् ॥ ११७ ॥
तद्वर्णसंख्यया सूत्रे ग्रन्थीन् क्वत्वा जपादिभिः।
साधितं कल्पयेद्दस्ते कण्ठे वा दुःखशान्तये ॥ ११८ ॥
पञ्चगव्यं जपेत् स्पृष्ट्वा मन्त्रं दशशतावधि।
न्यस्य तत् पद्मपत्रादौ पत्रे वा ब्रह्मवृक्षजे ॥ ११९ ॥
फले विल्वस्य वा मन्त्री गृहे स्वस्य परस्य वा।
निखनेत् सर्वरक्षा स्यादहर्न्तं सर्वसम्पदः ॥ १२० ॥
पलाशक्षीरिवृक्षाणां त्वचा मलयजं परम्।
कुङ्कुमं यामिनीकोष्ठविल्वापामार्गसर्षपान् ॥ १२१ ॥
तिलदूर्वायवान् देवीं तुलसीयुगलं कुशम्।
लक्ष्मीं गोरोचनां पद्मं वचां गोमयसंयुताम् ॥ १२२ ॥
विष्णुक्रान्तामर्कयुतां जपन्मन्त्री विनिक्षिपेत्।
पञ्चगव्येन संपूर्णे पात्रे तत्संस्कृतेऽनले ॥ १२३ ॥
संस्थाप्य क्वाथयेत् सम्यगारोग्याय भविष्यति।
तदादाय जपेद् भूयो ह्ययुतं देवताधिया ॥ १२४ ॥
लिम्पेत् सर्वाङ्गमेतेन किञ्चिच्छिरसि निःक्षिपेत्।
कृत्याद्रोहग्रहोन्मादव्याधिदुःस्वप्ननिवारणम् ॥ १२५ ॥
सर्वशत्रुप्रशमनं सर्वपापहरं परम्।
शुभदं वश्यदं पुंसां समस्तापन्निवारणम् ॥ १२६ ॥
गर्भिणीबालकगणानां विशेषेण प्रशस्यते।
अस्मात् परतरा रक्षा नास्ति लोके च कीर्त्तिता ॥ १२७ ॥
मुस्ता शुण्ठी निशा वह्निरेला यष्टिर्वचा वृषा।
पाठा विडङ्गमञ्जिष्ठा द्राक्षा दार्वी सरोहिणी १२८ ॥
फलत्रयश्च तैः कल्कैः पञ्चगव्येषु सर्पिषाम्।
प्रस्थं पचेद् यथान्यायं मन्त्रेणानेन साधितम् ॥ १२९ ॥

शान्तिदं सुतदं स्त्रीणां भूतप्रेतामयापहम् ।
गर्भरक्षाकरं शुभ्रं पञ्चगव्यहुतं विदुः ॥ १३० ॥
टान्तान् सप्त लिखेन्मध्ये षट्सु कोणेषु तेष्वथ ।
मन्त्रवर्णान् लिखेदेतच्चक्रमापन्निवारणम् ॥ १३१ ॥
षट्कोणमध्ये विलिखेत् ससाध्यं तारं षडस्रेष्ववशिष्टवर्णान् ।
अङ्गानि तत्सन्धिषु यन्त्रमेतत् करोति रक्षां विधिवत् प्रजप्तम्
॥ १३२॥
तारं लिखेत् टान्तगतं ससाध्यं कोणेषु शिष्टं मनुवर्णषट्कम् ।
अङ्गानि सन्धिष्वथ षोड़शारं सषोड़शार्णं वसुधापुरस्थम् ॥१३३॥
जपित्वा कृतसम्पातं गर्भिणीनां हितं परम् ।
अभिचारग्रहोन्मादान् यन्त्रमेतद्विनाशयेत् ॥ १३४ ॥
मध्ये तारं ससाध्यं मनुमथ विलिखेत् षट्सु कोणेषु सन्धि-
ष्वङ्गान्यन्ते कलानां युगयुगविलसत्केशराष्टार्णपत्रम् ।
किञ्जल्कान् कादिवर्णैर्द्विवसुदललसत्षोड़शार्णं स्वनाम्ना
हक्षाभ्यां त्रिःपरीतं लिखतु परिवृतं तत्रिपाशाङ्कुशाभ्याम्
॥ १३५ ॥
तारं नमो भगवते महासुदर्शनाय च ।
वर्मास्त्रान्तश्चक्रमन्त्रः षोड़शाक्षर ईरितः । १३६ ॥
चक्रमन्त्रमिदं प्रोक्तं सर्वभीतिनिवारणम् ।
क्षुद्रापमृत्युशमनं राज्ञां विजयवर्द्धनम् ॥ १३७ ॥
रेखा विलिख्याष्टशिरांसि तासामावध्य बाह्ये श्रुतिशः क्रमेण ।
स्थाने हृषीकेशमनुं विभज्य पादान्लिखेत् कोष्ठचतुष्टयस्थान्
॥ १३८ ॥
अष्टाक्षरार्णैः परिदर्भितांस्तान् कोष्ठद्वये चक्रमनुं यथावत् ।
मध्यस्थकोष्ठे विलिखेत् ससाध्यं स्यात् सप्तकोष्ठाह्वययन्त्रमेतत्
॥ १३९ ॥

स्थाने हृषीकेश ! तव प्रकृत्या जगत् प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशोद्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः १४०
धारितं सप्तकोष्ठं तत्त्रायते महतो भयात् ।
दुःस्वप्नदुर्निमित्तादिशमनं कीर्त्तितं बुधैः ॥ १४१ ॥
इति श्रीसारदातिलके षोड़शः पटलः ॥

---

## सप्तदशः पटलः ।

अथ वक्ष्ये जगन्मूलं मन्त्रं श्रीपुरुषोत्तमम् ।
गोपितं वैष्णवे तन्त्रे भुक्तिमुक्तिफलप्रदम् ॥ १ ॥
तारमाररमाबीजं नत्यन्तं पुरुषोत्तमम् ।
पुनरप्रतिरूपान्ते ततो लक्ष्मीग्रहाय च ॥ २ ॥
सकलान्ते जगत्पूर्वं क्षोभणेति पदं पुनः ।
सर्वस्त्रीहृदयोपेतंविदारणपदं पुनः ॥ ३ ॥
ततः परं त्रिभुवनमदोन्मादकरं ततः ।
मनांसि तापय द्वन्द्वं दीपय द्वितयं पुनः ॥ ४ ॥
शोषय द्वितयं भूयो मारय द्वितयं पुनः ।
स्तम्भय द्वितयं पश्चात् मोहय द्वितयं परम् ॥ ५ ॥
भावय द्वितयं पश्चात् मोहय द्वितयं परम् ।
द्रावय द्वितयं पश्चादाकर्षय युगन्ततः ॥ ६ ॥
समस्तपरमोपेतसुभगेनच संयुतम् ।
सर्वसौभाग्यशब्दान्ते करेति पदसंयुते ॥ ७ ॥
सर्वकामप्रदपदममुकं हन युग्मकम् ।
चक्रेण गदया पश्चात् खड्गेन तदनन्तरम् ॥ ८ ॥
सर्वबाणैर्भिन्दि युगं पाशेनेति पदं ततः ।
कटद्वयान्तेऽङ्कुशेन ताड़य द्वितयं पुनः ॥ ९ ॥

गुरुशब्दद्वयमथो किं तिष्ठसि पदं पुनः ।
तावद्यावत्पदस्यान्ते समोहितमनन्तरम् ॥ १० ॥
ततो मे सिद्धमाभाष्य भवत्वन्ते सवर्मफट् ।
नमोऽन्तोऽयं मनुः प्रोक्तो द्विशताचरसंयुतः ॥ ११ ॥
जैमिनिर्मुनिराख्यातश्छन्दोऽस्यामितमीरितम् ।
समस्तजगतामादिर्देवता पुरुषोत्तमः ॥ १२ ॥
पुरुषोत्तमशब्दान्ते वदेत् त्रिभुवनं पुनः ।
मदोन्मादकरान्ते हुं हृदयं सकलं ततः ॥ १३ ॥
जगत्क्षोभणशब्दान्ते लक्ष्मीदयितहुँ शिरः ।
मन्मथोत्तमसंयुक्तमङ्गजे कामदायिनि ॥ १४ ॥
हुं शिखापरमोपेतसुभगाक्षरसंयुतम् ।
सर्वसौभाग्यकरहुँ कवचं परिकीर्त्तितम् ॥ १५ ॥
उक्त्वा सुरासुरोपेतमनुजान्वितसुन्दरीम् ।
ततः परस्तात् हृदयविदारणपदं वदेत् ॥ १६ ॥
सर्वप्रहरणधर सर्वकामिक तत्परम् ।
हन द्वयञ्च हृदयबन्धनानि ततः परम् ॥ १७ ॥
आकर्षय पदद्वन्द्वमहाबलहुमन्त्रकम् ।
त्रिभुवनेश्वरपदं ततः सर्वजनं ततः ॥ १८ ॥
मनांसि हन युग्मान्ते दारय द्वितयञ्च मे ।
वशमानय हुं नेत्रं ताराद्याः फट् नमोऽन्तिकाः ॥ १९ ॥
षड़ङ्गमन्त्राः सन्दिष्टा नेत्रान्तास्तत्त्ववेदिभिः ।
त्रैलोक्यमोहनार्णान्ते हृषीकेशपदं पुनः ॥ २० ॥
पश्चादप्रतिरूपादि मन्मथानन्तरं वदेत् ।
सर्वादि स्त्रीपदं पश्चात् हृदयाकर्षणं ततः ॥ २१ ॥
आगच्छागच्छ मन्त्रोऽयं ताराद्यो मनसान्वितः ।
अनेन मनुना कृत्वा व्यापकं न्यस्य बाहुषु ॥ २२ ॥

अष्टायुधानि मुद्राभिर्मन्त्रैः सार्धं विचिन्तयेत् ।
क्षीराम्भोनिधिमध्यस्थं निरन्तरसुरद्रुमम् ॥ २३ ॥
उद्यदर्केन्दुकिरणं दूरीकृततमोभरम् ।
कालमेघसमालोकं नृत्यद्बर्हिकदम्बकम् ॥ २४ ॥
उत्फुल्लकुसुमामोदप्रहृष्यद्भृङ्गसंकुलम् ।
कूजत्कोकिलसङ्घेन वाचालितदिगन्तरम् ॥ २५ ॥
नानाकुसुमसौरभ्यवाहिगन्धवहान्वितम् ।
कल्पवल्लीनिकुञ्जेषु क्रीडत्सिद्धकदम्बकम् ॥ २६ ॥
देवगन्धर्वनारीभिर्गायन्तीभिरलङ्कृतम् ।
अनेकदीर्घिकायुक्तमुद्यानं महदद्भुतम् ॥ २७ ॥
तस्य मध्ये मणिमये मण्डपे तोरणाञ्चिते ।
ऋतुभिः षड्भिरनिशं सेवितस्य महीयसः ॥ २८ ॥
सुरद्रुमस्य मूलस्थे महासिंहासने शुभे ।
रक्तारविन्दमध्यस्थगरुडस्योपरि स्थितम् ।
ध्यायेत् वल्लभया सार्द्धं जगन्नाथं जगन्मयम् ॥ २९ ॥
देवं श्रीपुरुषोत्तमं कमलया स्वाङ्कस्थया पङ्कजं
बिभ्रत्या परिबद्धमम्बुजरुचा तस्यां निबद्धेक्षणम् ।
ध्यायेच्चेतसि शङ्खपाशमुषलांश्चापासिखड्गं गदां
हस्तैरङ्कुशमुद्वहन्तमरुणं स्मेरारविन्दाननम् ॥ ३० ॥
एवं ध्यात्वा श्रियः कान्तं मनुं लक्षचतुष्टयम् ।
जपेद्वह्नौ विधायाथ कुन्दमध्येन्दुसन्निभम् ॥ ३१ ॥
जुहुयाद्वैष्णवे वह्नौ पद्मैर्जातिसमुद्भवैः ।
पुष्पैर्यवैः क्रमात् पश्चाद् ब्राह्मणानपि भोजयेत् ॥ ३२ ॥
अर्चयिष्यन् जगन्नाथं गायत्र्या परिशोधयेत् ।
आत्मानं यागवस्तूनि यागभूमिञ्च देशिकः ॥ ३३ ॥
त्रैलोक्यमोहनायेति विद्महे पदमीरयेत् ।

धराय धीमहि पश्चात्तन्नो विष्णुः प्रचोदयात् ॥ ३४ ॥
गायत्र्येषा समाख्याता वैष्णवी सर्वसिद्धिदा ।
प्राक्प्रोक्ते वैष्णवे पीठे कल्पयेदासनं ततः ॥ ३५ ॥
पक्षिराजाय ठद्वन्द्वमस्य मन्त्रः प्रकीर्त्तितः ।
सङ्कल्पितायां मूलेन मूर्त्तौ देवमनन्यधीः ॥ ३६ ॥
आवाह्य मनुना विद्वान् व्यापकेन समर्चयेत् ।
भृगुर्लान्तयुतः सेन्दुर्वीजं देव्याः प्रकीर्त्तितम् ॥ ३७ ॥
कर्णिकायां यजेदादौ विधानेनाङ्गदेवताः ।
दलेषु पूजयेत् पश्चाल्लक्ष्म्याद्या धृतचामराः ॥ ३८ ॥
मुक्ताहारलसच्चारुपयोधरभरानताः ।
जवाकुसुमसङ्काशा मदविभ्रममन्थराः ॥ ३९ ॥
ह्रस्वत्रयक्लीवसर्गरहितस्वरशोभितम् ।
देव्या वीजं क्रमादासां मन्त्रमाहुर्मनीषिणः ॥ ४० ॥
दलाग्रेषु यजेत् शङ्खं शार्ङ्गं चक्रमसिं गदाम् ।
अङ्कुशं मुषलं पाशमेतान्यस्त्राणि शार्ङ्गिणः ॥ ४१ ॥
स्वमुद्राभिः स्वमनुभिः कथ्यन्ते मनवः क्रमात् ।
आद्यो जलचरायान्ते ठद्वयं मनुरीरितः ॥ ४२ ॥
शार्ङ्गाय सशरायन्ते स्वाहान्तोऽनन्तरो मनुः ।
सुदर्शनमहाचक्रराजान्ते स्यात् हनद्वयम् ॥ ४३ ॥
सर्वदुष्टभयं पश्चात् कुरु छिन्धि युगं पृथक् ।
विदारय पदद्वन्द्वं परमन्त्रान् ग्रस ग्रस ॥ ४४ ॥
भक्षय त्रासय द्वन्द्वं प्रत्येकं वर्मफट्द्वयम् ।
चक्राय नम इत्येष तृतीयो मन्त्र ईरितः ॥ ४५ ॥
खड्गतीक्ष्णपदान्ते स्यात् छिन्धि खड्गयुगं पृथक् ।
चतुर्थोऽयं मनुः प्रोक्तः कौमोदकी महाबले ॥ ४६ ॥
सर्वस्वरान्तकिपदं प्रसीद युगवर्मफट् ।

स्वाहान्तोऽयं मनुः प्रोक्तः षड्भिः कौमोदकीप्रियः ॥४७॥
अङ्कुशान्ते कटयुगं षष्ठोऽयं मनुरीरितः ।
संवर्त्तकान्ते मुषलं प्रोच्य द्वितयं पुनः ॥ ४८ ॥
हुँ फट् द्विठान्तो मन्त्रोऽयं सप्तमः परिकीर्त्तितः ।
पाशबन्धद्वयं पश्चादाकर्षय पदद्वयम् ॥ ४९ ॥
वह्निजायावधिः सद्भिरष्टमो मन्त्र ईरितः ।
लोकेशान् पूजयेत् पश्चाद्वज्राद्यैरायुधैः सह ॥ ५० ॥
इत्थं समर्चयेन्नित्यं यथावत् पुरुषोत्तमम् ।
आप्नोति महतीं लक्ष्मीं सौभाग्यमतुलं यशः ॥ ५१ ॥
आयुरारोग्यमैश्वर्य्यमनोऽभीष्टानि विन्दति ।
हयारिकुसुमैर्देवमर्चयित्वा यथाविधि ॥ ५२ ॥
शशिप्रसूनैर्जुहुयादष्टोत्तरसहस्रकम् ।
मासमात्रेण वशगास्तस्य स्युः सकला नृपाः ॥ ५३ ॥
हुत्वा विल्वफलैः पक्वैः श्रियं विन्देदनिन्दिताम् ।
प्रफुल्लैररुणाम्भोजैस्तामेव लभते पुनः ॥ ५४ ॥
हुत्वा ज्योतिष्मतीतैलं सहस्रं वसुसंख्यकम् ।
सुभगो जायते सम्यक् सर्वेषां नात्र संशयः ॥ ५५ ॥
विधानेनामुना मन्त्री महारोगात् प्रमुच्यते ।
अश्वत्थसमिधो होमः पराहृतधनावहः ॥ ५६ ॥
आज्याक्तदूर्वाहोमेन मुच्यते महतो भयात् ।
यस्य नामयुतं मन्त्रं जपेदयुतसंख्यया ॥ ५७ ॥
स भवेद्दासवत्तस्य नात्र कार्य्या विचारणा ।
बहुना किमिहोक्तेन मनुना साधकोत्तमः ॥ ५८ ॥
साधयेदखिलान् कामान् साक्षाद्विष्णुरिवापरः ।
उत्तिष्ठ वर्णमाभाष्य श्रीकरोधीशहुताशनैः ॥ ५९ ॥
वह्निजायावधिर्मन्त्रो वस्वक्षरसमन्वितः ।

ऋषिरस्य भवेद्रामपङ्क्तिश्छन्द उदाहृतम् ॥ ६० ॥
श्रीकाराख्यो हरिः प्रोक्तो देवतास्य मनीषिभिः।
हृदयं भीषय द्वन्द्वं त्रासय द्वितयं शिरः॥ ६१ ॥
शिखां प्रमर्दय युगं वर्म प्रध्वंसय द्वयम्।
अस्त्रं रक्ष युगं सर्वे हुमन्ताः समुदीरिताः ॥ ६२ ॥
मूर्ध्नि नेत्रद्वये कण्ठे हृदयोदरयोः पुनः।
ऊरुजङ्घापदद्वन्द्वे मन्त्रवर्णान् प्रविन्यसेत् ॥ ६३ ॥
मुखे न्यसेद् ब्राह्मणोऽस्य मुखमासीदयं मनुः।
बाहू राजन्यः कृतोऽयं न्यस्तव्यो बाहुयुग्मके ॥ ६४ ॥
ऊरू तदस्य यद्वैश्य इदमूरुद्वये न्यसेत्।
पादद्वये न्यसेन्मन्त्रं पद्भ्यां शूद्रोऽजायत ॥ ६५ ॥
चक्रं शङ्खं गदां पद्मं हस्ताग्रेष्वथ विन्यसेत्।
इत्थं न्यासं तनौ कृत्वा देवं पूर्वोक्तमण्डपे।
रक्तपद्मासनस्थस्य गरुड़स्योपरि स्थितम् ॥ ६६ ॥
काञ्चनाद्रिसमप्रभं कमलाननं कमलेक्षणं
चक्रशङ्खगदासरोजधरं मनोहरदर्शनम्।
कौस्तुभाङ्कितवक्षसं मुकुटाङ्गदादिविभूषणं
तार्क्ष्यवाहनमच्युतं हृदि भावयामि जगत्पतिम् ॥ ६७ ॥
अष्टलक्षं जपेन्मन्त्री मन्त्रमेनं दशांशतः।
बिल्वक्षीरद्रुमोत्थाभिः समिद्भिररुणाम्बुजैः ॥ ६८ ॥
पयोऽन्नैः सर्पिषा हुत्वा गुरुं सन्तोषयेद्धनैः।
मूर्त्तौ मूलेन क्लृप्तायां पूजयेद्देवमव्ययम् ॥ ६९ ॥
अङ्गान्यादौ समाराध्य दिक्पत्रेषु समर्चयेत्।
श्रियं रतिं धृतिं कान्तिं लीलापङ्कजधारिणीम् ॥ ७० ॥
पीतारुणश्याम‌नीलविदिक्पत्रेषु पूजयेत्।
वासुदेवादिका मूर्त्तीः पार्श्वयोर्निधियुग्मकम् ॥ ७१ ॥

विष्वक्सेनं यजेदीशे लोकपालाननन्तरम् ।
एवं संपूजयेद्देवं साधयेदिष्टमात्मनः ॥ ७२ ॥
दूर्वाचरुभ्यां साज्याभ्यां जुहुयादयुतं बुधः ।
सम्पातितं चरुं पश्चात् साज्यं भुञ्जीत साधितम् ॥ ७३
ब्राह्मणान् भोजयेत् सम्यक् मधुरैर्हीमवासरे ।
तोषयेद् गुरुमर्थेन वस्त्रैर्धान्यैर्विभूषणैः ॥ ७४ ॥
जित्वापमृत्युरोगादीन् दीर्घमायुः स विन्दति ।
आज्यसिक्तैः सरसिजैर्जुहुयादयुतत्रयम् ॥ ७५ ॥
निवसेत् कमला तस्मिन् न त्यजेत्तत्सुतानपि ।
विल्ववृक्षसमिद्धोमात् साक्षाद्धनपतिर्भवेत् ॥ ७५ ॥
पूगपुष्पसमायुक्तैस्तण्डुलैर्मधुरोक्षितैः ।
जुहुयादचिरादेव सम्पदां जायते निधिः ॥ ७६ ॥
आज्येन लक्षं जुहुयात् परान् जयति पार्थिवः ।
अक्षसूत्रं भुजे बद्धं मनुनानेन साधितम् ॥ ७७ ॥
रोगापमृत्युदुःखानि नाशयेन्नात्र संशयः ।
जलाञ्जलिभिरात्मानमभिषिञ्चेद् दिने दिने ॥ ७८ ॥
स्नानकालेषु स भवेत् सौभाग्यश्रीसमृद्धिमान् ।
ऊर्द्ध्वबाहुद्वयो मन्त्री पश्यन्नादित्यमण्डलम् ॥ ७९ ॥
सहस्रमानं प्रजपेन्नित्यं निश्चितधीर्मनुम् ।
सर्वे मनोरथास्तस्य सिध्येयुर्नात्र संशयः ॥ ८० ॥
कृष्टाय पदमाभाष्य गोविन्दाय ततः परम् ।
गोपीजनपदस्यान्ते वल्लभाय द्विठावधिः ॥ ८१ ॥
कामबीजादिराख्यातो मनुरष्टादशाक्षरः ।
नारदोऽस्य मुनिः प्रोक्तो गायत्रं छन्द उच्यते ॥ ८२ ॥
देवताकथितः कृष्णः सर्वकामफलप्रदः ।
चतुष्करणवेदाश्विनेत्रसंख्याक्षरैः क्रमात् ॥ ८३ ॥

पञ्चाङ्गानि मनोः कुर्य्यान्मन्त्रविज्ञातिसंयुतैः ।
स्मरेद्वृन्दावने रम्ये मोहयन्तमनारतम् ॥ ८४ ॥
गोविन्दं पुण्डरीकाक्षं गोपकन्याः सहस्रशः ।
आत्मनो वदनाम्भोजे प्रेरिताक्षिमधुव्रताः ॥ ८५ ॥
पीडिताः कामबाणेन चिरमाश्लेषणोत्सुकाः ।
मुक्ताहारलसत्पीनतुङ्गस्तनभरानताः ॥ ८६ ॥
स्रस्तधम्मिल्लवसना मदस्खलितभाषणाः ।
दन्तपङ्क्तिप्रभोद्भासिस्पन्दमानाधराञ्चिताः ।
विलोभयन्तीर्विविधैर्विभ्रमैर्भावगर्वितैः ॥ ८७ ॥
फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् ।
गोपीनां नयनोत्पलार्चिततनुं गोगोपसङ्घावृतं
गोविन्दं कलवेणुवादनपरं दिव्याङ्गभूषं भजे ॥ ८८ ॥
मन्त्रमेनं यथान्यायमयुतद्वितयं जपेत् ।
जुहुयादरुणाम्भोजैस्तद्दशांशं समाहितः ॥ ८९ ॥
वैष्णवे पूजयेत् पीठे यथावद् देवकीसुतम् ।
अङ्गावरणमावाह्य पत्रेषु पूजयेत् प्रियाः ॥ ९० ॥
कालिन्दी नाग्नजित्याख्या मित्रविन्दा ततः परम् ।
चारुहासिन्यथ परा रोहिणी जाम्बवत्यथ ॥ ९१ ॥
रुक्मिणी सत्यभामेति कथिताश्चारुभूषणाः ।
पीताम्बरधराः सौम्याः कराम्बुजधृताम्बुजाः ॥ ९२ ॥
ऐरावतादीनभ्यर्चेद् गजानष्टौ ततो बहिः ।
लोकपालान् यजेन्मन्त्री वज्राद्यस्त्राणि तद्बहिः ॥ ९३ ॥
इति संपूजयेद् देवं गोविन्दं जगतां पतिम् ।
कुर्वीत कल्पनिर्दिष्टान् प्रयोगान्निजवाञ्छितान् ॥ ९४ ॥
लक्ष्मीप्रसूनैर्जुहुयात् श्रियमेतामनिन्दिताम् ।

माज्येनाम्नेन जुहुयादाज्यानस्य समृद्धये ॥ ८५ ॥
आरक्तैः कुसुमैर्विप्रान् जातिभिः पृथिवीपतीन्।
प्रसूनैरसितैर्वैश्यान् शूद्रान्नीलोत्पलैर्नवैः ॥ ८६ ॥
वशयेल्लवणैः सर्वान् पङ्कजैर्वनिताजनम्।
गोशालासु कृतो होमः पायसेन ससर्पिषा ॥ ८७ ॥
गवां शान्तिं करोत्याशु गोवृन्दा गोकुलप्रियः।
शिशुवेशधरं दिव्यकिङ्किणीदामशोभितम् ॥ ८८ ॥
स्मृत्वा प्रतर्पयेन्मन्त्री दुग्धबुद्धा शुभैर्जलैः।
धनधान्यांशुकादीनि प्रीतस्तस्मै ददाति सः ॥ ८९ ॥
पिण्डं मूलेन वीतं दहनपुरयुगे कोणराजद्दशार्णं
कुर्यात् पद्मं दशार्णं स्फुरितदशदलं कामबीजेन वीतम्।
पद्मं किञ्जल्कसंस्थं स्वरविलसदलं प्रोल्लसत्षोडशार्णं
किञ्जल्कं व्यञ्जनाढ्यं विलसयुगदलेष्वर्पितानुष्टुबर्णम् ॥१००॥
पाशाङ्कुशाभ्यामावीतं चौर्ण्यपुरयुगास्रिषु।
अष्टाक्षरेण लसितं यन्त्रं गोविन्ददेवतम् ॥ १०१ ॥
धर्मार्थकामफलदं सर्वरक्षाकरं स्मृतम्।
पञ्चान्तको धरासंस्थो मनुर्विन्दुविभूषितः ॥ १०२ ॥
पिण्डबीजमिदं प्रोक्तं सर्वसिद्धिकरं परम्।
स्मर कृष्णाय ठद्वन्द्वं षड़र्णो मनुरीरितः ॥ १०३ ॥
गोपीजनान्ते प्रवदेद्वल्लभायाग्निसुन्दरीम्।
अयं दशाक्षरो मन्त्रो दृष्टादृष्टफलप्रदः ॥ १०४ ॥
प्रणवं हृदयं कृष्णं ङेऽन्तमुक्त्वा ततः परम्।
तादृशं देवकीपुत्रं हुँ फट् स्वाहासमन्वितम् ॥ १०५ ॥
षोड़शाक्षरमन्त्रोऽयं गोविन्दस्य समीरितः।
पिण्डं रतिपतेर्बीजं नमो भगवते ततः ॥ १०६ ॥
नन्दपुत्राय बालादिवपुषे श्यामलाय च।

गोपीजनपदस्यान्ते वल्लभाय द्विठावधिः ॥ १०७ ॥
अनुष्टुप्मन्त्र आख्यातो गोपालस्य जगत्पतेः ।
अनङ्गः कृष्णगोविन्दौ ङेऽन्तावष्टाक्षरो मनुः ॥ १०८ ॥
प्राक्प्रत्यग्दक्षिणोदग्विधिवदभिलिखेत् सप्तरेखाचतुष्कं
कोणोद्यच्छूलमुक्तं वलययुगयुतं मध्यपूर्वं तदन्तम् ।
कोकस्थानान् परस्ताद्वसुपदविवरेष्वष्टवर्णं लिखित्वा
तद्बाह्ये द्वादशार्णैस्तदनुपरिवृतं देवकीपुत्रयन्त्रम् ॥ १०९ ॥
तं सुकीदेवदेवेतं तं वेदे परतीरतम् ।
तं वातारूढताख्यातं तं ख्यातं देवकीसुतम् ॥ ११० ॥
लिखितं भूर्जपत्रादौ यन्त्रमेतद् यथाविधि ।
विधृतं बाहुना नित्यं सर्वकामफलप्रदम् ॥ १११ ॥
पलाशवृक्षफलके लिखितं साधुसाधितम् ।
गोस्थाने विलिखेदेतत् गवां वृद्धिर्भवेत् सदा ॥ ११२ ॥
श्लोकं चतुःषष्टिपदेषु भूर्जे शिवादिदैत्यादि लिखेत् क्रमेण ।
तत् सर्वतोभद्रमिति प्रसिद्धं यन्त्रं यशःश्रीविजयप्रदायि ॥११३॥
फलके खादिरे क्लृप्तं गवां गोष्ठे निवेशितम् ।
रक्षाकृत् चौरमारीघ्नं सवत्सानां गवां हितम् ॥ ११४ ॥
चौरगोपपगोरक्षी रक्षमाक्षक्षमाक्षर ।
गोमानो गगनोमागोपक्षगत्यक्षमक्षप ॥ ११५ ॥
ब्रह्मा भूम्यासनासीनः शान्तिविन्दुविभूषितः ।
वीजं मनोभवं प्रोक्तं जगत्त्रितयमोहनम् ॥ ११६ ॥
ऋषिः सम्मोहनः प्रोक्तो गायत्रं छन्द ईरितम् ।
सर्वसम्मोहनः साक्षाद् देवता मकरध्वजः ।
वीजेन दीर्घयुक्तेन षडङ्गविधिरीरितः ॥ ११७ ॥
वारुणं रत्नविभूषणाढ्यं मीनध्वजञ्चारुकृताङ्गरागम् ।
ाराम्बुजे रङ्कुशमिक्षुचापं पुष्पास्त्रपाशौ दधतं भजामि ॥११८॥

लक्षत्रयं जपेन्मन्त्रं मधुरत्रयसंयुतैः ।
पुष्पैः किंशुकजैः फुल्लैर्जुहुयात्तद्दशांशतः ॥ ११९ ॥
वक्ष्यमाणे यजेत् पीठे विधिना मकरध्वजम् ।
मोहिनी क्षोभणी त्रासा स्तम्भिन्याकर्षणी पुनः ॥ १२० ॥
द्राविणी ह्लादिनीक्लिन्नाक्लेदिन्यः पीठशक्तयः ।
बीजाद्यमासनं दत्त्वा मूर्त्तिं मूलेन कल्पयेत् ॥ १२१ ॥
तस्यां सम्यग्यजेद् देवं वक्ष्यमाणेन वर्त्मना ।
दृष्टाङ्गावरणं पूर्वं मध्यादिष्वर्चयेच्छरान् ॥ १२२ ॥
द्रामाद्यं शोषणं पूर्वं द्रीमाद्यं मोहनं ततः ।
सन्दीपनाख्यं क्लीमाद्यं ब्लूमाद्यं तापनं पुनः ॥ १२३ ॥
सर्गान्तभृगुणा भूयो मादनं पञ्चमं यजेत् ।
प्रणामबाणहस्ताब्जा ध्येयास्ता बाणदेवताः ॥ १२४ ॥
संपूज्याः पत्रमध्येषु शक्तयोऽष्टौ यथाक्रमम् ।
अनङ्गरूपान्यानङ्गमदनानङ्गमन्मथा ॥ १२५ ॥
अनङ्गकुसुमा पश्चादनङ्गकुसुमातुरा ।
अनङ्गशिशिरानङ्गमेखलानङ्गदीपिका ॥ १२६ ॥
लीलाकमलधारिण्यः स्मेरवक्त्राः सुभूषिताः ।
बहिः षोडशपत्रेषु पूज्याः षोडशशक्तयः ॥ १२७ ॥
युवतिर्विप्रलब्धान्या ज्योत्स्ना सुभ्रुर्मदद्रवा ।
सुरता वारुणी लोला कान्तिः सौदामिनी पुनः ॥ १२८ ॥
कामच्छत्रा चन्द्रलेखा शुकी स्यान्मदना पुनः ।
योनिर्मायावती ताः स्युः कह्लारविलसत्कराः ॥ १२९ ॥
स्मेरवक्त्रा युवतयो मदमन्थरविग्रहाः ।
दलाग्रेषु पुनः पूज्याः स्मरस्य परिचारकाः ॥ १३० ॥
शोको मोहो विलासोऽन्यो विभ्रमो मदनातुरः ।
अपत्रापोयुवाकामी धृतपुष्पो रतिप्रियः ॥ १३१ ॥

ग्रीष्मस्तपान्त ऊर्जोऽन्यो हेमन्तः शिशिरो मदः ।
इक्षुकार्मुकपुष्पेषु धरा रक्ताः सुभूषिताः ॥ १३२ ॥
अपराङ्गनिषङ्गाख्या वनितासक्तमानसाः ।
रतिप्रियानष्टदिक्षु यजेदष्टौ विशिष्टधीः ॥ १३३ ॥
परभृत्सारसौ पश्चात् शुकमेयाह्वयः पुनः ।
अपाङ्गभ्रू विलासौ द्वौ हावभावौ प्रकीर्त्तितौ ॥ १३४ ॥
चतुरस्रस्य कोणेषु पूज्यास्तत्परिचारिकाः ।
माधवी मालती पश्चात् हरिणाक्षी मदोत्कटा ॥ १३५ ॥
सितचामरधारिण्यः सर्वाभरणभूषिताः ।
बाह्ये लोकेश्वरान् पश्चादस्त्राण्यभ्यर्चयेत् पुनः ॥ १३६ ॥
इत्थं यो भजते देवं सुगन्धिकुसुमादिभिः ।
स भवेल्लब्धसौभाग्यो लक्ष्म्या जितधनेश्वरः ॥ १३७ ॥
अशोकपुष्पैर्मध्वक्तैर्जुहुयाद् दिवसत्रयम् ।
अष्टोत्तरसहस्रं यः स भवेज्जगतां प्रियः ॥ १३८ ॥
गव्येनाज्येन जुहुयान्मन्त्रेणाष्टोत्तरं शतम् ।
साधकेन्द्रः ससम्पातमर्चिते हव्यवाहने ॥ १३९ ॥
सम्पाताज्येन वनिता भोजयेदात्मनः पतिम् ।
अनया यत् समादिष्टं स तत्तत् कुरुते सदा ॥ १४० ॥
कन्यार्थी जुहुयाल्लाजैर्दध्यक्तैर्मण्डलान्तरे ।
कन्यामिष्टामवाप्नोति सापि सत्पतिमाप्नुयात् ॥ १४१ ॥
कामोल्लासितसाध्यमध्यविलसत्षट्कोणमितद्बहि-
र्गायत्रीगुणवर्णवद्वसुदलं मालामनोरक्षरैः ।
षट्संख्यैः सहिताष्टपत्रलसितं क्षौणीपुरेणावृतं
कोणन्यस्तमनोभवेन कथितं यन्त्रं जगन्मोहनम् ॥ १४२ ॥
कामदेवाय शब्दान्ते विद्महे ङेन्तमीरयेत् ।
पुष्पबाणं धीमहि स्यात्तन्नोऽनङ्गः प्रचोदयात् ॥ १४३ ॥

नमोऽन्ते कामदेवाय वदेत् सर्वजनं ततः ।
प्रियाय सर्ववर्णान्ते जनसम्मोहनाय च ॥ १४४ ॥
ज्वलद्वयं प्रज्वलार्णान् वदेत् सर्वजनस्य च ।
हृदयं मम शब्दान्ते वशं कुरु युगस्य च ।
शिरोमालामनुरयं चत्वारिंशद्भिरक्षरैः ॥ १४५ ॥
साध्याख्याः पुटितैः स्मरैः परिवृतं कामं लिखेन्मध्यतः
पश्चात्तारविकारपञ्चकपराशासाङ्घ्रिभिरष्टेशवान् ।
शूलाढ्योऽष्टदलेषु साधु विलिखेत्ताम्बूलपत्रोदरे
यन्त्रं यां निशि खादयेत् कृतजपं वश्या भवेत्तस्य सा ॥१४६॥
कथितं पुष्पबाणस्य साङ्गोपाङ्गसमर्चनम् ।
सौभाग्यकान्तिविभवदारपुत्रसमृद्धिदम् ॥ १४७ ॥
आदाय वेदाः सकलाः समुद्रान्निहत्य शङ्खासुरमत्युदग्रम् ।
दत्ताः पुरा येन पितामहाय विष्णुं तमाद्यं भज मत्स्यरूपम्
॥ १४८ ॥
दिव्यामृतार्थं मथिते महाब्धौ देवासुरैर्वासुकिमन्दराभ्याम् ।
भूमेर्महावेगविघूर्णितायास्तं कूर्ममाधारगतं स्मरामि ॥१४९॥
समुद्रकाञ्चीसरिदुत्तरीया वसुन्धरा मेरुकिरीटहारा ।
दंष्ट्राग्रतो येन समुद्धृता भूस्तमादिकोलं शरणं प्रपद्ये ॥१५० ॥
भक्तार्तिभङ्गक्षमया धिया यः स्तम्भान्तरालादुदितो नृसिंहः ।
रिपुं सुराणां निशितैर्नखाग्रैर्विदारयन्तं न च विस्मरामि
॥ १५१ ॥
चतुःसमुद्राभरणा धरित्री न्यासाय नालं चरणस्य यस्य ।
एकस्य नान्यस्य पदं सुराणां त्रिविक्रमं सर्वगतं नमामि ॥१५२
त्रिःसप्तवारं नृपतीन्निहत्य यस्तर्पयन् रक्तमयं पितृभ्यः ।
चकार दोर्दण्डबलेन सम्यक् तमादिशूरं प्रणमामि विष्णुम्१५
कुले रघूणां समवाप्य जन्म विधाय सेतुं जलधेर्जलान्तः ।

लङ्केश्वरं य: श्रमयाञ्चकार सीतापतिं तं प्रणमामि भक्त्या॥१५४॥
हलेन सर्वानसुरान् विकृष्य चकार चूर्णान् मुषलप्रहारै:।
य: कृष्णमासाद्य बलं बलीयान् भक्त्या भजे तं बलभद्ररामम्
॥ १५५ ॥
पुरा सुराणामसुरान् विजेतुं सम्भावयन् चीवरचिह्नवेशम्।
चकार य: शास्त्रमयोपकल्पं तं मूलभूतं प्रणतोऽस्मि बुद्धम्
॥ १५६ ॥
कल्पावसाने निखिलं खुरै: स्वै: संघट्टयामास निमिषमात्रात्।
यस्तेजसा निर्दहतीति भीमो विषात्मकं तं तुरगं भजाम: ॥१५७
शङ्खं सचक्रं सगदं सरोजं दोर्भिर्दधानं गरुडाधिरूढम्।
श्रीवत्सचिह्नं जगदादिमूलं तमालनीलं हृदि विष्णुमीडे
॥ १५८ ॥
क्षीराम्बुधौ शेषशरीरतल्पे शयानमन्त: स्मितशोभिवक्त्रम्।
उत्फुल्लनेत्राम्बुजमम्बुदाभमाद्यं श्रुतीनामसकृत् स्मरामि ॥१५९
प्रीणयेदनया स्तुत्या जगन्नाथं जगन्मयम्।
धर्मार्थकाममोक्षाणां प्राप्तये पुरुषोत्तमम् ॥ १६० ॥
इति सारदातिलके सप्तदश: पटल:।

---

## अष्टादश: पटल:।

अथ वक्ष्ये महेशस्य मन्त्रान् सर्वार्थसिद्धिदान्।
यै: पूर्वमृषय: प्राप्ता: शिवसायुज्यमञ्जसा ॥ १ ॥
हृदयं वपरं साक्षी लान्तो नन्तान्वितो मरुत्।
पञ्चाक्षरो मनु: प्रोक्तस्ताराद्योऽयं षड़क्षर: ॥ २ ॥
वामदेवो मुनिश्छन्द: पंक्तिरीशोऽस्य देवता।
षड्भिर्वर्णै: षड़ङ्गानि कुर्य्यान्मन्त्रस्य देशिक: ॥ ३ ॥

मन्त्रवर्णादिका न्यस्येत् पञ्चमूर्त्तीर्यथाक्रमम्।
तर्जनीमध्यमयोरन्त्यानामिकाङ्गुष्ठके पुनः॥ ४॥
ताः स्युस्तत्पुरुषैर्वोरसद्योवामेशसंज्ञकाः।
वक्त्रहृत्पादगुह्येषु निजमूर्द्धनि ताः पुनः॥ ५॥
प्रागयाम्यवारुणोदीच्यमध्यवक्त्रेषु पञ्चसु।
मन्त्राङ्गानि न्यसेत् पश्चाज्जातियुक्तानि षट्क्रमात्॥ ६॥
कुर्वीत गोलकन्यासं रक्षार्थे तदनन्तरम्।
हृदि वक्त्रांसयोरूर्वोः कण्ठे नाभौ द्विपार्श्वयोः॥ ७॥
पृष्ठे हृदि ततो मूर्ध्नि वदने नेत्रयोर्नसोः।
दोःपत्सन्धिषु साग्रेषु विन्यसेत्तदनन्तरम्॥ ८॥
शिरोवदनहृत्कुक्षिसोरुपादद्वये पुनः।
हृदि वक्त्राम्बुजे टङ्के मृगाभयवरेष्वथ॥ १०॥
वक्त्रांसहृत्सु पादोरुजठरेषु क्रमान्न्यसेत्।
मूलमन्त्रस्य षड्वर्णान् यथावद्देशिकोत्तमः॥ ११॥
मूर्ध्नि भालोदरांसेषु हृदये ताः पुनर्न्यसेत्।
पश्चादनेन मन्त्रेण कुर्वीत व्यापकं सुधीः॥ १२॥
नमोऽस्तु स्थाणुभूताय ज्योतिर्लिङ्गामृतात्मने।
चतुर्मूर्त्तिवपुश्छायाभासिताङ्गाय शम्भवे।
एवं न्यस्तशरीरोऽसौ चिन्तयेत् पार्वतीपतिम्॥ १३॥

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्।
पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम्॥१४॥

तत्त्वलक्षं जपेन्मन्त्रं दीक्षितः शैववर्त्मना।
तावत्संख्यसहस्राणि जुहुयात् पायसैः शुभैः॥ १५॥
ततः सिद्धो भवेन्मन्त्रः साधकाभीष्टसिद्धिदः।

देवं संपूजयेत् पीठे वामादिनवशक्तिकि ॥ १६ ॥
वामा ज्येष्ठा तथा रौद्री काली कलपदादिका।
विकरण्यभया प्रोक्ता बलाद्या विकरण्यथ ॥ १७ ॥
बलप्रमथनी पश्चात् सर्वभूतदमन्यथा।
मनोन्मनीति संप्रोक्ताः शैवपीठस्य शक्तयः ॥ १८ ॥
नमो भगवते पश्चात् सकलादि वदेत् पुनः।
गुणात्मशक्तियुक्ताय ततोऽनन्ताय तत्परम् ॥ १९ ॥
योगपीठात्मने भूयो नमस्कारादिको मनुः।
अमुना मनुना दद्यादासनं गिरिजापतेः ॥ २० ॥
मूर्त्तिं मूलेन संकल्प्य तत्रावाह्य यजेत् शिवम्।
कर्णिकायां यजेत् मूर्त्तौरीशमीशानदिग्गतम् ॥ २१ ॥
शुद्धस्फटिकसङ्काशं दिक्षु तत्पुरुषादिकाः।
पीताञ्जनश्वेतरक्ताः प्रधानाः सट्शायुधाः ॥ २२ ॥
चतुर्वक्त्रसमायुक्ता यथावत् संप्रपूजयेत्।
कोणेष्वर्च्चेन्निवृत्याद्यास्तेजोरूपाः कलाः क्रमात् ॥ २३ ॥
अङ्गानि केशरस्थानि विद्येशान् पत्रगान् यजेत्।
अनन्तं सूक्ष्मनामानं शिवोत्तममनन्तरम् ॥ २४ ॥
एकनेत्रमेकरुद्रं त्रिमूर्त्तिं तदनन्तरम्।
पश्चात् श्रीकण्ठनामानं शिखण्डिनमिति क्रमात् ॥ २५ ॥
रक्तपीतसितारक्तकृष्णरक्ताञ्जनासितान्।
किरीटार्पितबालेन्दून् पद्मस्थान् भूषणान्वितान् ॥ २६ ॥
त्रिनेत्रान् शूलवज्रास्त्रचापहस्तान् मनोरमान्।
उत्तरादि यजेत् पश्चादुमां चण्डेश्वरं पुनः ॥ २७ ॥
ततो नन्दिमहाकाली गणेशवृषभौ पुनः।
अथ भृङ्गरिटं स्कन्दमेतान् पद्मासनस्थितान् ॥ २८ ॥
स्वर्णतोयारुणश्याममुक्तेन्दुसितपाटलान्।

इन्द्रादयस्ततः पूज्या वज्राद्यायुधसंयुताः ॥ २९ ॥
इत्थं संपूजयेद्देवं सहस्रं नित्यशो जपेत् ।
सर्वपापविनिर्मुक्तः प्राप्नुयाद्वाञ्छितां श्रियम् ॥ ३० ॥
द्विसहस्रं जपेद्रोगान्मुच्यते नात्र संशयः ।
त्रिसहस्रं जपेन्मन्त्रं दीर्घमायुरवाप्नुयात् ॥ ३१ ॥
सहस्रवृद्ध्या प्रजपेत् सर्वान् कामानवाप्नुयात् ।
आज्यान्वितैस्तिलैः शुद्धैर्जुहुयाल्लक्षमादरात् ॥ ३२ ॥
उत्पातजनितान् क्लेशाञ्शमयेन्नात्र संशयः ।
शतं लक्षं जपेत् साक्षात् शिवो भवति मानवः ॥ ३३ ॥
षडक्षरः शक्तिरुद्रः कथितोऽष्टाक्षरो मनुः ।
ऋषिश्छन्दः पुरा प्रोक्तं देवता स्यादुमापतिः ।
अङ्गानि पूर्वमुक्तानि सोममीशं विचिन्तयेत् ॥ ३४ ॥
बन्धूकाभं त्रिनेत्रं शशिशकलधरं स्मेरवक्त्रं वहन्तं
हस्तैः शूलं कपालं वरदमभयदं चारुहारं भजामि ।
वामोरुस्थशायाः करतलविलसच्चारुरक्तोत्पलाया
हस्तेनाश्लिष्टदेहं मणिमयविलसद्भूषणायाः प्रियायाः ॥ ३५ ॥
मनुलक्षं जपेन्मन्त्रं तत्सहस्रं यथाविधि ।
जुहुयान्मधुरासिक्तैरारग्वधसमिद्वरैः ॥ ३६ ॥
प्राक् प्रोक्ते पूजयेत् पीठे गन्धपुष्पैरुमापतिम् ।
अङ्गावृतेर्बहिः पूज्या हृल्लेखाद्या यथा पुरा ॥ ३७ ॥
मध्यप्रागदक्षिणोदीच्यपश्चिमेषु विधानतः ।
हृल्लेखा गगना रक्ता चतुर्थी तु करालिका ॥ ३८ ॥
महोच्छुष्मा क्रमादेताः पञ्चभूतसमप्रभाः ।
पाशाङ्कुशवराभीतिधारिण्योऽमितभूषणाः ॥ ३९ ॥
यजेत् पूर्वादिपत्रेषु वृषभाद्याननुक्रमात् ।
हिमालयाभं वृषभं तीक्ष्णशृङ्गं त्रिलोचनम् ॥ ४० ॥

सर्वाभरणसम्पन्नं साक्षात् सर्वस्वरूपिणम् ।
कपालशूलविलसत्करं कालघनप्रभम् ॥ ४१ ॥
क्षेत्रपालं त्रिनयनं दिगम्बरमथार्चयेत् ।
शूलटङ्काक्षवलयकमण्डलुलसत्करम् ॥ ४२ ॥
रक्ताकारं त्रिनयनं चण्डेशमथ पूजयेत् ।
चक्रशंखाभयाभीष्टकरां मरकतप्रभाम् ॥ ४३ ॥
दुर्गां प्रपूजयेत् सौम्यां त्रिनेत्रां चारुभूषणाम् ।
कल्पशाखां रत्नघण्टां दधानां द्वादशाक्षरम् ॥ ४४ ॥
बालार्काभं शिशुं कान्तं सम्मुखं पूजयेत्ततः ।
नन्दिनं पूजयेत् सौम्यं रत्नभूषणमण्डितम् ॥ ४५ ॥
परशुेन वराभीतिधारिणं श्यामविग्रहम् ।
पाशाङ्कुशवराभीष्टधारिणं कुङ्कुमप्रभम् ॥ ४६ ॥
विघ्ननायकमभ्यर्च्य चन्द्रार्द्धकृतशेखरम् ।
श्यामं रक्तोत्पलकरं वामाङ्कन्यस्ततत्करम् ॥ ४७ ॥
त्रिनेत्रं रत्नवज्राढ्यं सेनापतिमथार्चयेत् ।
ततोऽष्टौ मातरः पूज्या ब्राह्म्याद्याः प्रोक्तलक्षणाः ॥ ४८ ॥
इन्द्रादिकान् लोकपालान् दशदिक्षु समर्चयेत् ।
वज्रादीनि तदस्त्राणि तद्बहिः क्रमशो यजेत् ॥ ४९ ॥
एवं यो भजते मन्त्री देवेशं तमुमापतिम् ।
स भवेत् सर्वलोकानां प्रियः सौभाग्यसम्पदाम् ॥ ५० ॥
सान्तमौकारसंयुक्तो विन्दुभूषितमस्तकः ।
प्रासादाख्यो मनुः प्रोक्तो भजतां सर्वसिद्धिदः ॥ ५१ ॥
षड्दीर्घयुक्तबीजेन षडङ्गविधिरीरितः ।
वामदेवो मुनिश्छन्दः पङ्क्तिर्देवः सदाशिवः ॥ ५२ ॥
ईशानादि न्यसेन्मूर्त्तीरङ्गुष्ठादिषु देशिकः ।
ईशानाख्यं तत्पुरुषमघोरं तदनन्तरम् ॥ ५३ ॥

वामदेवाह्वयं सद्य आसां बीजं क्रमाद्विदुः।
ओंकाराद्यैः पञ्चह्रस्वैर्विलोमात् संयुतं वियत् ॥ ५४ ॥
तत्तदङ्गुलिभिर्भूयस्तत्तद्बीजादिकान्यसेत्।
शिरोवदनहृद्गुह्यपाददेशे यथाक्रमम् ॥ ५५ ॥
ऊर्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु मुखेषु ताः।
ततः प्रविन्यसेद्विद्वानष्टत्रिंशत्कलास्तनौ ॥ ५६ ॥
ईशानाद्या ऋचः सम्यगङ्गुलीषु यथाक्रमम्।
अङ्गुष्ठादिकनिष्ठान्तं न्यसेद्देशिकसत्तमः ॥ ५७ ॥
मूर्द्धास्यहृदयाम्भोजगुह्यपादेषु ताः पुनः।
वक्त्रे पूर्वादि विन्यस्येद् भूयोऽङ्गानि प्रकल्पयेत् ॥ ५८ ॥
तारपञ्चकमुच्चार्य्य सर्वज्ञाय हृदीरितम्।
अमृततेजोमालिनि तृप्तायेति पदं पुनः ॥ ५९ ॥
तदन्ते ब्रह्मशिरसे शिरोऽङ्गं ज्वलितं ततः।
शिखिशिखाय परतोऽनादिबोधाय तच्छिखा ॥ ६० ॥
वज्रिणे वज्रहस्ताय तदस्त्राय तनुच्छदम्।
सौं वौं हौमिति सम्भाष्य परतोऽलुप्तशक्तये ॥ ६१ ॥
नेत्रमुक्तं स्रौं पशुं हुँ फडन्तेऽनन्तशक्तये।
अस्त्रमुक्तं षडङ्गानि कुर्य्यादेवं समाहितः ॥ ६२ ॥
पूर्वदक्षिणपाश्चात्यसौम्यमध्येषु पञ्चसु।
वक्त्रेषु पञ्च विन्यस्येदीशानस्य कलाः क्रमात् ॥ ६३ ॥
ईशानः सर्वविद्यानां शशिनी प्रथमा कला।
ईश्वरः सर्वभूतानामङ्गदा तदनन्तरम् ॥ ६४ ॥
ब्रह्माधिपतिशब्दान्ते ब्रह्मणोऽधिपतिः पुनः।
ब्रह्मेष्टदा तृतीया स्याच्छिवो मेऽस्तु ततः परा ॥ ६५ ॥
मरीचिः कथिता तज्ज्ञैश्चतुर्थी च सदाशिवः।
अंशुमालिन्यथ परा प्रणवाद्या नमोऽन्विताः ॥ ६६ ॥

पूर्वपश्चिमयाम्योदग्वक्त्रेषु तदनन्तरम्।
ततो विन्यसेन्मन्त्री पुरुषस्य कलाः क्रमात् ॥ ६७ ॥
आद्या तत्पुरुषायेति विद्महे शान्तिरीरिता।
महादेवाय शब्दान्ते धीमहि स्यात् ततः परम् ॥ ६८ ॥
निवृत्तस्तत्परा सर्वा प्रणवाद्या नमोऽन्विताः।
हृद्ग्रीवांसद्वये नाभौ कुक्षौ पृष्ठे च वक्षसि ॥ ६९ ॥
अघोरस्य कला न्यस्येदष्टौ मन्त्री यथाविधि।
अघोरेभ्यस्तथा पूर्वमीरिता प्रथमा कला ॥ ७० ॥
अथ घोरेभ्य इत्यन्ते मोहा स्यात्तदनन्तरा।
घोरान्ते स्यात् क्षपा पश्चात्तृतीया परिकीर्त्तिता ॥ ७१ ॥
घोरतरेभ्यो निद्रान्या सर्वतः सर्वतत्परा।
व्याधिस्तु पञ्चमी प्रोक्ता सर्वेभ्यस्तदनन्तरम् ॥ ७२ ॥
मृत्युर्निगदिता षष्ठी नमस्तेऽस्तु ततः परम्।
क्षुधा स्यात् सप्तमी रुद्ररूपेभ्यः कथिता तृषा ॥ ७३ ॥
अष्टमी कथिता एता ध्रुवाद्या नमसान्विताः।
गुह्यमुष्कोरुयुग्मेषु जानुजङ्घायुगे स्फिचोः ॥ ७४ ॥
कट्यां पार्श्वद्वये वामकला न्यस्येत्त्रयोदश।
प्रथमा वामदेवाय नमोऽन्ते स्याद्रजा कला ॥ ७५ ॥
स्याज्ज्येष्ठाय नमो रक्षा द्वितीया परिकीर्तिता।
स्यात् रुद्राय नमः पश्चात् तृतीया रतिरीरिता ॥ ७६ ॥
कालाय नम इत्यन्ते पालिनी परिकीर्तिता।
कलकामा पञ्चमी स्यात्ततो विकरणाय च ॥ ७७ ॥
नमः संयमनी षष्ठी कथिता तदनन्तरम्।
बलक्रियासमादिष्टा कलाविकरणाय च ॥ ७८ ॥
नमो वृद्धिरष्टमी स्याद्बलान्ते च स्थिरा कला।
पश्चात् प्रमथनायान्ते नमो रात्रिरुदीरिता ॥ ७९ ॥

सर्वभूतदमनाय नमोऽन्ते भ्रामणी कला ।
मनोऽन्ते मोहनी प्रोक्ता मन्त्रज्ञैर्द्वादशी कला ॥ ८० ॥
उन्मनाय नमः पश्चाज्ज्वरा प्रोक्ता त्रयोदशी ।
प्रणवाद्याश्चतुर्थ्यन्ता नमोऽन्तास्ताः प्रकीर्त्तिताः ॥ ८१ ॥
पाददोःश्रोत्रनासासु मूर्ध्नि बाहुयुगे न्यसेत् ।
सद्योजातोद्भवा सम्यगष्टौ मन्त्री कलाः क्रमात् ॥ ८२ ॥
सद्योजातं प्रपद्यामि सिद्धिः स्यात् प्रथमा कला ।
सद्योजाताय वै भूयो नमः स्याद्वृद्धिरीरिता ॥ ८३ ॥
भवे रतिस्तृतीया स्यादभवे तदनन्तरम् ।
लक्ष्मीश्चतुर्थी कथिता ततो नातिभवे पदम् ॥ ८४ ॥
मेधा स्यात् पञ्चमी प्रोक्ता कला भूयो भजस्व माम् ।
प्रज्ञा समीरिता षष्ठी भवान्ते स्यात् प्रभाकला ॥८५॥
उद्भवाय नमः पश्चात् सुधा स्यादष्टमी कला ।
प्रणवाद्याश्चतुर्थ्यन्ताः कलाः सर्वाः नमोऽन्विताः ॥ ८६ ॥
अष्टत्रिंशत् कलाः प्रोक्ताः पञ्चब्रह्मपदादिकाः ।
इति विन्यस्तदेहोऽसौ भवेद् गङ्गाधरः स्वयम् ।
ततः समाहितो भूत्वा ध्यायेद् देवं सदाशिवम् ॥ ८७ ॥
मुक्तापीतपयोदमौक्तिकजवावर्णैर्मुखैः पञ्चभि-
स्त्र्यक्षैरञ्चितमीशमिन्दुमुकुटं पूर्णेन्दुकोटिप्रभम् ।
शूलं टङ्ककृपाणवज्रदहनान्नागेन्द्रघण्टाङ्कुशान्
पाशं भीतिहरन्दधानममिताकल्पोज्ज्वलं चिन्तयेत् ॥८८॥
एवं ध्यात्वा जपेन्मन्त्रं पञ्चलक्षं मधुप्लुतैः ।
प्रसूनैः करवीरोत्थैर्जुहुयात्तद्दशांशकम् ॥ ८९ ॥
पूर्वोक्ते प्रयजेत् पीठे मूर्त्तिं मूलेन कल्पयेत् ।
आवाह्य पूजयेत्तस्यां मूर्त्त्याद्यावरणैः सह ॥ ९० ॥
शक्तिडमरुकाभीतिवरान् संबिभ्रतं करैः ।

ईशानं वोचणं शुभ्रमैशान्यां दिशि पूजयेत्॥ ९१ ॥
परश्वेणवराभीतीर्दधानं विद्युदुज्ज्वलम्।
चतुर्मुखं तत्पुरुषं त्रिनेत्रं पूर्वतोऽर्चयेत्॥ ९२ ॥
शचस्रजं वेदपाशौ सृणिं डमरुकं ततः।
खट्वाङ्गं त्रिशिखं शूलं कपालं बिभ्रतं करैः॥ ९३ ॥
ञ्जनाभं चतुर्वक्त्रं भीमदंष्ट्रं भयावहम्।
अघोरं वोचणं याम्ये पूजयेन्मनुवित्तमः॥ ९४ ॥
कुङ्कुमाभं चतुर्वक्त्रं वामदेवं त्रिलोचनम्।
कर्पूरेन्दुनिभं देवं सद्योजातं त्रिलोचनम्॥ ९५ ॥
हरिणाचगुणाभीतिवरहस्तं चतुर्मुखम्।
बालेन्दुशेखरोल्लासिमुकुटं पश्चिमे यजेत्॥ ९६ ॥
वराभयाचवलयकुठारादीन् धृतं करैः।
विलासिनं स्मरवक्त्रं सौम्यं सम्यक् समर्चयेत्॥ ९७ ॥
निवृत्याद्यास्ततः कोणे तेजोरूपाः कलाः क्रमात्।
विद्येश्वराननन्ताद्यान् पत्रेषु परितो यजेत्॥ ९८ ॥
उमादिकांस्ततो बाह्ये शक्राद्यानायुधैः सह।
इति संपूज्य देवेशं भक्त्या परमया युतः॥ ९९ ॥
प्रीणयेन्नृत्यगीताद्यैः स्तोत्रैर्मन्त्रैर्मनोहरैः।
तारोमायावियद्बिन्दुमनुस्वरसमन्वितम्॥ १०० ॥
पञ्चाचरसमायुक्तो वसुवर्णो मनुर्मतः।
पञ्चाचरोक्तवत् कुर्य्यादङ्गन्यासादिकं बुधः॥ १०१ ॥
वन्दे सिन्दूरवर्णं मणिमुकुटलसच्चारुचन्द्रावतंसं
भालोद्यन्नेत्रमीशं स्मितमुखकमलं दिव्यभूषाङ्गरागम्।
वामोरुन्यस्तपाणेररुणकुवलयं सन्दधत्याः प्रियाया
वृत्तोत्तुङ्गस्तनाग्रे निहितकरतलं वेदटङ्केष्टहस्तम्॥१०२॥
अष्टलचं जपेदेनं मनुं मनुविदां वरः।

तत्सहस्रं प्रजुहुयात् पायसान्नैर्घृतप्लुतैः ॥ १०३ ॥
प्राक् पीठे मूलमन्त्रेण मूर्त्तिं सङ्कल्प्य पूजयेत् ।
अङ्गैरावरणं पूर्वमनन्ताद्यैरनन्तरम् ॥ १०४ ॥
उमादिभिः समुद्दिष्टं तृतीयं लोकनायकैः ।
चतुर्थं पञ्चमं तेषामायुधैः परिकीर्त्तितम् ॥ १०५ ॥
एवं प्रतिदिनं देवं पूजयेत् साधकोत्तमः ।
पुत्रमित्रादिसहितां श्रियं प्राप्य प्रमोदते ॥ १०६ ॥
तारे स्थिरा सकर्णेन्दुर्भृगुः सर्गसमन्वितः ।
त्र्यक्षरात्मा निगदितो मन्त्रो मृत्युञ्जयात्मकः ॥ १०७ ॥
ऋषिः कहोलो देव्यादि गायत्री छन्द ईरितम् ।
मृत्युञ्जयो महादेवो देवतास्य समीरितः ।
भृगुणा दीर्घयुक्तेन षडङ्गानि समाचरेत् ॥ १०८ ॥
चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तःस्थितं
मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् ।
कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं
कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावयेत् ॥१०९
गुणलक्षं जपेन्मन्त्रं तद्दशांशं विशालधीः ।
जुहुयादमृताखण्डैः शुद्धदुग्धाज्यलोलितैः ॥ ११० ॥
शैलेशं पूजयेत् पीठे मूर्त्तिं मूलेन कल्पयेत् ।
अङ्गावरणमावाह्य पश्चाल्लोकेश्वरान् यजेत् ॥ १११ ॥
तदस्त्राणि ततो बाह्ये पूजयेत् साधकोत्तमः ।
जपपूजादिभिः सिद्धे मन्त्रेऽस्मिन् मनुना क्रमात् ॥११२॥
कुर्य्यात् प्रयोगान् कल्पोक्तानभीष्टफलसिद्धये ।
दुग्धयुतैः सुधाखण्डैर्मन्त्री मासं सहस्रकम् ॥ ११३ ॥
आराधितेऽग्नौ जुहुयाद्विधिवद्विजितेन्द्रियः ।
सन्तुष्टः शङ्करस्तेन सुधाप्लावितविग्रहः ॥ ११४ ॥

आयुरारोग्यसम्पत्तियशःपुत्रान् विवर्द्धयेत्।
सुधा वल्ली तिला दूर्वा पयः सर्पिः पयो हविः॥ ११५।
इत्युक्तैः सप्तभिर्द्रव्यैर्जुहुयात् सप्तवासरान्।
क्रमाद्दशशतं नित्यमष्टोत्तरमतन्द्रितः॥ ११६॥
सप्ताधिकान् द्विजान्नित्यं भोजयेन्मधुरान्वितम्।
विकारानुगुणं मन्त्री वर्द्धयेद्धोमवासरान्॥ ११७॥
होतृभ्यो दक्षिणां दद्यादरुणां गां पयस्विनीम्।
गुरुं संप्रीणयेत् पश्चात् धनाद्यैर्देवताधिया॥ ११८॥
अनेन विधिना साध्यः कृत्वा द्रोहज्वरादिभिः।
विमुक्तः सुचिरं जीवेच्छरदां शतमञ्जसा॥ ११९॥
अभिचारे ज्वरे तीव्रे घोरोन्मादे शिरोगदे।
असाध्यरोगे क्ष्वेड़ार्त्तौ मोहे दाहे महाभये॥ १२०॥
होमोऽयं शान्तिदः प्रोक्तः सर्वसम्पत्प्रदायकः।
द्रव्यैरेतैः प्रजुहुयात् त्रिजन्मसु यथाविधि॥ १२१॥
भोजयेन्मधुरैर्भोज्यैर्ब्राह्मणान् वेदपारगान्।
दीर्घमायुरवाप्नोति वाञ्छितां विन्दति श्रियम्॥ १२२॥
एकादशाहुतीर्नित्यं दूर्वाभिर्जुहुयाद् बुधः।
अपमृत्युजिदेष स्यादायुरारोग्यवर्द्धनः॥ १२३॥
त्रिजन्मसु सुधावल्लीकाश्मरीवकुलोद्भवैः।
समिद्वरैः कृतो होमः सर्वमृत्युगदापहः॥ २४॥
सिद्धार्थैर्विहितो होमो महाज्वरविनाशनः।
अपामार्गसमिद्धोमः सर्वामयनिषूदनः॥ १२५॥

प्रणवरचितनालं मन्त्रमध्यार्णपत्रं
भृगुविलसितमध्यं पद्मयुग्मं तदन्तः।
कृतवसतिमुमेशं वर्णनिर्य्यत्सुधार्द्रं
कलयतु हृदि नित्यं सर्वदुःखप्रशान्त्यै॥ १२६॥

यन्त्राब्जे कमले सौम्यं कलसं प्रोक्तवर्त्मना ।
नवरत्नसमायुक्तं दुकूलाभ्यामलङ्कृतम् ॥ १२७ ॥
आपूर्य्य सलिलैः शुद्धैस्तस्मिन् देवं प्रपूजयेत् ।
उपचारैः षोड़शभिर्विधानेन विधानवित् ॥ १२८ ॥
अभिषिञ्चेत् प्रियं साध्यं विनीतं दत्तदक्षिणम् ।
आधिव्याधिमहारोगकृत्याद्रोहनिवारणः ।
अभिषेकोऽयमाख्यातः कान्तिलक्ष्मीजयप्रदः ॥ १२९ ॥
मध्ये साध्याक्षराढ्यं भुवमभिविलिखेन्मध्यमं दिग्दलस्थं
कोणेष्वन्त्यं मनोस्तत् क्षितिभवनमथो दिक्षु चन्द्रान् विदिक्षु ।
टान्तं मन्त्रं तदुक्तं सकलभयहरं क्ष्वेड़भूतापमृत्यु-
व्याधिव्यामोहदुःखप्रशमनमुदितं श्रीप्रद कीर्त्तिदायि ॥१३०॥
इति सारदातिलके अष्टादशः पटलः ।

---

## ऊनविंशः पटलः ।

अथ वक्ष्ये मन्त्रवरं समस्तपुरुषार्थदम् ।
यस्यानुष्ठानमात्रेण दिव्यं ज्ञानं मुनीश्वराः ॥ १ ॥
दक्षिणामूर्त्तये पूर्वं तुभ्यं पदमनन्तरम् ।
वटमूलपदस्यान्ते पदं पश्चान्निवासिने ॥ २ ॥
ध्यानैकनिरताङ्गाय पश्चाद् ब्रूयान्नमःपदम् ।
रुद्राय शम्भवे तारशक्तिरुद्धोऽयमीरितः ॥ ३ ॥
षट्त्रिंशदक्षरो मन्त्रः सर्वकामफलप्रदः ।
मुनिः शुक. समुद्दिष्टश्छन्दोऽनुष्टुप्समीरितम् ॥ ४ ॥
दक्षिणामूर्त्तिनामास्य देवता शम्भुरीरितः ।
षड्भिर्वर्णैर्हृदाख्यातं द्वाभ्यां शिरं उदीरितम् ॥ ५ ॥
शिखाष्टभिः समादिष्टा वस्वर्णैः कवचं मतम् ।

पञ्चभिर्नेत्रमाख्यातं त्रिभिरस्त्रमुदाहृतम् ॥ ६ ॥
षडेते तारशक्त्याद्या ह्रांड्यन्ताः स्वजातयः ।
अङ्गमन्त्राः समुद्दिष्टा यथावद्देशिकोत्तमैः ॥ ७ ॥
मूर्ध्नि भाले दृशोः श्रोत्रे गण्डयुग्मे सनासिके ।
आस्ये दोःसन्धियुगले स्तनहृन्नाभिमण्डले ॥ ८ ॥
कट्यां गुह्ये पुनः पादसन्धिष्वर्णान्न्यसेत् क्रमात् ।
व्यापकं तारशक्तिभ्यां कुर्याद् देहे ततः परम् ॥ ९ ॥
हिमाचलतटे रम्ये सिद्धकिन्नरसेविते ।
विविधद्रुमशाखाभिः सर्वतो वारितातपे ॥ १० ॥
सुपुष्पितैर्लताजालैराश्लिष्टकुसुमद्रुमे ।
शिलाविवरनिर्गच्छन्निर्भरानिलशीतले ॥ ११ ॥
गायद्भृङ्गाङ्गनासंघे नृत्यद्बर्हिकदम्बके ।
कूजत्कोकिलसंघेन मुखरीकृतदिङ्मुखे ॥ १२ ॥
परस्परविनिर्मुक्तमातङ्गमृगसेविते ।
आद्यैः शुकाद्यैर्मुनिभिरजस्रं समुपस्थिते ॥ १३ ॥
पुरन्दरमुखैर्देवैः सेवायातैर्विलोकिते ।
वटवृक्षं महोच्छ्रायं पद्मरागफलोज्ज्वलम् ॥ १४ ॥
गारुत्मतमयैः पत्रैर्निविडैरुपशोभितम् ।
नवरत्नमयाकल्पैर्लम्बमानैरलङ्कृतम् ॥ १५ ॥
जलजैः स्थलजैः पुष्पैरामोदिभिरलङ्कृतम् ।
शृण्वद्भिर्वेदशास्त्राणि शुकवृन्दैर्निषेवितम् ॥ १६ ॥
संसारतापविच्छेदकुशलच्छायमद्भुतम् ।
विचिन्त्य तस्य मूलस्थे रत्नसिंहासने शुभे ॥ १७ ॥
आसीनमसिताकल्पं शरच्चन्द्रनिभाननम् ।
स्तूयमानं मुनिगणैर्दिव्यज्ञानाभिलाषिभिः ।
संस्मरेज्जगतामाद्यां दक्षिणामूर्त्तिमव्ययाम् ॥ १८ ॥

कैलासाद्रिनिभं शशाङ्कशकलस्फूर्जज्जटामण्डितं
नासालोकनतत्परं त्रिनयनं वीरासनाध्यासिनम् ।
मुद्राटङ्ककुरङ्गजानुविलसत्पाणिं प्रसन्नाननं
कक्षाबद्धभुजङ्गमं मुनिवृतं वन्दे महेशं परम् ॥ १९ ॥
अयुतद्वयसंयुक्तं गुणलक्षं जपेन्मनुम् ।
तद्दशांशं तिलैः शुद्धैर्जुहुयात् चीरसप्लुतैः ॥ २० ॥
पञ्चाक्षरोदिते पीठे विधानेन प्रपूजयेत् ।
उपचारैः समुत्पन्नैः पाद्याद्यैः परमेश्वरम् ॥ २१ ॥
एवं कृतपुरश्चर्यः सिद्धमन्त्रो भवेत् सुधीः ।
भिक्षाहारी जपेन्मासं मनुमेनं जितेन्द्रियः ॥ २२ ॥
नित्यं सहस्रमष्टोर्ध्वं परं विन्दति वाङ्मयम् ।
त्रिवारं जप्तमेतेन मनुना सलिलं पिबेत् ॥ २३ ॥
नित्यशो दक्षिणामूर्त्तिं ध्यायन् साधकसत्तमः ।
शास्त्रव्याख्यानसामर्थ्यं लभते वत्सरान्तरे ॥ २४ ॥
ब्राह्मीसैन्धवसिद्धार्थवचाकुष्ठकणोत्पलैः ।
सुगन्धसंयुतैः कल्कैः शृतं ब्राह्मीरसे घृतम् ॥ २५ ॥
मनुनानेन सञ्जप्तमयुतं साधुसाधितम् ।
निपीतं कविताकान्तिरक्षायुःश्रीधृतिप्रदम् ॥ २६ ॥
प्रणवो हृदयं पश्चात्ततो भगवते पदम् ।
ङेयुतं दक्षिणामूर्त्तिं मह्यं मेधामुदीरयेत् ॥ २७ ॥
प्रयच्छ ठद्वयान्तोऽयं द्वाविंशत्यक्षरो मनुः ।
मुनिश्चतुर्मुखश्छन्दो गायत्री देवता मनोः ॥ २८ ॥
दक्षिणामूर्त्तिराख्यातो वेदव्याख्यानतत्परः ।
तारबद्धैः स्वरैर्दीर्घैः षड्भिरङ्गानि कल्पयेत् ॥ २९ ॥
अथवा मन्त्रसम्भूतैः पदैर्वा कल्पयेत् क्रमात् ।
पूर्वोक्तवटमूलस्थं चिन्तयेन्मन्त्रनायकम् ॥ ३० ॥

स्फटिकरजतवर्णं मौक्तिकीमक्षमाला-
ममृतकलसविद्यां ज्ञानमुद्रां कराग्रैः ।
दधतमुरगकक्षं चन्द्रचूड़ं त्रिनेत्रं
विधृतविविधभूषं दक्षिणामूर्त्तिमीड़े ॥ ३१ ॥

लक्षमेकं जपेन्मन्त्रं ब्रह्मचारिव्रते स्थितः ।
जुहुयात् सघृतैः पद्मैर्दशांशं संस्कृतेऽनले ॥ ३२ ॥
पूर्वोदिते यजेत् पीठे वक्ष्यमाणेन वर्त्मना ।
अङ्गान्यभ्यर्चयेद्वाह्ये पत्रेष्वष्टसु पूजयेत् ॥ ३३ ॥
सरस्वतीं वाचयन्तीं पुस्तकं सस्मिताननाम् ।
ब्रह्माणं सनकं पश्चात् सनन्दनमतः परम् ॥ ३४ ॥
सनत्कुमारनामानं शुकं व्यासं गणेश्वरम् ।
सिद्धगन्धर्वयोगीन्द्रविद्याधरगणान् बहिः ॥ ३५ ॥
बाह्ये लोकेश्वरानर्चेद्वज्राद्यायुधसंयुतान्
इत्थं पूजादिभिः सिद्धे मन्त्रेऽस्मिन् साधकोत्तमः ॥ ३६ ॥
वल्लभो जायते वाचां वाचस्पतिरिवापरः ।
मन्त्रेणानेन संजप्तैर्विशुद्धैः सलिलैः सुधीः ॥ ३७ ॥
अभिषिञ्चेत् स्वशिरसि श्रियमारोग्यमाप्नुयात् ।
कण्ठमात्रोदके स्थित्वा जपेन्मन्त्रं सहस्रकम् ॥ ३८ ॥
प्रयहं मण्डलादर्वाक् कवीनामग्रणीर्भवेत् ।
गौर्य्या पार्श्वस्थया सार्द्धं श्रीकामो चिन्तयेद् विभुम् ॥३९॥
अयुतं प्रजपेन्मन्त्रं भूयसीं श्रियमाप्नुयात् ।
भुञ्जानः प्रयतो मन्त्री गोमूत्रे शृतमोदनम् ॥ ४० ॥
भिक्षान्नमथवा मन्त्रमयुतद्वितयं जपेत् ।
अश्रुतान् वेदशास्त्रादीन् व्याचष्टे नात्र संशयः ॥ ४१ ॥
सिद्धगन्धर्वमुनिभिर्योगीन्द्रैरपि सेवितौ ।
ज्ञानवागर्थिनां प्रोक्तौ कथितौ मन्त्रनायकौ ॥ ४२ ॥

लोहितोऽम्थासनः सद्यो विन्दुमान् प्रथमं ततः ।
द्वितीयं वह्निबीजस्था दीर्घा शान्तिः सुभूषिता ॥ ४३ ॥
तृतीयं लाङ्गली सर्गी मन्त्रो बीजत्रयान्वितः ।
नीलकण्ठात्मकः प्रोक्तो विषद्वयहरः परः ॥ ४४ ॥
हरद्वयं वह्निजाया हृदयं परिकीर्त्तितम् ।
कपर्दिने ठयुगलं शिरोमन्त्र उदाहृतः ॥ ४५ ॥
नीलकण्ठाय ठद्वन्द्वं शिखामन्त्रोऽयमीरितः ।
कालकूटपदस्यान्ते विषभक्षणङेयुतम् ॥ ४६ ॥
हुं फट् कवचमादिष्टं विद्वद्भिर्नीलकण्ठिने ।
स्वाहान्तमन्त्रमेतानि पञ्चाङ्गानि मनोविदुः ॥ ४७ ॥
मूर्ध्नि कण्ठे हृदम्भोजे क्रमाद्वीजत्रयं न्यसेत् ।
ततः समाहितो भूत्वा नीलकण्ठं विचिन्तयेत् ॥ ४८ ॥
बालार्कायुततेजसं धृतजटाजूटेन्दुखण्डोज्ज्वलं
नागेन्द्रैः कृतभूषणं जपवटीं शूलं कपालं करैः ।
खट्वाङ्गं दधतं त्रिनेत्रविलसत्पञ्चाननं सुन्दरं
व्याघ्रत्वक्परिधानमब्जनिलयं श्रीनीलकण्ठं भजे ॥ ४९
लक्षत्रयं जपन्मन्त्रं तद्दशांशं ससर्पिषा ।
हविषा जुहुयात् सम्यक् संस्कृते हव्यवाहने ॥ ५० ॥
शैवे पीठे यजेद्देवं मृत्युञ्जयविधानतः ।
एवं पूजादिभिः सिद्धे मनौ मन्त्री विषद्वयम् ॥ ५१ ॥
नाशयेदचिरादेव नीलकण्ठ इवापरः ।
मनुनानेन संजप्तैः कुम्भस्थैः सलिलैः शुभैः ॥ ५२ ॥
अभिषिञ्चेद्विषाक्रान्तं स विषान्मुच्यते ध्रुवम् ।
स्पृष्ट्वा जपेद्विषग्रस्तं तत्क्षणात् निर्विषो भवेत् ॥ ५३ ॥
बीजाभ्यां प्रथमान्ताभ्यां पार्श्वयोर्विषमाहरेत् ।
मध्येन मध्यगं सर्वं मनुनानेन संहरेत् ॥ ५४ ॥

बहुना किमिहोक्तेन मन्त्रेणानेन मन्त्रितम्।
कालकूटं विषं साक्षात् भुक्तं स्यात् परमामृतम्॥ ५५॥
अग्निसंवर्त्तकादित्यावनिलौ षष्ठबिन्दुमान्।
चिन्तामणिरिति ख्यातं बीजं सर्वसमृद्धिदम्॥ ५६॥
काश्यपो मुनिराख्यातश्छन्दोऽनुष्टुबुदाहृतम्।
अर्द्धनारीश्वरः प्रोक्तो देवता जगतां पतिः।
रेफादिव्यञ्जनैः षड्भिः कुर्य्यादङ्गानि षट् क्रमात्॥ ५७॥

नीलप्रवालरुचिरं विलसत्रिनेत्रं
पाशाङ्कुशोत्पलकपालशूलहस्तम्।
अर्द्धाम्बिकेशमनिशं प्रविभक्तभूषं
बालेन्दुबद्धमुकुटं प्रणमामि रूपम्॥ ५८॥

एकलक्षं जपेद्बीजमित्थं मन्त्री विचिन्तयन्।
अयुतं मधुरासिक्तैर्जुहुयात्तिलतण्डुलैः॥ ५९॥
शैवोदिते यजेत् पीठे प्रागङ्गैः षड्भिरीरितैः।
वृषाद्यैर्मातृभिः पश्चाल्लोकपालैस्तदायुधैः॥ ६०॥
एवमभ्यर्चयेद् देवमर्द्धनारीश्वरं परम्।
तेजःकान्तियशोलक्ष्मीवाचां भवति वल्लभः॥ ६१॥
प्रासादाख्यं जपेन्मन्त्रमयुतं रोगशान्तये।
स्वराहृतमिदं बीजं विगलत्परमामृतम्॥ ६२॥
चन्द्रबिम्बस्थितं मूर्ध्नि ध्यातं क्ष्वेडगदापहम्।
प्रतिलोमस्वरावीतं बीजं वह्निगृहे स्थितम्॥ ६३॥
रेफादिव्यञ्जनोल्लासिषट्कोणाभिहतं बहिः।
भूतार्त्तस्य स्मृतं मूर्ध्नि भूतमाशु विनाशयेत्॥ ६४॥
बीजं चन्द्रगतं वीतं स्वरैः षोड़शभिः क्रमात्।
गलत्परसुधापूर्णं नेत्रे ध्यातं रुजं हरेत्॥ ६५॥
एवमेव स्मृतं बीजं कुक्षौ शूलादिरोगनुत्।

स्फोटे विषज्वरे दाहे मोहे शीर्षगदे भ्रमे ॥ ६६ ॥
बीजमेतत्तथा ध्यातं तत्तत्क्लेशान् विनाशयेत्।
कुङ्कुमाभमिदं बीजं त्रिकोणगतमुज्ज्वलम् ॥ ६७ ॥
यस्य मूर्ध्नि स्मरेन्मन्त्री स वश्यो जायतेऽचिरात्।
ऊर्द्ध्वरेफस्थसाध्याख्यं बीजं वह्निगृहे स्थितम् ॥ ६८ ॥
वह्निगृहद्वयेनाग्नियुक्तकोणेन संवृतम्।
प्रतिलोमस्वरावीतं चुल्लीस्थाने निवेशितम् ॥ ६९ ॥
वशीकरोति रमणीमचिरेणैव दासवत्।
मधुरत्रययुक्तेन शालिपिष्टेन पुत्तलीम् ॥ ७० ॥
कृत्वा प्रतिष्ठितप्राणां विभज्य जुहुयाद्वशी।
त्रिवासरमनेनैव साध्यस्तस्य वशी भवेत् ॥ ७१ ॥
मकारगतसाध्याख्यमनलस्थ गदाह्वयम्।
चन्द्रगञ्चतुरस्रेण टान्तकोणेन वेष्टितम् ॥ ७२ ॥
बीजं ताम्बूलपत्रस्थं प्रजप्तं मनुनामुना।
भक्षितं नाशयेत् सम्यक् शिरोरोगं न संशयः ॥ ७३ ॥
लिखित्वा बन्धुबीजेन त्रिकोणं बीजगर्भितम्।
अत्र वह्निं समाधाय सम्यगाराध्य देवताम् ॥ ७४ ॥
जुहुयात् कृतसम्पातं सर्पिषाष्टोत्तरं शतम्।
सम्पाताज्येन संसिक्ता त्रिलोहकृतमुद्रिका।
विधृता भूतवेतालकृत्यारोगविनाशिनी ॥ ७५ ॥
ऊर्द्ध्ववह्निसहितं मनुमेनं वह्निगेहयुगले परिलिखितम्।
अग्निमस्विषु महीपुरा भृतं यन्त्रमेतदुदितं ग्रहवैरि ॥ ७६ ॥
अग्निबीजलसत्कोणत्रिकोणे लिखिते भुवे।
शरावे कपिलाज्याक्तसूत्रदीपं प्रविन्यसेत् ॥ ७७ ॥
घटेनैव पिधायास्य पृष्ठे यन्त्रमिदं लिखेत्।
भूतार्त्तमत्र संस्थाप्य चिन्तामणिमनुं जपेत्।

तमाविश्य चणान्मुञ्चेद् ग्रहः क्रूरोऽपि सर्वथा ॥ ७८ ॥
कृशानुभवनद्वये मनुमिमं लिखित्वा पुन-
स्तदंस्रिषु हलो लिखेत् स्वरयुगं ततः सन्धिषु ।
भ्रुवेण परिवेष्टितं धरणिगेहमध्यस्थितं ।
मनोरथफलप्रदं भवति यन्त्रमेतन्नृणाम् ॥ ७९ ॥
ाट्कोणान्तस्त्रिकोणे लिखतु मनुमिमं साध्यनामाचराढ्यं
ाट्कोणेष्वङ्गमन्त्रान् वसुदलविवरेष्वष्टमन्त्राक्षराणि ।
ीतं बाह्ये कलाभिस्तदनुपरिवृतं कादिभिर्वादिभिस्तत्
ौणीविम्बेन युक्तं नृहरिमनुयुजं यन्त्रमापद्ग्रहघ्नम् ॥ ८० ॥
अस्मिन् यन्त्रे प्रतिष्ठाप्य कलसं प्रोक्तवर्त्मना ।
कृतोऽभिषेकः स्यात् कृत्याभूतद्रोहादिशान्तिदः ॥ ८१ ॥
स्वरावृतमनुं लिखत्तटान्तमध्ये ततः
षडस्रिषु हुताशनं तदनु कादिवर्णैर्वृतम् ।
धरापुरयुगेन तं नृहरिवीजयुक्तास्रिणा
प्रवेष्टितमुदाहृतं दुरितरोगकृत्यापहम् ॥ ८२ ॥
चकारोमाग्निपवनवामकर्णार्द्धचन्द्रवान् ।
उक्तं तुम्बुरुवीजन्तु येन सिध्यन्ति साधकाः ॥ ८३ ॥
षड्दीर्घभाजा वीजेन षडङ्गानि प्रकल्पयेत् ।
चकाररहितं वीजं क्रमात् नभसहान्वितम् ॥ ८४ ॥
चत्वारि देवीवीजानि देव्यास्त्रेया इमाः क्रमात् ।
जयाख्या विजया पश्चादजिता चापराजिता ॥ ८५ ॥
वीजमङ्गुलिषु न्यस्य करयोर्व्यापकं ततः ।
कनिष्ठादिषु विन्यस्येत् षडङ्गानि तलावधि ॥ ८६ ॥
देव देवी स्ववीजानि कनिष्ठादिषु विन्यस्येत् ।
पादात् मूर्द्धावधि न्यस्येन्मुष्टिनावयवेषु तत् ॥ ८७ ॥
तलाभ्यां व्यापकं कुर्य्यान्मूर्द्धादिचरणावधि ।

षडङ्गानि ततो न्यस्येद् यथास्थानं विशालधीः ॥ ८८ ॥
देवं देवीर्यथा पूर्वं मूर्द्धास्ये हृदयाम्बुजे ।
नाभौ गुह्ये क्रमान्मन्त्रस्य पश्चाद्देवं विचिन्तयेत् ॥ ८९ ॥

रक्ताभमिन्दुशकलाभरणं त्रिनेत्रं
खट्वाङ्गपाशसृणिशुभ्रकपालहस्तम् ।
वेदाननं निबिड़नासमनर्घ्यभूषं
रक्ताङ्गरागकुसुमांशुकमीशमीडे ॥ ९० ॥

लक्षमाणं जपेन्मन्त्रं जुहुयात् सर्पिषा युतम् ।
वक्ष्यमाणे यजेत् पीठे देवमावरणैः सह ॥ ९१ ॥
नपुंसकस्वरैर्विद्वाननुलोमविलोमगैः ।
धर्मादिकानधर्माद्यान् पादान् गात्राणि विन्यसेत् ॥ ९२ ।
हकारेण न्यसेत् पश्चादूर्ध्वरूपान् गुणानथ ।
शान्त्या तत्परवर्णेन मायाविद्यामयैः क्रमात् ॥ ९३ ॥
अधउर्द्ध्वच्छदे न्यस्येदधीशेन ततोऽम्बुजम् ।
सन्ध्यक्षरैर्यजेन्मन्त्री शक्तीर्वामादिकाः क्रमात् ॥ ९४ ॥
वामां ज्येष्ठां ततो रौद्रीमिच्छां ज्वालास्वरूपिणीम् ।
एवं प्रकल्पिते पीठे मूर्त्तिं मूलेन कल्पयेत् ॥ ९५ ॥
आवाह्य पूजयेद्देवं तस्यामावरणैः सह ।
अङ्गावृतेर्बहिर्देवीर्दिक्पत्रेषु समर्चयेत् ॥ ९६ ॥
जयाद्याः स्वस्वबीजेन रक्तारक्तानुलेपनाः ।
अरुणांशुकपुष्पाद्यास्ताम्बूलपूरिताननाः ॥ ९७ ॥
वल्लकीवादनपरा मदनोन्मथपीड़िताः ।
ईशादिकोणेष्वभ्यर्चेद् भूतीर्बीजादिकाः क्रमात् ॥ ९८ ॥
दुर्भगां सुभगां भूयः करालां मोहिनीमिमाः ।
बद्धाञ्जलिपुटाः किञ्चिद्दानम्रवदनाम्बुजाः ॥ ९९ ॥
देवीसदृशभूषाढ्या दूतीमन्त्रान् विदुः क्रमात् ।

चतुर: आदिकान् वर्णानर्द्धेन्दुकृतशेखरान्॥ १०० ॥
लोकपालान् यजेद्वाह्ये वज्राद्यायुधसंयुतान्।
एवं यो भजते भक्त्या देवमुक्तेन वर्त्मना॥ १०१ ॥
न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते।
वामवह्निपुरान्तस्थं वीजं स्मृत्वा जपेत् सुधी:॥ १०२ ॥
ज्वरभूतमहारोगा नश्यन्ति तेन तत्क्षणात्।
ऊर्वास्यहृदये ध्यात्वा जपेद्बीजमनन्यधी:॥ १०३ ॥
स वश्यो जायते शीघ्रं मन्त्रस्यास्य प्रभावत:।
हृद्रोगे कामला रोगे विष्टम्भे श्वासकासयो:॥ १०४ ॥
एतज्जप्तं जलं प्रात: पिबेद्रोगोपशान्तये।
कृत्वा नवपदात्मानं मण्डलं तत्र शोभनम्॥ १०५ ॥
कलसान् स्थापयेन्मन्त्री नव पूर्वोक्तलक्षणान्।
मध्ये देवं यजेत् सम्यग् देवी: पूर्वादिकुम्भगा:॥ १०६ ॥
ईशकोणस्थिता दूतीरभिषिञ्चेत् पतिव्रता।
नारी सा लभते पुत्रं बन्ध्यापि किमुतापरा॥ १०७ ॥
भूतकृत्याग्रहद्रोहशान्तिद: सम्पदावह:।
अभिषेकोऽयमाख्यातो राज्ञां विजयवर्द्धन:॥ १०८ ॥
अन्तर्वीजं स्वरगणलसत्केशरं तस्य बाह्ये
देवी दूतीमनुयुतदलं दिक्षुविदिक्षु क्रमेण।
काद्यैर्वर्णैर्वृतमथ बहिर्भूमिगेहेन वीतं
यन्त्रं प्रोक्तं सकलसुखदं रोगकृत्याग्रहघ्नम्॥ १०९ ॥
प्रणवो हृदयं पश्चात् ङेन्तं पशुपतिं पुन:।
व्याघ्रचर्मपदस्यान्ते परिधानाय तत्परम्॥ ११० ॥
शशाङ्ककृतशब्दान्ते शेखराय तत: परम्।
कृष्णसर्पपदं पश्चात्ततो यज्ञोपवीतिने॥ १११ ॥
चलयुग्मं वलयुगमग्निवर्त्तकपालिने।

हलयुग्मं ततो भूतांस्त्रासय द्वितयं पुनः॥ ११२॥
भूमौ मण्डलमध्ये स्यात् कलयुग्मं ततः परम्।
रुद्राङ्कुशेन शमय प्रवेशय युगं ततः॥ ११३॥
आवेशय युगं पश्चाच्चण्डादि पदमीरयेत्।
धाराधिपतिरुद्रोऽथ ज्ञापयत्यग्निसुन्दरी॥ ११४॥
खड्गरावणमन्त्रोऽयं सप्तमूर्द्धशताक्षरः।
भूताधिपतये स्वाहा पूजामन्त्रोऽयमीरितः॥ ११५॥
सत्यादिपञ्चकस्याद्यकान्तबीजादिकान् न्यसेत्।
ईशानाद्याः पञ्चमूर्त्तीर्देहे वक्त्रेषु च क्रमात्।
षड्दीर्घबिन्दुयुक्तेन कान्तेनाङ्गक्रिया मता॥ ११६॥

घण्टाकपालसृणिमुण्डकपाशखेट-
खट्वाङ्गशूलडमरूं ह्यभयं दधानम्।
रक्ताम्बुमिन्दुसकलाऽऽरणं त्रिनेत्रं
पञ्चाननाञ्जमरुणांशुकमीशमीड़े॥ ११७॥

अयुतद्वितयं मन्त्रं जपित्वा तद्दशांशतः।
पायसेन घृताक्तेन जुहुयात्तस्य सिद्धये॥ ११८॥
पश्चाच्चरोदिते पीठे पूजयेत् खड्गरावणम्।
बीजेन मूर्त्तिक्ऌप्तिः स्यात्तत् कान्ते मनुबिन्दुमत्॥११९॥
अङ्गानि दलमूलेषु भूतीः पत्रेषु संयजेत्।
द्विलचाणां प्रस्फुलिनीं तृतीयां कृष्णपिङ्गलाम्॥ १२०॥
फाल्गुनीं टीविटिनीं पञ्चमीं मन्त्रमालिकाम्।
सप्तमीं शङ्खिनीं पश्चाचन्द्राङ्कितजटामिमाम्॥ १२१॥
पूर्वपश्चादि सव्येन खड्गधारणवल्लभाम्।
ऐन्द्रीं कौमारिकीं ब्राह्मीं वाराहीं वैष्णवीं पुनः॥ १२२॥
वैनायिकीञ्च चामुण्डां माहेशीं दिक्षु पूजयेत्।
द्वारपालान् यजेद्दिक्षु द्वौ द्वौ प्रागादिदेशिकः॥ १२३॥

रौद्रपिङ्गलनामानौ द्वौ श्मशानाङ्गभीषणौ।
दृढ़कर्णं भृङ्गरिटिमुदीच्यामर्चयेत् पुनः॥ १२४॥
आमर्दकमहाकालौ कोणपालान् यजेत्ततः।
कुम्भवर्णमल्यकाख्यं भल्लाटं जातहारकम्॥ १२५॥
इन्द्रादिकान् लोकपालान् सायुधान् प्रयजेत्ततः।
धूपदीपादिभिर्देवं प्रीणयित्वा महेश्वरम्॥ १२६॥
पञ्चकूराम्भसा चाज्ये ततो भूतबलिं हरेत्।
एवं पूजादिभिः सिद्धे मन्त्रे मन्त्रविदांवरः॥ १२७॥
नाशयेत् सकलान् भूतान् कृत्याग्रहमहाभयान्।
आदेशं तस्य कुर्वन्ति भूता भीता महात्मनः॥ १२८॥
बहुना किमिहोक्तेन मन्त्रेणानेन भूतले।
सदृशो नास्ति मन्त्रोऽन्यो भूतनिग्रहसाधनः॥ १२९॥
इति सारदातिलके ऊनविंशः पटलः।

---

## विंशः पटलः।

अथाभिधास्ये विधिवद् घोरास्त्रमनुमुत्तमम्।
यस्य संस्मरणादेव सर्वे नश्यन्त्युपद्रवाः॥ १॥
मायास्फुरद्वयं भूयः प्रस्फुरद्वितयं ततः।
घोरघोरतरेत्यन्ते तनुरूपपदं पुनः॥ २॥
चटयुग्मं तदन्ते स्यात् प्रचटद्वितयं ततः।
करयुगं रमदन्द्वं ततो बन्धयुगं पुनः॥ ३॥
घातय द्वितयं वर्मफड़न्तः समुदीरितः।
एकपञ्चाशदर्णोऽयमघोरास्त्रमहामनुः॥ ४॥
अघोरोऽस्य मुनिः प्रोक्तश्छन्दस्त्रिष्टुबुदाहृतम्।
अघोरमन्त्रः सन्दिष्टो देवता मन्त्रवित्तमैः॥ ५॥

हृदयं पञ्चभिः प्रोक्तं शिरः षड्भिरुदाहृतम् ।
शिखा दशभिराख्याता तावद्भिः कवचं हृतम् ॥ ६ ॥
वसुवर्णैः स्मृतं नेत्रं मासार्णैरस्त्रमीरितम् ।
मूर्द्धनेत्रास्यकण्ठेषु स्तनाभ्यङ्गुरुषु क्रमात् ॥ ७ ॥
जानुजङ्घापदद्वन्द्वे रुद्रभिन्नाक्षरैर्न्यसेत् ।
पञ्चभिश्च पुनः षड्भिर्द्वाभ्यामष्टभिरक्षरैः ॥ ८ ॥
चतुर्वर्णैः षड्वर्णैश्च करणैः करणैः पुनः ।
चतुर्भिः षड्भिरश्विभ्यां वर्णभेदोऽयमीरितः ॥ ९ ॥
सजलघनसमाभं भीमदंष्ट्रं त्रिनेत्रं
भुजगधरमघोरं रक्तवस्त्राङ्गरागम् ।
परशुडमरुखड्गान् खेटकं बाणचापौ
त्रिशिखनरकपाले बिभ्रतं भावयामि ॥ १० ॥
अभिचारे ग्रहध्वंसे कृष्णवर्णो भवेत् प्रभुः ।
वश्ये कुसुम्भसङ्काशो मुक्तौ चन्द्रसमप्रभः ॥ ११ ॥
लक्षमेकं जपेन्मन्त्रं घृतसिक्तैस्तिलैः शुभैः ।
तद्दशांशं प्रजुहुयान्मन्त्री मन्त्रस्य सिद्धये ॥ १२ ॥
शैवे संपूजयेत् पीठे षट्कोणस्थाब्जपङ्कजे ।
अङ्गपूजां केशरेषु कृत्वा पत्रेषु तत्परम् ॥ १३ ॥
परशुं डमरुं खड्गं खेटं बाणञ्च कार्मुकम् ।
शूलं कपालं प्रयजेदष्टाक्षराख्यस्य देशिकः ॥ १४ ॥
दलाग्रेषु ततः पूज्या ब्रह्म्याद्याः प्रोक्तलक्षणाः ।
लोकेशान् पूजयेत् सम्यगायुधैः स्वैः समन्वितान् ॥ १५ ॥
इति पूजादिभिः सिद्धे मन्त्रेणानेन साधकः ।
इष्टान् प्रयोगान् कुर्वीत सिद्धान्सोऽयं न संशयः ॥ १६ ॥
क्रमात् सर्पिरपामार्गतिलसर्षपपायसैः ।
साज्यैः सहस्रं प्रत्येकं यामिन्यां जुहुतात् सुधीः ॥ १७ ॥

होमोऽयं नाशयेत् सद्यो भूतकृत्याद्युपद्रवान्।
सितकिंशुकनिर्गुण्डीहेमापामार्गसम्भवैः॥ १८॥
समिद्वरैः कृतो होमः पूर्ववद् भूतशान्तिदः।
अपामार्गारग्वधयोः पञ्चगव्यसमुक्षिताः॥ १९॥
समिधो जुहुयात् कृष्णपञ्चम्यां निशि संयतः।
पृथक् सहस्रहोमेन भूतानां निग्रहो भवेत्॥ २०॥
क्रमात् सर्पिरपामार्गपञ्चगव्यहविर्घृतैः।
हुत्वा सहस्रं प्रत्येकं पात्रे सम्पातयेत् सुधीः।
सम्पातसर्पिषा साध्यं भोजयेद् भूतशान्तये॥ २१॥
मध्ये शक्तिं ससाध्यां स्वरगणसहितां केशरेष्वष्टवर्णान्
पत्रान्तर्मन्त्रवर्णान् लिखतु गुणमितानष्टदेशेषु तद्वत्।
वर्मास्त्रोल्लासिकोणे दहनपुरयुगे कल्पिते भूपुरस्थे
यन्त्रेऽस्मिन् प्राग्विधानात् कृतकलसविधिः सर्वदुःखापहारी २२
षट्कोणे शक्तिरन्तः स्फुरयुगलवृता प्रस्फुरद्वन्द्वकोणे
शिष्टैर्मन्त्रस्य वर्णैरसकरणचतुःषट्चतुर्वेदवेदैः।
षड्भिः क्रूमाष्टपत्रं दहनपुरयुगेनावृतं वर्मफड्भ्यां
राजत्कोणेन वीतं धरणिपुरगतं यन्त्रमाघोरमेतत्॥२३॥
क्षुद्रचौरग्रहव्यालभूतापस्मारनाशनम्।
यन्त्रमेतत् समाख्यातं सर्वसम्पत्प्रदायकम्॥ २४॥
तारो वान्तो धरासंस्थो वामनेत्रेन्दुभूषितः।
पार्श्वोरकः कर्णयुतो वर्मास्त्रान्तः षड़क्षरः॥ २५॥
मनुः पाशुपतास्त्राख्यो ग्रहक्षुद्रनिवारणः।
षड्भिरर्णैः षड़ङ्गानि हुँ फड़न्तैः सजातिभिः॥ २६॥
मध्याह्नार्कसमप्रभं शशिधरं भीमाट्टहासोज्ज्वलं
त्र्यक्षं पन्नगभूषणं शिखिशिखाश्मश्रुस्फुरन्मूर्द्धजम्।
हस्ताब्जैस्त्रिशिखं समुद्गरमसिं शक्तिं दधानं विभुं

दंष्ट्राभीमचतुर्मुखं पशुपतिं दिव्यास्त्ररूपं स्मरेत् ॥ २७ ॥
वर्णलक्षं जपेन्मन्त्रं जुहुयात्तद्दशांशतः ।
गव्येन सर्पिषा मन्त्री संस्कृते हव्यवाहने ॥ २८ ॥
शैवे पीठे यजेद् देवं प्रागङ्गैरष्टमातृभिः ।
इन्द्रादिभिर्लोकपालैर्वज्राद्यैरायुधैस्ततः ॥ २९ ॥
अनेन मन्त्रितं तोयप्रस्थस्य वदने क्षिपेत् ।
सद्यस्तं मुञ्चति क्रन्दन् ग्रहो मन्त्रप्रभावतः ॥ ३० ॥
अमुना मन्त्रितान् बाणान् विसृजेद् युधि भूपतिः ।
जयेत् क्षणेन निखिलाञ्छत्रून् पार्थ इवापरः ॥ ३१ ॥
वर्णाद्यमि विन्दुयुतं क्षेत्रपालाय हृन्मनुः ।
ताराद्यो वसुवर्णोऽयं क्षेत्रपालस्य कीर्त्तितः ।
षड्दीर्घभाजा बीजेन षडङ्गान्यस्य संयजेत् ॥ ३२ ॥

नीलाञ्जनाद्रिनिभमूर्द्ध्वपिशङ्गकेशं
वृत्तोग्रलोचनमुपात्तगदाकलापम् ।
आशाम्बरं भुजगभूषणमुग्रदंष्ट्रं
क्षेत्रेशमद्भुततनुं प्रणमामि देवम् ॥ ३३ ॥

लक्षमेकं जपेन्मन्त्रं जुहुयात्तद्दशांशतः ।
चरुणा घृतसिक्तेन ततः क्षेत्रेशमर्चयेत् ॥ ३४ ॥
धर्मादिकल्पिते पीठे पूर्वमङ्गानि पूजयेत् ।
अनलाख्यमग्निवेशं करालं तदनन्तरम् ॥ ३५ ॥
घण्टारवमहाकोपं पिशिताशनसंज्ञकम् ।
पिङ्गलाक्षमूर्ध्वकेशं पत्रेषु परितोऽर्चयेत् ॥ ३६ ॥
प्रधानमूर्त्तिप्रतिमान्नानालङ्कारसंवृतान् ।
लोकपालांस्तदस्त्राणि यथापूर्वं प्रपूजयेत् ॥ ३७ ॥
तस्मै सपरिवाराय बलिमेतेन निर्हरेत् ।
पूर्वमेतद् द्वयं पश्चाद्विदुषि स्यात् कुलद्वयम् ॥ ३८ ॥

भञ्जय द्वितयं भूयो नर्त्तय द्वितयं पुनः।
ततो विघ्नपदद्वन्द्वं महाभैरवतत्परम् ॥ ३९ ॥
क्षेत्रपालबलिं गृह्ण द्वयं पावकसुन्दरी।
बलिमन्त्रोऽयमाख्यातः सर्वकामफलप्रदः ॥ ४० ॥
सोपदंशं द्रव्यवत् पिण्डं कृत्वा रात्रिषु साधकः।
स्मृत्वा यथोक्तं क्षेत्रेशं तस्य हस्ते बलिं हरेत् ॥ ४१ ॥
बलिदानेन सन्तुष्टः क्षेत्रपालः प्रयच्छति।
कान्तिमेधाबलारोग्यतेजःपुष्टियशःश्रियः ॥ ४२ ॥
उदरे वटुकं ङेन्तमापदुद्धारणं तथा।
कुरु द्वयं पुनर्ङेन्तं वटुकं तं समुद्धरेत् ॥ ४३ ॥
एकविंशत्यक्षरात्मा शक्तियुक्तो महामनुः।
अभीष्टफलसंसिद्ध्यै कीर्त्तितः सुरपादपः ॥ ४४ ॥
अङ्गुलीदेहवक्त्रेषु मूर्त्तीर्न्यस्येद् यथा पुरा।
सद्यादिपञ्चह्रस्वाद्यशक्तिबीजपुरःसरम् ॥ ४५ ॥
वकारं पञ्चह्रस्वाद्यमीशानादिषु योजयेत्।
षड्दीर्घयुक्तया शक्त्या वकारेण च तद्वता ॥ ४६ ॥
अङ्गानि जातियुक्तानि प्रणवाद्यानि कल्पयेत्।
तस्या ध्यानं त्रिधा प्रोक्तं सात्त्विकादिविभेदतः ॥ ४७ ॥
वन्दे बालं स्फटिकसदृशं कुन्तलोल्लासिवक्त्रं
दिव्याकल्पैर्नवमणिमयैः किङ्किणीनूपुराद्यैः।
दीप्ताकारं विशदवसनं सुप्रसन्नं त्रिनेत्रं
हस्ताब्जाभ्यां वटुकमनिशं शूलदण्डौ दधानम् ॥ ४८ ॥

[ इति सात्त्विकं ध्यानम् ]

उद्यद्भास्करसन्निभं त्रिनयनं रक्ताङ्गरागस्रजं
स्मेरास्यं वरदं कपालमभयं शूलं दधानं करैः।
नीलग्रीवमुदारभूषणशतं शीतांशुचूडोज्ज्वलं

वन्दे वारणवाससं भयहरं देवं सदा भावये ॥ ४९॥

[राजसं ध्यानम्

ध्यायेन्नीलाद्रिकान्तं शशिशकलधरं मुण्डमालं महेशं
दिग्वस्त्रं पिङ्गकेशं डमरुमथसृणिं खड्गपाशाभयानि।
नागं घण्टां कपालं करसरसिरुहैर्बिभ्रतं भीमदंष्ट्रं
सर्पाकल्पं त्रिनेत्रं मणिमयविलसत्किङ्किणीनूपुराढ्यम् ॥ ५०॥

[तामसं ध्यान

सात्त्विकं ध्यानमाख्यातमपमृत्युनिवारणम्।
आयुरारोग्यजननमपवर्गफलप्रदम् ॥ ५१ ॥
राजसं ध्यानमाख्यातं धर्मकामार्थसिद्धिदम्।
तामसं शत्रुशमनं कृत्याभूतगदापहम् ॥ ५२ ॥
वर्णलक्षं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः।
तद्दशांशं प्रजुहुयात्तिलैर्मधुरसंयुतैः ॥ ५३ ॥
धर्माधर्मादिभिः क्लृप्ते पीठे पङ्कजशोभिते।
षट्कोणान्तस्त्रिकोणस्थे व्योमपङ्कजसंयुते ॥ ५४ ॥
वटुकं पूजयेद्देवं मूर्त्तिं मूलेन कल्पयेत्।
सद्योजातेन मन्त्रेण देवमावाहयेत्ततः ॥ ५५ ॥
मूलादिवामदेवेन स्थापयेत् परमेश्वरम् ।
मूलमन्त्रेण कर्त्तव्यं सान्निध्यं तदनन्तरम् ॥ ५६ ॥
अघोरेण सुधीः कुर्य्यात् सन्निरोधमनन्तरम्।
पुरुषाख्येन मनुना योनिमुद्रां प्रदर्शयेत् ॥ ५७ ॥
देवाय वन्दनं कुर्य्यादीशानेन समाहितः।
एतत् सर्वं विधातव्यं तत्तन्मुद्राभिरादरात् ॥ ५८ ॥
ईशानादीन् यजेद्देवान् न्यासमार्गेण देशिकः।
सकलीकरणं कृत्वा यजेन्मूर्त्तीर्यथा क्रमम् ॥ ५९ ॥
व्योमपद्मदलेष्वर्चेदसिताङ्गादिभैरवान्।

असिताङ्गं रुरुञ्चण्डं क्रोधोन्मत्तञ्च भैरवम् ॥ ६० ॥
कपालिनं भीषणाख्यं संहारञ्च क्रमादमून्।
षट्कोणेषु षडङ्गानि क्रमेणाभ्यर्चयेत् सुधीः ॥ ६१ ॥
पूर्वादीशानपर्य्यन्तं तद्बहिः पूजयेदिमान्।
डाकिनी-पुत्त्रकान् पूर्वं राकिनी-पुत्त्रकांस्ततः ॥ ६२ ॥
लाकिनी-पुत्त्रकान् पश्चात् काकिनी-पुत्त्रकांस्ततः।
साकिनी-पुत्त्रकान् भूयो हाकिनी-पुत्त्रकान् पुनः ॥ ६३ ॥
माकिनी-पुत्त्रकान् पश्चाद्देवी-पुत्त्रांस्ततः परम्।
अघोमारुद्रमातॄणां पुत्त्रान् दक्षिणतो यजेत् ॥ ६४ ॥
ऊर्ध्वमुख्याः सुतानूर्ध्वमधोमुख्याः सुतानधः।
इति संपूजयेन्मन्त्री पुत्त्रवर्गांस्त्रयोदश ॥ ६५ ॥
तद्बहिः पद्मपत्रेषु लोकेशवटुकान् यजेत्।
ब्रह्माणी-पुत्त्रकान् पूर्वे माहेशी-पुत्त्रमीश्वरे ॥ ६६ ॥
वैष्णवीपुत्त्रकं सौम्ये कौमारीपुत्रमानिले।
इन्द्राणीपुत्रकं भूयः पूजयेत् पश्चिमे ततः ॥ ६७ ॥
महालक्ष्मीसुतं पश्चान्नैर्ऋतदिशि समर्चयेत्।
वाराहीपुत्रकं याम्ये चामुण्डासुतमानले ॥ ६८ ॥
वटुकान् दशदिक्ष्वर्चेद्धेतुकं त्रिपुरान्तकम्।
वेतालं वह्निजिह्वाख्यं कालान्तकाख्यं करालकम् ॥६९॥
एकपादभीमदंष्ट्रमचलं हाटकेश्वरम्।
दिग्विदिक्ष्वन्तरालेषु श्रीकण्ठादीन् यजेत् पुनः ॥ ७० ॥
क्रोधीश्वरादिभृग्वन्तांस्तद्बाह्ये समर्चयेत्।
ततस्त्रिषु कुलीशाद्यान् दक्षिणे पूजयेत् सुधीः ॥ ७१ ॥
दिव्यान्तरीक्षभूमिस्थान् योगीशाञ्छक्तिसंयुतान्।
योगिनीभिः सहाभ्यर्चेदीशाग्निर्ऋतिस्थितान् ॥ ७२ ॥
इति संपूजयेद्देवं वटुकं प्रोक्तवर्त्मना।

धर्मार्थकाममोक्षाणां पतिर्भवति मानवः ॥ ७३ ॥
विघ्नं दुर्द्धर्षमाराध्य बलिं दत्त्वा विधानतः ।
काम्यानि साधयेन्मन्त्री यथोक्तां सिद्धिमाप्नुयात् ॥७४॥
शाल्यन्नं पललं सर्पिर्लाजचूर्णानि शर्कराः ।
गुड़मिक्षुरसापूपैर्मध्वक्तैः परिमिश्रितैः ॥ ७५ ॥
कृत्वा कवलमाराध्य देवं प्रागुक्तवर्त्मना ।
रक्तचन्दनपुष्पाद्यैर्निशि तस्मै बलिं हरेत् ॥ ७६ ॥
ततः सिध्यन्ति कार्य्याणि बलिनानेन मन्त्रिणः ।
जुहुयात् सर्पिषा मन्त्री यथोक्तां सिद्धिमाप्नुयात् ॥ ७७ ॥
वश्याय जुहुयाद् दिक्षु शकलैर्वशयेज्जनान् ।
जुहुयात् पुत्रलाभाय प्रफुल्लैः कैरवैः सुधीः ॥ ७८ ॥
धनधान्यादिसम्पत्त्यै जुहुयात्तिलतण्डुलैः ।
विल्वप्रसूनैर्जुहुयान्महतीं विन्दति श्रियम् ॥ ७९ ॥
लोलैर्मधुरसंमिश्रैर्वशयेदहितान् जनान् ।
वृष्टिकामेन होतव्यं वेतसानां समिद्वरैः ॥ ८० ॥
अन्नेन जुहुयान्नित्यं धनधान्यादिसम्पदे ।
वश्याय जुहुयान्मन्त्री मधुना दिवसत्रयम् ॥ ८१ ॥
रोगोक्तौषधहोमेन रोगा नश्यन्ति तत्क्षणात् ।
कृत्याद्रोहे ग्रहद्रोहे भूतापस्मारसम्भवे ॥ ८२ ॥
व्याघ्राजिने समासीनो जुहुयादयुतं तिलैः ।
भूतादयः पलायन्ते नेक्षन्ते तान् दिशो भयात् ॥ ८३ ॥
कृष्णाष्टमीं समारभ्य यावत् स्यात्तु चतुर्दशी ।
तिलैस्तण्डुलसंमिश्रैर्मधुरत्रयलोलितैः ॥ ८४ ॥
त्रिसहस्रं प्रतिदिनं जुहुयात् संस्कृतेऽनले ।
वटुकेश्वरमभ्यर्च्य भक्ष्यभोज्यफलान्वितम् ॥ ८५ ॥
नित्यं निवेद्य नैवेद्यं मध्यरात्रे बलिं हरेत् ।

एवं जपित्वा प्रयत: सहस्राण्येकविंशतिम् ॥ ८६ ॥
समाप्तिदिवसे रात्रावाज्यं हुत्वा बलिं हरेत् ।
तत: कारयिता राजा तोषयेत् साधकं धनै: ॥ ८७ ॥
विधिनानेन सन्तुष्टो वटुकेश: प्रयच्छति ।
तेजो बलं यश: पुत्रान् कान्तिं लक्ष्मीमरोगिताम् ॥८८॥
नश्यन्ति शत्रव: सर्वे वर्द्धन्ते बन्धुबान्धवा: ।
अवग्रहो न जायेत विषये तस्य भूपते: ॥ ८९ ॥
जुहुयात् केवलैर्लोणैरयुतं स्तम्भनेच्छया ।
निगड़ादिविमोक्षाय प्रयोगोऽयमुदाहृत: ॥ ९० ॥
वचाचूर्णपलं जप्तं गव्येनाज्येन लोडितम् ।
विभज्य भक्षयेद्दस्यां मण्डलं पुत्रकाङ्क्षिणीम् ॥ ९१ ॥
विनीतं पुत्रमाप्नोति मेधारोग्यबलान्वितम् ।
आदावन्ते प्रयोगस्य वटुकाय बलिं हरेत् ॥ ९२ ॥
द्विविधो बलिराख्यातो राजस: सात्त्विको बुधै: ।
राजसो मांसरक्ताढ्य: फलत्रयसमन्वित: ॥ ९३ ॥
मुद्गपायससंयुक्तो मधुरत्रयलोडित: ।
सात्त्विको मांसरहित: शेषमन्यत् पुरोक्तवत् ॥ ९४ ॥
ब्राह्मणो नियत: शुद्ध: सात्त्विकं बलिमाहरेत् ।
साधयेन्मनुनानेन भक्तसर्वार्थसिद्धिदम् ॥ ९५ ॥
उशीरं चन्दनं कुष्ठं घनसारं सकुङ्कुमम् ।
श्वेतार्कमूलं वाराहीं लक्ष्मीं क्षीरमहीरुहाम् ॥ ९६ ॥
त्वचो बिल्वतरोर्मूलं शोधयित्वास्य चूर्णयेत् ।
चूर्णं व्योम्नि गृहीतेन गोमयेन विमिश्रितम् ॥ ९७ ॥
कृत्वा पिण्डानि संशोष्य संस्कृते हव्यवाहने ।
मूलेन दग्ध्वा तद्भस्म शुद्धे पात्रे विनिक्षिपेत् ॥ ९८ ॥
केतकीमालतीपुष्पैर्वासयेन्मन्त्रशोधितम् ।

अयुतं प्रजपेन्मन्त्रं स्पृष्ट्वा भस्म सुपूजितम् ॥ ९९ ॥
एतदादाय दिनशः प्रातः पुण्ड्रं करोति यः ।
तस्य रोगाः प्रणश्यन्ति कृत्याद्रोहमहाग्रहाः ॥ १०० ॥
रिपुचौरमृगादिभ्यो भयमस्य न जायते ।
वर्द्धन्ते सम्पदः सर्वाः पूज्यते सकलैर्जनैः ॥ १०१ ॥
राजा वश्यो भवेत्तस्य सामात्यः सपरिच्छदः ।
अभिषेकं प्रकुर्वीत राज्ञो विजयकाङ्क्षिणः ॥ १०२ ॥
पूर्वोक्ते मण्डले क्लृप्ते वितानध्वजशोभिते ।
सर्वतोभद्रमालिख्य कर्णिकां तस्य पूरयेत् ॥ १०३ ॥
अष्टद्रोणप्रमाणेन शालिभिः शोधितैः शुभैः ।
तदूर्ध्वं तण्डुलांस्तस्मिन् न्यस्य दूर्वाक्षतान्वितान् ॥ १०४ ॥
हेमादिविहितं कुम्भं नवरत्नसमन्वितम् ।
संस्थाप्य विमलैस्तोयैरापूर्य्यास्मिन् विनिःक्षिपेत् ॥ १०५ ॥
क्षीरद्रुमप्रवालानि लक्ष्मीं दूर्वां सहां पुनः ।
कर्पूरं चन्दनं विल्वमुशीरं कुङ्कुमं पुनः ॥ १०६ ॥
कक्कोलमगुरुं जातिं मल्लिकाचम्पकोत्पलैः ।
गोमेदं दाड़िमं पश्चात् पट्टयुग्मेन वेष्टयेत् ॥ १०७ ॥
तस्मिन्नावाह्य वटुकं राजसं सम्प्रपूजयेत् ।
बहिरष्टसु कुम्भेषु भैरवानष्ट पूजयेत् ॥ १०८ ॥
त्रयोदशसु कुम्भेषु त्रयोदशगणान् यजेत् ।
वाह्ये दशसु कुम्भेषु लोकेशानर्चयेत् सुधीः ॥ १०९ ॥
तद्बहिर्द्वाष्टकुम्भेषु श्रीकण्ठादीन् सुरेश्वरान् ।
पञ्चत्रिंशद्घटेष्वर्चेत् कादिवर्णेश्वरान् क्रमात् ॥ ११० ॥
इति गन्धादिभिः सम्यक् पञ्चावरणमर्चयेत् ।
अयुतं प्रजपेत् स्पृष्ट्वा प्रत्यहं बलिमाहरेत् ॥ १११ ॥
राजसोक्तप्रकारेण राज्ञी देशिकसत्तमः ।

सुदिने शोभने लग्ने वाचयित्वा द्विजन्मभिः॥ ११२॥
स्वस्ति मङ्गलवाक्यानि विशुद्धैर्वेदपारगैः।
नदत्सु पञ्चवाद्येषु प्रणम्य वटुकेश्वरम्॥ ११३॥
जितेन्द्रियं शुद्धकायं राजानं ब्राह्मणप्रियम्।
आस्तिकं सत्यवचनमभिषिञ्चेत् प्रसन्नधीः॥ ११४॥
अभिषिक्तो नरपतिः प्रणिपत्य गुरुं परम्।
भूयसीं दक्षिणां दद्यात् प्रसीदति यथा गुरुः॥ ११५॥
राजाभिषिक्तो भवति साक्षाद्भूमिपुरन्दरः।
परान् विजयते भूपांस्तूयते सकलैर्नरैः॥ ११६॥
कृताभिषेकः संन्यासं प्रतिमासं महीपतिः।
चतुरम्भोधिवलयां शास्ति सर्वां वसुन्धराम्॥ ११७॥
गजाश्वशान्तिविषये तेषां शालासु साधकः।
कुण्डं कृत्वा विधानेन होमं कुर्य्याद् यथाविधि॥ ११८॥
पायसाज्यतिलैर्विद्वानयुतत्रितयावधि।
ब्राह्मणान् भोजयेन्नित्यं भक्ष्यभोज्यफलादिभिः॥ ११९॥
प्राक्प्रोक्तविधिना कुम्भान् स्थापयित्वात्र देशिकः।
अभ्यर्च्य गन्धपुष्पाद्यैस्तज्जलैः प्रोक्षयेद्गजान्॥ १२०॥
अश्वशाला ह्यनेनैव वर्द्धन्ते च दिने दिने।
युद्धेषु महती शक्तिर्जायते पूर्वतोऽधिका॥ १२१॥
सर्वे रोगाः प्रणश्यन्ति कृत्याद्रोहाः परैः कृताः।
अस्मात् परतरा रक्षा नास्ति तेषां महीतले॥ १२२॥
अभिषिञ्चेन्महीपालं परेषां विजयोद्यतम्।
उक्तेन विधिना मन्त्री यामिन्यां बलिमाहरेत्॥ १२३॥
अन्यूनाङ्गमजं हत्वा राजसं प्रागुदीरितम्।
बलिप्रदानसमये रिपूणां सर्वसैन्यकम्॥ १२४॥
निवेदयेद् बलित्वेन वटुकाय विशिष्टधीः।

विदर्भयेच्छत्रुनाम्ना बलिमन्त्रं तथा सुधीः ॥ १२५ ॥
शत्रुपक्षस्य रुधिरं पिशितञ्च दिने दिने ।
भक्षयस्व गणैः सार्द्धं सारमेयसमन्वितः ॥ १२६ ॥
बलिमन्त्रोऽयमाख्यातः सर्वेषां विजयप्रदः ।
अनेन बलिना हृष्टो वटुकः परसैन्यकम् ॥ १२७ ॥
सर्वं गणेभ्यो विभजेदामिषं क्रुद्धमानसः ।
एवं कृते परबलं क्षीयते नात्र संशयः ।
विजयश्रियमेतेन राजा प्राप्नोत्यतन्द्रितः ॥ १२८ ॥
श्रीमायास्मरकूटमत्र विलिखेन्मध्ये दलेष्वष्टसु
द्विःप्रोक्तं वटुकाय शब्दमपरान् मन्त्रस्य वर्णान् बहिः ।
अष्टद्वन्द्वदलेषु तद्बहिरतस्तत्संख्यपत्रेष्वथ
द्वात्रिंशद्दलकादिसान्तसहितं यन्त्रं लिखेद् भूपुरे ॥१२९॥
अपमृत्युहरं यन्त्रमपमृत्युभयापहम् ।
सर्वसम्पत्प्रदं नित्यं सर्वसौभाग्यदायकम् ॥ १३० ॥
रक्षाकरं ग्रहार्त्तानां राज्ञां विजयवर्द्धनम् ।
आपदुद्धारणादस्मादापदुद्धरणक्रमः ॥ १३१ ॥
तन्त्रेषु नास्ति मन्त्रोऽन्य इत्याहुस्तन्त्रवेदिनः ।
अर्घीशो वह्निशिखरोलान्तस्थो दान्त ईरितः ॥ १३२ ॥
फडन्तश्चण्डमन्त्रोऽयं त्रिवर्णात्मा समीरितः ।
अस्य त्रिको मुनिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ॥ १३३ ॥
चण्डेशो देवता प्रोक्ता कुर्य्यादङ्गविधिं पुनः ।
हृदयं फड़िति प्रोक्तं ज्वलफट् शिर ईरितम् ॥ १३४ ॥
शिखाज्वालिनीफट् तद्वत् फट् कवचं मतम् ।
हन फट् नेत्रमाख्यातं सर्वज्वालिनि फट् परम् ।
विन्यस्यैवं षडङ्गानि ततो देवं विचिन्तयेत् ॥ १३५ ॥
चण्डेश्वरं रक्ततनुं त्रिनेत्रं रक्तांशुकाढ्यं हृदि भावयामि ।

ङ्गं त्रिशूलं स्फटिकाक्षमालां कमण्डलुं बिभ्रतमिन्दुचूडम् ॥ १३६ ॥

वर्णलक्षं जपेन्मन्त्रं होमं कुर्य्याद्दशांशत: ।
मधुरत्रयसंयुक्तैर्विशुद्धैस्तिलतण्डुलै: ॥ १३७ ॥
पञ्चाक्षरोदिते पीठे चण्डेशं साधु पूजयेत् ।
मूर्त्तौ वीजेन क्लृप्तायां तत् कूर्मं विन्दुसंयुत: ॥ १३८ ॥
चण्डेश्वराय हृद्वीजपूर्व: पूजामनुर्मत: ।
अङ्गैर्मातृभिराशेशैर्वज्राद्यैरायुधैर्यजेत् ॥ १३९ ॥
चतुरावरणं प्रोक्तं चण्डेशस्य समर्चनम् ।
इति सिद्धे मनौ मन्त्री धनवान् जायतेऽचिरात् ॥ १४० ॥
तर्पयेन्मनुनानेन नित्यमष्टोत्तरं शतम् ।
श्रियमाप्नोति महतीं पुत्रमित्रसमन्विताम् ॥ १४१ ॥
प्रियङ्गुकुसुमै: फुल्लैस्तत्काष्ठज्वलितेऽनले ।
जुहुयादयुतं मन्त्री पुर:क्षोभ: प्रजायते ॥ १४२ ॥
साध्यवृक्षत्वचो लोणं पिष्ट्वा पिष्टसमन्वितत् ।
पुत्तलीं रुचिरां कृत्वा प्रतिष्ठाप्य समीरणम् ॥ १४३ ॥
छित्त्वा छित्त्वा प्रजुहुयादष्टोत्तरशतं निशि ।
सप्ताहमेवं कुर्वीत साध्यो दासो भवेत् स्वयम् ॥ १४४ ॥
शैवमन्त्रेषु निष्णातश्चण्डेश्वरमनुं भजेत् ।
सर्वान् कामानवाप्नोति परत्रेह च नन्दति ॥ १४५ ॥
धराबग्निमरुत्व्योममखेशेन्द्वर्कमूर्त्तये ।
सर्वभूतान्तरस्थाय शङ्कराय नमो नम: ॥ १४६ ॥
श्रुत्यन्तर्गतवासाय श्रुतये श्रुतिजन्मने ।
अतीन्द्रियाय महेशाय शाश्वताय नमो नम: ॥ १४७ ॥
स्थूलसूक्ष्मविभागाभ्यामनिर्देश्याय शम्भवे ।
भवाय भवसम्भूतदु:खहन्त्रे नमोऽस्तु ते ॥ १४८ ॥
तर्कमार्गातिदूराय तपसां फलदायिने ।

चतुर्वर्गवदान्याय सर्वज्ञाय नमो नमः ॥ १४९ ॥
आदिमध्यान्तशून्याय निरस्ताशेषभीतये।
योगिज्ञेयाय महते निर्गुणाय नमो नमः ॥ १५० ॥
विश्वात्मने विचिन्त्याय विलसच्चन्द्रमौलये।
कन्दर्पदर्पकालाय कालहन्त्रे नमो नमः ॥ १५१ ॥
विषाशनाय विहरद्वृषस्कन्दमुपेयुषे।
सरिद्दामसमाबद्धकपर्दाय नमो नमः ॥ १५२ ॥
शुद्धाय शुद्धभावाय शुद्धानामन्तरात्मने।
पुरान्तकाय पूर्णाय पुण्यनाम्ने नमो नमः ॥ १५३ ॥
भक्ताय निजभक्तानां भुक्तिमुक्तिप्रदायिने।
विवाससे निवासाय विश्वेशाय नमो नमः ॥ १५४ ॥
त्रिमूर्त्तिमूलभूताय त्रिनेत्राय त्रिशूलिने।
त्रिधाम्नां धामरूपाय जन्मघ्नाय नमो नमः ॥ १५५ ॥
देवासुरशिरोरत्नकिरणारुणिताङ्घ्रये।
कान्ताय निजकान्तायै दत्तार्द्धाय नमो नमः ॥ १४६ ॥
स्तोत्रेणानेन पूजायां प्रीणयेज्जगतः पतिम्।
भुक्तिमुक्तिप्रदं भक्त्या सर्वज्ञं परमेश्वरम् ॥ १५७ ॥

इति सारदातिलके विंशः पटलः।

## एकविंशः पटलः।

अथ वक्ष्यामि गायत्रीं तत्त्वरूपां त्रयीमयीम्।
यया प्रकाश्यते ब्रह्म सच्चिदानन्दलक्षणम् ॥ १ ॥
प्रणवाद्या व्याहृतयः सप्त स्युस्तत्पदादिकाः।
चतुर्विंशत्यक्षरात्मा गायत्री शिरसान्विता ॥ २ ॥
सर्ववेदोद्भूतसारो मन्त्रोऽयं समुदाहृतः।
ब्रह्मादिव्यादिगायत्री परमात्मा समीरिता ॥ ३ ॥

ऋष्याद्याः प्रणवस्यान्ते मुनिभिः परिकीर्त्तिताः ।
जमदग्निभरद्वाजभृगुगौतमकाश्यपान् ॥ ४ ॥
विश्वामित्रवशिष्ठाख्यौ व्याहृतीनामृषीन् विदुः ।
गायत्र्युष्णिगथानुष्टुब्बृहतीपंक्तयः पुनः ॥ ५ ॥
त्रिष्टुब्जगत्योश्छन्दांसि कथितानि मनीषिभिः ।
सप्तार्चिर्बालिनः सूर्यो वाक्पतिर्वरुणो वृषा ॥ ६ ॥
विश्वे देवाः क्रमादासां देवताः परिकीर्त्तिताः ।
गायत्र्या मुनिराख्यातो विश्वामित्रो महाद्युतिः ॥ ७ ॥
गायत्रीश्छन्द इत्युक्तं देवता सविता स्मृता ।
शिरसोऽस्या स्तथा मूले मुनिर्ब्रह्मादिकाः स्मृताः ॥ ८ ॥
गायत्री परमा सा स्याद् देवता कथिता बुधैः ।
व्याहृतिः सप्तभूराद्या हृन्मुखांसोरुयुग्मके ॥ ९ ॥
जठरे न्यस्य मन्त्रज्ञो गायत्र्यर्णांस्तनौ न्यसेत् ।
तत्सन्धिषु ध्वजे नाभौ हृत्कण्ठभुजसन्धिषु ॥ १० ॥
आस्य नासाकपोलाक्षिकर्णाक्षिमस्तके पुनः ।
पाश्चात्योत्तरयाम्यप्रागूर्ध्ववक्त्रेषु साधकः ॥ ११ ॥
पदानि दश विन्यस्येत् स्थानेष्वेतेषु मन्त्रवित् ।
शिरोभ्रूमध्यभ्रूवक्त्रकण्ठहृन्नाभिगुह्यके ॥ १२ ॥
जानुनोः पादयुग्मेतांश्चरं शिरसि विन्यसेत् ।
ब्रह्मणे हृदयं प्रोक्तं विष्णवे शिर ईरितम् ॥ १३ ॥
शिखा रुद्राय कवचमीश्वराय समीरितम् ।
नेत्रं सदाशिवायोक्तमस्त्रं सर्वात्मने स्मृतम् ।
षडङ्गान्येवमुक्तानि यथास्थानं प्रविन्यसेत् ॥ १४ ॥
मुक्ताहेमद्रुमानीलधवलच्छायैर्मुखैस्त्रीक्षणै-
र्युक्तामिन्दुनिबद्धरम्यमुकुटां तत्त्वात्मवर्णात्मिकाम् ।
सावित्रीं वरदाभयाङ्कुशकरां पाशं कपालं गुणं

शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजेत् ॥ १५ ॥
प्राणायामान् पुरा कृत्वा गायत्रीं सम्यगोर्जपेत् ।
सप्तव्याहृतिसंयुक्तां गायत्रीं शिरसान्विताम् ॥ १६ ॥
त्रिरुच्चरन् धिया प्राणान् धारयेद् यतमानसः ।
प्राणायामो यमा ख्यातः समस्तदुरितापहः ॥ १७ ॥
व्याहृतित्रयसंयुक्तां गायत्रीं दीक्षितो जपेत् ।
तत्त्वलक्षं विधानेन भिक्षाशी विजितेन्द्रियः ॥ १८ ॥
क्षीरौदनं तिलान् दूर्वां क्षीरद्रुमसमिद्वरान् ।
पृथक् सहस्रं त्रितयं जुहुयान्मन्त्रसिद्धये ॥ १९ ॥
विधाय मण्डलं विद्वांस्त्रिकोणोज्ज्वलकर्णिकम् ।
सौरं पीठं यजेत्तत्र दीप्तादिनवशक्तिभिः ॥ २० ॥
मूलमन्त्रेण क्लृप्तायां मूर्त्तौ देवीं प्रपूजयेत् ।
कोणेषु त्रिषु संपूज्या ब्राह्म्याद्याः शक्तयो बहिः ॥ २१ ॥
आदित्याद्यास्ततः पूज्या उषादिसहिताः क्रमात् ।
ततः षडङ्गान्यभ्यर्चेत् केशरेषु यथाविधि ॥ २२ ॥
प्रह्लादिनीं प्रभां पश्चान्नित्यां विश्वम्भरां पुनः ।
विलासिनीप्रभावत्यौ जयां शान्तां यजेत् पुनः ॥ २३ ॥
कान्तिं दुर्गासरस्वत्यौ विद्यारूपां ततः परम् ।
विशालासंज्ञितामीशां व्यापिनीं विमलां यजेत् ॥ २४ ॥
तमोऽपहारिणीं सूक्ष्मां विश्वयोनिं जयापहाम् ।
पद्मालयां परां शोभां पद्मरूपां ततोऽर्चयेत् ॥ २५ ॥
ब्राह्म्याद्यावरणा बाह्ये पूजयेत् प्रोक्तलक्षणाः ।
ततोऽभ्यर्चेद् ग्रहान् बाह्ये शक्रादीनायुधैः सह ॥ २६ ॥
इत्यमावरणैर्देवीं दशभिः परिपूजयेत् ।
धर्मार्थकाममोक्षाणां भोक्ता स्याद्विजसत्तमः ॥ २७ ॥
तत्त्वसंख्यासहस्राणि मन्त्रवित् जुहुयात्तिलैः ।

सर्वपापविनिर्मुक्तो दीर्घमायुः स विन्दति ॥ २८ ॥
आयुषे साज्यहविषा केवलेनाथ सर्पिषा।
दूर्वात्रिकैस्तिलैर्मन्त्री जुहुयान्निसहस्रकम् ॥ २९ ॥
अरुणाब्जैस्त्रिमध्वक्तैर्जुहुयादयुतं ततः।
महालक्ष्मीर्भवेत्तस्य षण्मासान्नात्र संशयः॥ ३० ॥
ब्रह्मस्त्रियः प्रजुहुयात् प्रसूनैर्ब्रह्मवृक्षजैः।
बहुना किमिहोक्तेन यथावत् साधुसाधिता ॥ ३१ ॥
द्विजन्मनामियं विद्या सिद्धा कामदुघा मता।
आग्नेयमभिधास्यामि मन्त्रं सर्वार्थसाधकम् ॥ ३२ ॥
मरीचिः काश्यपः प्रोक्तो मुनिरस्य महामनोः।
त्रिष्टुप्छन्दो देवतात्र जातवेदाग्निरीरितः ॥ ३३ ॥
नवभिः सप्तभिः षड्भिः सप्तभिः पुनरष्टभिः।
सप्तभिर्मूलमन्त्रार्णैः षडङ्गविधिरीरितः ॥ ३४ ॥
अङ्गुष्ठगुल्फजङ्घासु जानुनोरूरुयुग्मके।
कट्याङ्घ्रिनाभिषु हृदि स्तनयोः पार्श्वयोर्द्वयोः ॥ ३५ ॥
पृष्ठतः स्कन्धयोर्मध्ये बाहुमूलेऽपि बाहुषु।
प्रकूर्परप्रकोष्ठेषु मणिबन्धतलेष्वथ ॥ ३६ ॥
मुखनासाक्षिकर्णेषु मस्तमस्तिष्कमूर्द्धसु।
क्रमेण विन्यसेद्वर्णान् मन्त्री मन्त्रसमुद्भवान् ॥ ३७ ॥
शिखाललाटनयनकर्णोष्ठरसनामुखे।
मुकण्ठबाहुतः कुक्षिकटिगुह्योरुजानुषु।
जङ्घयोः पादयोर्न्यस्येत् पादान्यस्य मनोः सुधीः ॥ ३८ ॥
विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां
कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम्।
हस्तैश्चक्रगदासिखेटविशिखं पाशाङ्कुशं तर्जनीं
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां स्मरेत् ॥३९॥

मन्त्रवर्णसहस्राणि जपेन्मन्त्रं विशालधीः ।
तदन्ते तिलसिद्धार्थचित्रमूलैः समिद्वरैः ॥ ४० ॥
क्षीरद्रुमाणामाज्येन हविषा तैर्घृतान्वितैः ।
चतुःसहस्रं जुहुयादर्चिते हव्यवाहने ॥ ४१ ॥
मण्डले सर्वतोभद्रे षट्कोणाङ्कितकर्णिके ।
विधिना वक्ष्यमाणेन पीठे देव्याः प्रपूजयेत् ॥ ४२ ॥
जयाख्यां विजयां भद्रां भद्रकालीमनन्तरम् ।
सुमुखीं दुर्मुखीसंज्ञां पश्चाद्व्याघ्रमुखीं पुनः ॥ ४३ ॥
अथ सिंहमुखीं दुर्गां नवशक्तीः प्रपूजयेत् ।
आसनं सिंहमन्त्रेण दद्यादुक्तेन देशिकः ॥ ४४ ॥
मूर्त्तिं मूलेन सङ्कल्प्य तस्यामावाह्य पूजयेत् ।
षडङ्गानि यथापूर्वं केशरेष्वर्चयेत् सुधीः ॥ ४५ ॥
अग्न्यादिपादाष्टकोत्पन्नः मूर्त्योऽर्च्या बहिः पुनः ।
जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः ॥ ४६ ॥
अश्वोदरजसंज्ञोऽन्यः पुनर्वैश्वानराह्वयः ।
कौमारतेजाः स्याद्विश्वमुखो देवमुखः स्मृतः ॥ ४७ ॥
ततो भूसलिलाग्निवाय्वात्मनेन्त्वात्मभोऽन्वितान् ।
चतुर्दिक्षु समभ्यर्चेत् कोणेष्वेतत्कलाः पुनः ॥ ४८ ॥
पूर्वादिदिक्षु संपूज्या जीर्णाद्या वर्णशक्तयः ।
जगतां तपनी वेदगर्भा दहनरूपिणी ॥ ४९ ॥
सेन्दुखण्डा शुम्भहन्त्री नभश्चारिण्यनन्तरम् ।
वागीश्वरी मदवहा सोमरूपा मनोजवा ॥ ५० ॥
मरुद्वेगा रात्रिसंज्ञा तीव्रकोपा यशोवती ।
तोयात्मिका पुनर्नित्या दयावत्यपि हारिणी ॥ ५१ ॥
तिरस्क्रिया वेदमाता तत्परा मदनप्रिया ।
समाराध्या नन्दिनी च परा रिपुविमर्दिनी ॥ ५२ ॥

षष्ठी च दण्डिनी तीक्ष्णा दुर्गा गायत्र्यनन्तरम् ।
निरवद्या विशालाक्षी श्वासोद्वाहा च नादिनी ॥ ५३ ॥
वेदना वह्निगर्भाख्या सिंहवाहाह्वया तथा ।
धुर्य्या दुर्विषहा पश्चात्त्रिंशा तापहारिणी ॥ ५४ ॥
त्यक्तदोषा निःसपत्नी चत्वारिंशश्चतुर्युता ।
लोकपालांस्ततोऽभ्यर्च्चेद्वज्राद्यायुधसंयुतान् ॥ ५४ ॥
इत्थं जपादिभिः सिद्धे मन्त्रेऽस्मिन् साधकोत्तमः ।
आग्नेयास्त्राधिकारी स्यात्तद्विधानमुदीर्य्यते ॥ ५५ ॥
आग्नेयास्त्रमिति प्रोक्तं विलोमपठितो मनुः ।
पूर्वोक्ता एवमुन्याद्या मन्त्रस्यास्य प्रकीर्त्तिताः ॥ ५६ ॥
प्रतिलोमक्रमादस्य षडङ्गानि प्रकल्पयेत् ।
वर्णन्यासपदन्यासौ विदध्यात् प्रतिलोमतः ॥ ५७ ॥
ध्यानभेदान् विजानीयात् गुर्वादेशान्नचान्यथा ।
पूर्ववज्जपक्लृप्तिः स्यात् जुहुयात् पूर्वसंख्यया ॥ ५८ ॥
पञ्चगव्यसुपक्वेन चरुणा तस्य सिद्धये ।
अर्चनं पूर्ववत् कुर्य्याच्छक्तीस्तु प्रतिलोमतः ॥ ५९ ॥
सर्वत्र देशिकः कुर्य्याद्गायत्र्या द्विगुणं जपम् ।
क्रूरकर्माणि कुर्वीत प्रतिलोमविधानतः ॥ ६० ॥
शान्तिकं पौष्टिकं कर्म कर्त्तव्यमनुलोमतः ।
प्रयोगकाले प्रजपेदष्टौ पादान् विलोमतः ॥ ६१ ॥
साधितो जायते पश्चात् मन्त्रोऽयं विधिनामुना ।
आद्यैः पञ्चाक्षरः पादो ज्ञेयो ज्ञानेन्द्रियात्मकः ॥ ६२ ॥
धूमाद्योऽन्यः पञ्चवर्णः स्मृतः कर्मेन्द्रियात्मकः ।
साज्यस्तृतीयः पञ्चार्णः पञ्चभूतमयः स्मृतः ॥ ६३ ॥
त्याद्यः सप्ताक्षरः पादश्चतुर्थो धातुरूपकः ।
दः पूर्वः पञ्चमःपादः कूर्मी रूपः षड़क्षरः ॥ ६४ ॥

तोवर्णादि षड़र्णोऽन्यः षाट्कौशिकमयो मतः ।
मोपूर्वः पञ्चवर्णोऽन्यः शब्दादिमय ईरितः ॥ ६५ ॥
सेवार्णाद्योऽष्टमो ज्ञेयः पञ्चवर्णोऽर्चनादिकः ।
एवं तत्त्वसमायोगात् पादक्लृप्तिरुदीरिता ॥ ६६ ॥
तत्तत्पादाक्षरोत्पन्नास्तावत्यो वह्निदेवताः ।
प्रधानमूर्त्तिप्रतिमाः स्वस्ववर्णोदितप्रभाः ॥ ६७ ॥
प्रज्वलत्केशरदला भीमदंष्ट्रा भयावहाः ।
देवता इन्द्रियोत्पन्ना ऊर्द्धदृष्टय ईरिताः ॥ ६८ ॥
देवता भूतपादोत्थास्तिर्य्यग्वक्त्राः प्रकीर्त्तिताः ।
धातुरूपाक्षरोद्भूता उभयाननशोभिताः ॥ ६९ ॥
ऊर्मिजा ऊर्ध्ववदनाः शोकोत्थास्तिर्य्यगाननाः ।
एताः सर्वाः स्मृताः क्रूरा इन्द्रियार्थोद्भवाः स्त्रियः ॥ ७० ॥
अधस्तिर्य्यङ्मुखोपेता ईरिता वर्णदेवताः ।
अभिमुख्यः स्मृताः सौम्ये पराङ्मुख्योऽन्यकर्मणि ॥ ७१ ॥
आभ्यः संख्याः समुत्पन्ना देवता ज्वलिताननाः ।
याभिर्मन्त्री दहेच्छत्रो राज्यं सगिरिकाननम् ॥ ७२ ॥
अस्त्रं मनुष्यनक्षत्रे ह्यारभेत विचक्षणः ।
आसुरेषु प्रयुञ्जीत देवतारासु संहरेत् ॥ ७३ ॥
पूर्वोत्तरत्रयं पश्चाद्भरण्यार्द्रा च रोहिणी ।
इमानि मानुषाख्याहुर्नक्षत्राणि मनीषिणः ॥ ७४ ॥
ज्येष्ठाशतभिषामूलधनिष्ठाश्लेषकृत्तिकाः ।
चित्रामघाविशाखाः स्युस्तारा राक्षसदेवताः ॥ ७५ ॥
अश्विनी रेवती पुष्यः स्वाती हस्तः पुनर्वसुः ।
अनुराधा मृगशिरः श्रवणादेवतारकाः ॥ ७६ ॥
उपक्रमेत नन्दासु रिक्तास्वस्त्रं विसर्जयेत् ।
भद्रास्वाहरणं कुर्य्यात् जयास्वत्यन्तमुत्तमम् ॥ ७७ ॥

उपक्रमो भौमवारे शनिवारे विसर्जनम्।
प्रतिसंहरणं वारे गुरोः शुक्रस्य वा भवेत्॥ ७८॥
स्थिरेषु राशिष्वारम्भश्चरेष्वासाद्विसर्जनम्।
अस्त्रसंहरणं कुर्य्यादुभयेषु विचक्षणः॥ ७९॥
कृष्णपक्षेऽनलेनास्त्रं विसृजेच्छशिना पुनः।
शुक्लपक्षे क्रमादस्त्रं पुनरात्मनि संहरेत्॥ ८०॥
भानुना मोक्षसंहारौ कुर्य्यात् पक्षद्वये सुधीः।
पश्चिमाभिमुखो भूत्वा कर्म सर्वत्र साधयेत्॥ ८१॥
नक्षत्रवृक्षसकलान् साध्याख्यान् कर्मसंयुतान्।
तत्तन्मन्त्राक्षरोपेतान् मन्त्री मन्त्रार्णसंख्यया॥ ८२॥
जुहुयादेधिते वह्नौ मारयेद्रिपुमात्मनः।
कृष्णाष्टमीं समारभ्य यावत् कृष्णचतुर्दशी॥ ८३॥
धुस्तूरवृषवृक्षाख्यभूरुहोत्थान् समिद्वरान्।
राजीतैलेन संलिप्तान् पृथक् सप्तसहस्रकम्॥ ८४॥
जुहुयात् संयतो भूत्वा रिपुर्यमपुरं व्रजेत्।
सप्तरात्रं प्रजुहुयात् सिद्धार्थस्नेहलोडितैः॥ ८५॥
आर्द्रवस्त्रो वृष्टिकाले मरीचैर्मनुनामुना।
निगृह्यते ज्वरेणारिः प्रलयाग्निसमेन सः॥ ८६॥
तालपत्रे समालिख्य शत्रुनाम यथाविधि।
आग्नेयास्त्रेण संवेष्ट्य कुण्डमध्ये निधापयेत्॥ ८७॥
जुहुयान्मरिचैः क्रुद्धो ज्वराक्रान्तः स जायते।
तदादाय क्षिपेत्तोये शीतले स वशो भवेत्॥ ८८॥
पिष्टापामार्गवीजानि मरीचं मधुसंयुतम्।
अत्युष्णे लवणे तोये निक्षिप्य क्वाथयेत्ततः॥ ८९॥
ऋक्षवृक्षप्रतिकृते हृदये वदने नसि।
किञ्चित् किञ्चित् क्षिपेत्तोयं दर्व्याकारकरोत्यसा॥ ९०॥

आग्नेयमुच्चरन् मन्त्रं सोऽचिराज्ज्वरितो भवेत् ।
क्वथितेऽम्भसि तां क्षिप्त्वाऽम्भो न्यूनयत्नतः ॥ ९१ ॥
तीक्ष्णकर्षेन संलिप्तां शत्रुप्रतिकृतिं निशि ।
तापयेदेधिते वह्नौ प्रतिलोममनुं जपन् ॥ ९२ ॥
ज्वरेण बाध्यते सद्यो होमादस्य मृतिर्भवेत् ।
सामुद्रे सलिले हिङ्गुविषक्षीरकलोलिते ॥ ९३ ॥
क्वथिते पुत्तलिं साध्यनक्षत्रतरुनिर्मिताम् ।
अधोवक्त्रां विनिक्षिप्य यष्ट्या विषतरूत्थया ॥ ९४ ॥
तच्छिरस्ताडनं कुर्वन् जपेदस्त्रं विलोमतः ।
सप्ताहान्मरणं याति शत्रुर्ज्वरविमोहितः ॥ ९५ ॥
आदित्यरथनागेन्द्रग्रस्ताङ्घ्रिं तद्विषाहतम् ।
नग्नं तैलेन लिप्ताङ्गं दग्धं भानुमरीचिभिः ॥ ९६ ॥
अधोमुखं निजरिपुं ध्यात्वा क्वथितवारिणा ।
तर्पयेद्भानुमालोक्य शत्रुर्मृत्युप्रियो भवेत् ॥ ९७ ॥
बिभ्रतीं मुषलं शूलं ध्यायन् कालघनप्रभम् ।
कार्पासबीजैर्निम्बस्य पत्रैर्महिषीघृतप्लुतैः ॥ ९८ ॥
हुत्वा विद्वेषयेत् शत्रून्मन्त्रेणानेन देशिकः ।
बिभ्राणां तर्जनीं शूलं ध्यात्वा दुर्गां भयङ्करीम् ॥ ९९ ॥
माहिषीघृतसंसिक्तैः पत्रैर्विषवृक्षजैः ।
हुत्वा रिपोः क्षणात् सेनामुच्चाटयति मन्त्रवित् ॥ १०० ॥
ध्यात्वा देवीं पुरा प्रोक्तां चतुर्भिर्मरिचान्वितैः ।
अजारुधिरसंलिप्तैर्जुहुयाद्दिवसत्रयम् ॥ १०१ ॥
रिपोरुच्चाटनं कुर्यात् सेनानां नात्र संशयः ।
अग्निशूलकरां दुर्गां ज्वलन्तीं प्रलयाग्निवत् ॥ १०२ ॥
ध्यात्वा सर्षपतैलाक्तैर्बीजैर्धुस्तूरसम्भवैः ।
हुत्वा विमोहयेच्छत्रून् मरिचैर्वा ससर्षपैः ॥ १०३ ॥

कालाञ्जननिभां दुर्गां शूलखड्गधरां स्मरन्।
नवव्रतघनस्यूतैर्न्न पञ्चतत्त्वेहसंयुतैः ॥ १०४ ॥
समिद्वरैः प्रजुहुयादन्याभासेन वैरिणम्।
सिंहाधिरूढां धावन्तीं धावमानं रिपुं प्रति ॥ १०५ ॥
शरान् कार्मुकनिर्मुक्तान् वह्निज्वालामुखाकुलान्।
मुञ्चन्तीं संस्मरन् दुर्गां तर्पयेदुष्णवारिणा ॥ १०६ ॥
भानुबिम्बं समालोक्य रिपोरुच्चाटनं भवेत्।
अतिदुर्गामयोमुष्टिगदाहस्तां विचिन्तयेत् ॥ १०७ ॥
विद्युद्दामसमानाभां महिषोष्ट्रतसंप्लुतैः।
फुल्लार्कैर्जुहुयाद्बिल्वविभीतकसमिद्वरैः ॥ १०८ ॥
कोद्रवैरेव प्रलोप्य सेनायाः स्तम्भनं भवेत्।
आत्तपाशाङ्कुशां रक्तां गाणिदुर्गामनुस्मरन् ॥ १०९ ॥
लोणैः समधुरैः साध्यवृक्षकाष्ठैर्धितेऽनले।
जुहुयान्निशि समासान्मन्त्रविद् वशयेन्नृपान् ॥ ११० ॥
पाशाङ्कुशधरां रक्तां विश्वदुर्गां विचिन्तयन्।
फलिनीकुसुमैः फुल्लैश्चन्दनाम्भःसमुक्षितैः ॥ १११ ॥
जुहुयान्निशि यो मन्त्री तस्य विश्वं वशं भवेत्।
शरच्चन्द्रनिभां देवीं विगलत्परमामृताम् ॥ ११२ ॥
पाशाङ्कुशधरां ध्यात्वा सिन्धुदुर्गां समिद्वरैः।
वेतसैर्मधुरासिक्तैर्जुहुयाद् वृष्टिसिद्धये ॥ ११३ ॥
कपालं त्रिशिखं पाशमङ्कुशं बिभ्रतीं करैः।
जवाकुसुमसङ्काशामग्निदुर्गां विचिन्तयेत् ॥ ११४ ॥
हुत्वा लवणपुत्तल्या मधुरत्रययुक्तया।
आकर्षेद् वाञ्छितान् साध्यान् मन्त्रविन्नात्र संशयः ॥११५॥
अतिदुर्गयमत्याख्या वन्दता त्रिपुरीरिता।
दुर्गान्ताऽग्यागाख्याद्या गाणिदुर्गा समीरिता ॥ ११६ ॥

विश्वाद्याद्यन्यचरान्ता सा विश्वदुर्गा समीरिता ।
सिन्ध्वाद्या सावकारान्ता सिन्धुदुर्गा निगद्यते ॥ ११७ ॥
त्यान्तामग्न्यादिकामेतामग्निदुर्गां विदुर्बुधाः ।
अङ्गने स्थण्डिलं कृत्वा सुगन्धिकुसुमादिभिः ॥ ११८ ॥
देवीमभ्यर्चयेन्नित्यं प्रागुक्तेनैव वर्त्मना ।
आहरेद्रात्रिषु बलिं चरुणा सर्वसिद्धिदम् ॥ ११९ ॥
कृत्यारोगभयद्रोहभूतादीन्नाशयेदयम् ।
यथावदग्निमाराध्य गन्धैः पुष्पैर्मनोरमैः ॥ १२० ॥
स्थित्वा तस्याग्रतो मन्त्री जपेन्मन्त्रमनन्यधीः ।
जपोऽयं सर्वसिद्ध्यै स्यान्नात्र कार्य्या विचारणा ॥ १२१ ॥
लवणैर्मधुरासिक्तैर्जुहुयात् पश्चिमामुखः ।
मन्त्रार्णसंख्यया मन्त्री रिपुमात्मवशं नयेत् ॥ १२२ ॥
शालीन् प्रक्षाल्य संशोध्य शुद्धान् कुर्वीत तण्डुलान् ।
जपित्वा पञ्चगव्येषु संस्कृते हव्यवाहने ॥ १२३ ॥
मन्त्री चरुं पचेन्मन्त्रमवतार्य्य पुनः सुधीः ।
अर्चयित्वा विशदधीर्देवीमग्नौ यथा पुरा ॥ १२४ ॥
जुहुयाच्चरुणा तेन साज्येनाष्टसहस्रकम् ।
पात्रे संपातयंस्तत्र्वन् साध्यं तत् प्राशयेत् पुनः ॥ १२५ ॥
शिष्टं तन्निखनेद् द्वारि सम्प्राप्ते प्राङ्गणान्तरे ।
कृत्यारोगा विनश्यन्ति सह भूतग्रहामयैः ॥ १२६ ॥
परैरुत्पादितान् कृत्वा पुनस्तानेव भक्षयेत् ।
व्रीहिभिर्हविषा क्षीरैः पयोवृक्षसमिद्वरैः ॥ १२७ ॥
आज्यैर्मधुत्रयोपेतैरेतैर्दशशतं पृथक् ।
जुहुयात् सम्पदां भूमिः साधको भवति ध्रुवम् ॥ १२८ ॥
भास्करे मेषराशिस्थे मन्त्रज्ञोऽनुगुणे दिने ।
नद्यां सागरगामिन्यां सततं पुष्कलाम्भसि ॥ १२९ ॥

उद्धृत्यादाय सिकता: संशोध्य परिशोधयेत्।
न्यस्य ता: पञ्चगव्येषु संस्कृते ह्व्यवाहने ॥ १३० ॥
भर्जयेन्मनुना सिद्धैर्दर्व्या ब्रह्मतरूत्थया।
सिंहमेषधनुस्थेऽर्के कृष्णपक्षेऽष्टमीतिथौ ॥ १३१ ॥
विशाखाकृत्तिकामूलहस्तोत्तरमघासु च।
रोहिण्यां श्रवणे वारौ मन्दवाक्पतिदैवतौ ॥ १३२ ॥
विहायान्येषु कुर्वीत सिकतास्थापनं सुधी:।
गृहग्रामादिराष्ट्राणां रक्षार्थं सिकता: शुभा: ॥ १३३ ॥
प्रस्थाढ़कघटोन्मानामध्यादिषु घटेष्विमा:।
नवसु प्रक्षिपेज्जप्त्वा तेषु प्रपूजयेत् क्रमात् ॥ १३४ ॥
मध्यादिदेवीमस्त्राणि कपालान्तानि देशिक:।
सक्रं शङ्खमसिं खेटं बाणश्चापं त्रिशूलकम् ॥ १३५ ॥
कपालं स्वस्वमन्त्रेण संपूज्यान्ते बलिं हरेत्।
मत्तचग्रहराशीनां लोकेशानां बलिं हरेत् ॥ १३६ ॥
विहिता यत्र रक्षेयं वर्द्धन्ते तत्र सम्पद:।
क्षुद्रग्रहमहारोगचौरभूतसरीसृपा: ॥ १३७ ॥
अमुना विलयं शान्ति विधिना नात्र संशय:।
सिकतानां विशुद्धानां विकारकुडवं सुधी: ॥ १३८ ॥
पञ्चगव्ययुतं पात्रे ब्रह्मवृक्षेण निर्मितम्।
निक्षिप्य विधिना यत्र स्थापयेत्तत्र सम्पद: ॥ १३९ ॥
दिने दिने प्रवर्द्धन्ते कालवृष्ट्यादिभि: सह।
महोत्पाता विनश्यन्ति क्षुद्राद्रोहा महाग्रहा: ॥ १४० ॥
पञ्चगव्याश्मनां कुर्य्यात् स्थापनं विधिनामुना।
गोमूत्रं प्रथमानं स्यात् गोमयाच्चस्तदर्द्धकम् ॥ १४१ ॥
आज्यात् सप्तगुणं क्षीरं गोमूत्रात् त्रिगुणं दधि।
गोमूत्रेण समं सर्पि: सर्वं वा सममुच्यते ॥ १४२ ॥

गावः स्युः कपिलाख्ये तद्धिमधूम्रारुणप्रभाः ।
अभावे गदिताः सर्वाः सर्वं वा कपिलोद्भवम् ॥ १४२ ॥
एकोननवपञ्चाशत्फलके अश्मशाखिनः ।
विहाय कोणकोष्ठानि शस्ताख्यं जातवेदसम् ॥ १४३ ॥
लिखित्वा मध्यकोष्ठानि पूजयेत्तत्र देवताम् ।
कृत्वा होमं ससम्पातं लिखयेत्तद् यथा पुरा ।
दद्याद् बलिं यथापूर्वमस्य पूर्वोदितं फलम् ॥ १४४ ॥
मध्ये मायामष्टकोष्ठेषु पादानष्टौ कृत्वा मातृकार्णैः प्रवीतम् ।
भूबिम्बस्थं सर्वभूतामयघ्नं रत्नामः श्रीकीर्त्तिदं यन्त्रमेतत् ॥१४५॥
आग्नेयास्त्रस्य जानाति विसर्गादानकर्मणी ।
यः पुमान् गुरुणा शिष्टस्तस्याधीनं जगत्त्रयम् ॥ १४६ ॥
इति शारदातिलके एकविंशः पटलः ॥

---

## द्वाविंशः पटलः ।

अथो दिनास्त्रं कृत्यास्त्रं वक्ष्ये शत्रुविमर्दनम् ।
अतिदुर्गामनुं प्राहुर्दिनास्त्रं मनुवित्तमाः ॥ १ ॥
प्रतिलोममिमं मन्त्रं कृत्यास्त्रं परिचक्षते ।
दिनास्त्रस्य षडङ्गादीन् प्रतिलोमोदितान् विदुः ॥ २ ॥
भानुबिम्बगतं शत्रुमधोवक्त्रं विचिन्तयन् ।
मूलादायतया शस्तां कुण्डल्या भावयन् सुधीः ॥ ३ ॥
मूलाधारे क्षिपेत् सद्यः प्रस्फुरत् कालपावके ।
दिनत्रयाज्ज्वराक्रान्तो रिपुः प्राणान् विमुञ्चति ॥ ४ ॥
दिनास्त्रे च प्रविष्टाङ्गं स्वाधिष्ठानगतं रिपुम् ।
पञ्चवायुसमिद्धेन वह्निना मध्यविग्रहम् ॥ ५ ॥
ध्यायन् मनुं जपेत् सद्यः स भवेद् यमवल्लभः ।

मणिपूरगतं शत्रुमग्निना दीप्तविग्रहम् ॥ ६ ॥
ध्यायन् दिनास्त्रं प्रजपेत् स मृत्योर्वसतिं व्रजेत् ।
अनाहताहितः शत्रुर्निर्दग्धो मन्त्रवह्निना ॥ ७ ॥
पाशेन बद्धा शीघ्रं हि नीयते यमकिङ्करैः ।
विशुद्धिस्थानगो वैरी दिनबाणेन पीड़ितः ॥ ८ ॥
अधोमुखः स्मृतस्तूर्णं परासुः स्याद्दिनव्रयात् ।
आज्ञया निहितं शत्रुं दहेत् ज्ञानाग्निना धिया ॥ ९ ॥
पुत्रमित्रकलत्रादीन् हित्वा मृत्युमुपाश्रयेत् ।
नाभिमात्रोदके स्थित्वा ध्यायन् विम्बे दिनेशितुः ॥ १० ॥
वैरिणं दग्धसर्वाङ्गं मन्त्रमष्टोत्तरं शतम् ।
जपेत् सप्तदिनादर्वाग् यमलोकं स गच्छति ॥ ११ ॥
आरवारं समारभ्य सप्ताहं प्रजपेन्मनुम् ।
सूर्य्योदयं समारभ्य यावदस्तमयो भवेत् ॥ १२ ॥
सन्निपातज्वराविष्टो यमग्रस्तो भवेदरिः ।
स्थित्वा दुर्गालये मन्त्री त्रिरात्रं वर्जिताशनः ॥ १३ ॥
दिनबाणेन विद्धाङ्गं वैरिणं प्रतिचिन्तयन् ।
जपन्निमं मनुं शत्रुर्ज्वरितो मरणं व्रजेत् ॥ १४ ॥
स्पृष्ट्वा दुर्गां जपेन्मन्त्रमनश्नंस्त्रिदिनं स्मरन् ।
शूलप्रोतं निजरिपुं दिनास्त्रेण प्रदीपितम् ॥ १५ ॥
ज्वरेण महताविष्टो जायतेऽसौ यमातिथिः ।
रविमण्डलगं शत्रुं दष्टं तद्भयपन्नगैः ॥ १६ ॥
विषाग्निदग्धसर्वाङ्गं ध्यायन् वृष्टेन वारिणा ।
तर्पयेद्दिनबाणेन स्यादसौ यमवल्लभः ॥ १७ ॥
रविविम्बादागतया ज्वालया ग्रस्तविग्रहम् ।
रिपुं ध्यात्वा जपेन्मन्त्रं स क्रीड़ति यमान्तिके ॥ १८ ॥
अहमूर्ध्वार्कविम्बस्थं विद्धं मन्त्रमयैः शरैः ।

प्रतिबद्धनिजं शत्रुं जपेदयुतमन्त्रवित् ॥ १९ ॥
रिपुं नयति शीघ्रं हि यमदूतं यमालयम् ।
पुनर्यमेन सङ्काशां कालरात्रिमिवापराम् ॥ २० ॥
शूलपाशधरां घोरां सिंहस्कन्धनिषेदुषीम् ।
सवितुर्मण्डलान्तस्थां रक्तनेत्रत्रयान्विताम् ॥ २१ ॥
विस्फुलिङ्गैर्निर्दहन्तीं रिपुमर्दनविग्रहाम् ।
स्पष्टदष्टाधरां नृत्यद्भ्रुकुटीभीषणाननाम् ॥ २२ ॥
तर्जयन्तीं निजं शत्रुं तर्जन्या भीमरूपया ।
दंष्ट्रामयूखजालेन द्योतयन्तीं दिगम्बरम् ॥ २३ ॥
शूलेन वैरिणो वक्षो दारयन्तीं भयङ्करीम् ।
जपेद्दिनत्रयं मन्त्री मारयेद्रिपुमात्मनः ॥ २४ ॥
अस्त्रमन्त्रकृतन्यासः प्रलयाग्निसमप्रभाम् ।
रक्तवस्त्रधरां क्रुद्धां रक्तनेत्रत्रयान्विताम् ॥ २५ ॥
सिंहाधिरूढां धावन्तीं धावमानं रिपुं प्रति ।
खड्गेन तच्छिरश्छित्वा क्षणाद्व्योमस्थलं गताम् ॥ २५ ॥
ध्यात्वा दुर्गां जपेन्मन्त्रं त्रिदिनं वर्जिताशनः ।
अनेनैव विधानेन रिपुर्मृत्युप्रियो भवेत् ॥ २६ ॥
कर्माण्येतानि कुर्वीत दिवसे न तु रात्रिषु ।
पश्चिमामुखलिङ्गस्य सजीवं महिषं पुनः ॥ ३० ॥
लिखित्वा तस्य शिरसि कुण्डं कृत्वा त्रिकोणकम् ।
तस्मिन् समेधिते वह्नौ यथावद्देशिकोत्तमः ॥ ३१ ॥
स त्रिकोणान् समन्तान् साध्यनामसमन्वितान् ।
अङ्गारक्तेन संसिक्तान् कारस्करसमिद्वरान् ॥ ३२ ॥
सहस्रं जुहुयाद्देवीं ध्यात्वा सवितृमण्डले ।
प्रलयाग्निसमां घोरां द्वात्रिंशद्भुजशोभिताम् ॥ ३३ ॥
उद्यदायुधसन्दीप्तां नृत्यन्तीं सिंहमस्तके ।

महादंष्ट्रां महाभीमां ज्वलत्केशीं नदन्मुखीम् ॥३४॥
रक्तार्द्रवसनामीषद्घूर्णितोग्रविलोचनाम्।
अनेन विधिना शत्रुर्महाज्वरनिपीड़ितः ॥ ३५ ॥
विमुञ्चति निजं देहं पुत्रमित्रादिभिः सह।
ऊर्ध्वमुखाश्वसो मन्त्री लङ्घयित्वा भुजङ्गमम् ॥ ३६ ॥
भानुबिम्बगतां दुर्गां सहस्रादित्यसन्निभाम्।
सहस्रपाणिचरणां सहस्राक्षिशिरोमुखीम् ॥ ३७ ॥
सहस्रनागवह्वाङ्गीं त्रासयन्तीं जगत्त्रयम्।
ध्यायन्ननेन सर्पास्ये तर्पयेदुष्णवारिणा ॥ ३८ ॥
संयतः कालपाशेन वैरी मुञ्चेत् स्वजीवितम्।
मध्याह्नार्कायुतप्रख्यां नदन्तीं नरसिंहवत् ॥ ३९ ॥
घोरसिंहसमासीनां महाभीषणदर्शनाम्।
शूलप्रोताहितां ध्यायन् जपेन्मन्त्रमनन्यधीः ॥ ४० ॥
तर्पयेदुष्णतोयेन सर्पवक्त्रं दिनत्रयम्।
यमस्य भवनं गच्छेदरातिर्नात्र संशयः ॥ ४१ ॥
ऋचवृचप्रतिकृतिं प्रतिष्ठितसमीरणाः।
उष्णोदके विनिःक्षिप्य विषाक्ते विधिना ततः ॥ ४२ ॥
अर्केन्दनलसञ्जातां खड्गखेटकधारिणीम्।
नयनत्रयनिर्गच्छद्विस्फुलिङ्गशताकुलाम् ॥ ४३ ॥
सिंहस्थां सर्पभूषाढ्यां त्रैलोक्यभयधारिणीम्।
खड्गकृत्याहितां ध्यायन् प्रजपेदयुतं मनुम् ॥ ४४ ॥
विधानेनामुना शत्रुर्ग्रस्तो भवति मृत्युना।
प्रकल्प्य विधिवत् तत्र त्रिकोणकुण्डमुत्तमम् ॥ ४५ ॥
तत्र संज्वलिते वह्नौ महिषीमूत्रताडिताम्।
पुत्तलीमजरक्ताक्तां प्रतिष्ठितसमीरणाम् ॥ ४६ ॥
छित्त्वा छित्त्वा प्रजुहुयादजरक्तान्वितां निशि।

ध्यात्वा दुर्गां प्रनृत्यन्तीं महिषोरःस्थलान्तरे ॥ ४७ ॥
शूलेन महिषस्याङ्गं भिन्दन्तीं घोरदर्शनाम्।
अट्टहासैरजस्रोत्थैर्भीषितां सुरसेविताम् ॥ ४८ ॥
प्रलयानलसङ्काशां भ्रमन्नेत्रत्रयान्विताम्।
सन्दष्टाधरसम्भिन्नां दंष्ट्राभीममुखाम्बुजाम् ॥ ४९ ॥
खड्गखेटकयुक्ताभिः कन्यकाभिः समावृताम्।
अनेन विधिना शत्रुः प्रयाति यमसन्निधिम् ॥ ५० ॥
दिनाख्यमेवं कथितं शत्रुनिग्रहकारकम्।
कृत्यास्त्रदेशितान् कुर्य्यात् प्रयोगान् मन्त्रवित्तमः ॥ ५१ ॥
आधारचक्रतान्देवीं कुण्डलीं सर्परूपिणीम्।
तां ब्रह्मरन्ध्रमार्गेण यातां व्योमस्थलं ततः ॥ ५२ ॥
मुखेन शत्रुमादाय निवृत्तां स्वगृहं प्रति।
ज्वलत्कालानलोद्दीप्तां विचिन्त्य प्रजपेन्मनुम् ॥ ५३ ॥
सप्तभिर्वासरैः शत्रुर्मृत्युं प्राप्नोति मोहितः।
अङ्गारवारे चित्यग्नौ सर्षपस्नेहलोडितम् ॥ ५४ ॥
सिद्धार्थं कुडवं जप्तं जुहुयात् पञ्चमावृतः।
कृत्यास्त्रज्वालया दग्धो रिपुर्यमपुरं व्रजेत् ॥ ५५ ॥
चतुर्दश्यामर्द्धरात्रे चितास्थान्यष्टसाधकः।
व्रणतैलविलिप्तानि चिताग्नौ जुहुयात्ततः ॥ ५६ ॥
अनेन विधिना शत्रुर्मृत्युमेष्यति कातरः
मेषास्थिनिर्मितां शत्रोर्व्रणतैलपरिप्लुताम् ॥ ५७ ॥
प्रतिमां स्थापितप्राणां जुहुयान्निशि साधकः।
छित्त्वा छित्त्वाजरक्तेन सप्ताहान् म्रियते रिपुः ॥ ५८ ॥
श्मशानवालुकाः स्पृष्ट्वा साष्टतानियुतं जपेत्।
विकिरेत्तास्तडागादौ कृत्यास्त्रकथितं जलम् ॥ ५९ ॥
तदीयं पीतमचिराद्विघ्नन्ति सकलान् जनान्।

अथाङ्गारचतुर्दश्यां प्रजप्तैः प्रेतभस्मभिः ॥ ५९ ॥
महिषाज्येन लसितास्तन्मन्त्राक्षरसंख्यया ।
निर्माय गुलिका एताः सम्यग्जप्तसमीरणाः ॥ ६० ॥
चितिकाष्ठेधिते वह्नौ जुहुयाद् दृढमानसः ।
चतुर्दशीत्रयादर्वाक् शत्रुर्मृत्युवशो भवेत् ॥ ६१ ॥
श्मशानभस्मसिद्धार्थान् पञ्चगव्ये विनिःक्षिपेत् ।
माहिषे संस्मरेद्देवीं ज्वालाग्निसदृशप्रभाम् ॥ ६२ ॥
भर्जयेत् प्रजपन्मन्त्रं विषवाद्यैधितानले ।
दुर्गागारे प्रजुहुयादनेनायुतमन्त्रवित् ॥ ६३ ॥
पुनरादाय तद्भस्म सेनायां वैरिणः क्षिपेत् ।
सा सेना बहुधा भिन्ना ज्वररोगविमोहिता ॥ ६४ ॥
आयुधानि परित्यज्य युद्धकाले पलायते ।
गेहग्रामादिषु क्षिप्तं कुर्यादुच्चाटनं क्षणात् ॥ ६५ ॥
सप्तवारेषु कुलिके दुर्गावेश्मसु शर्कराः ।
सप्तमाहेन्द्रदिग्वर्ज्यं गृहीत्वा प्रजपेन्मनुम् ॥ ६६ ॥
महिषीपञ्चगव्येषु भर्जयेत्ता यथा पुरा ।
भूयो जपित्वा विकिरेद्देहग्रामपुरेष्विमाः ॥ ६७ ॥
स देशो नश्यति क्षिप्रं दग्धो मन्त्रभवाग्निना ।
ब्रह्मदण्डीं कार्कटिकां कराकाशनिकां त्रयम् ॥ ६८ ॥
भौमवारस्य कुलिके गृहीत्वा प्रजपेन्मनुम् ।
चतुर्दश्यां रिपोर्गेहे लिखयेत् प्रजपन्मनुम् ॥ ६९ ॥
सार्द्धं पुत्रकलत्राद्यैरुत्सादो जायते रिपोः ।
एकैकं वा लिखेन्मन्त्री मण्डलात् तत् फलं भवेत् ॥ ७० ॥
षड्विन्दुषट्कं पुत्तल्यां लिखयेदोदनान्वितम् ।
स्पृष्ट्वा तां प्रजपेदस्त्रं कृष्णाष्टम्यां निशार्द्धतः ॥ ७१ ॥
शत्रुनामसमायुक्तां श्मशाने लिखयेदिमाम् ।

प्रणश्येत् स रिपुः शीघ्रं सकुटुम्बः सबान्धवः ॥ ७२ ॥
कपालसकलाम्भस्तो कृत्यास्त्राचरसंख्यकान् ।
सृष्ट्वा तान् प्रजपेदस्त्रं प्राणस्थापनपूर्वकम् ॥ ७३ ॥
कृष्णाङ्गारचतुर्दश्यां श्मशाने विषवृक्षके ।
जुहुयादजरक्ताक्तान् कृत्यास्त्रज्वालया ततः ॥ ७४ ॥
रिपुर्यमपुरं गच्छेन्महाज्वरविमोहितः ।
अजरक्तेन संपूर्णे कलसे निःक्षिपेदहिम् ॥ ७५ ॥
कपालेन पिधायैनं छादयेद्रक्तवाससा ।
पूजयेद्रक्तपुष्पाद्यैः सृष्ट्वा तमयुतं जपेत् ॥ ७६ ॥
भौमवारे निशामध्ये कारस्करसमेधिते ।
श्मशानवह्नौ जुहुयाद्गच्छेद् यमपुरं रिपुः ॥ ७७ ॥
साध्यनक्षत्रवृक्षेण कृत्वा कुम्भं प्रपूरयेत् ।
माहिषैः पञ्चगव्यैस्तं बिडालं तत्र निक्षिपेत् ॥ ७८ ॥
जपपूजादिकं सर्वं यथापूर्वं समाचरेत् ।
कारस्करभवे वह्नौ कृत्यास्त्रेण समेधिते ॥ ७९ ॥
अयुतं व्रणतैलेन हुतान्ते तं घटं पुनः ।
आमस्तकं समुद्धृत्य जपन्मन्त्रमनन्यधीः ॥ ८० ॥
जुहुयाद्विधिनानेन त्रिदिनैर्म्रियते रिपुः ।
सुन्दरीमहिषीवत्समेकरात्रं ततः परम् ॥ ८१ ॥
पाययन्माहिषीसर्पिः प्रस्थं मन्त्रेण मन्त्रितम् ।
कुशैराबद्धसर्वाङ्गं स्थापितप्राणमञ्जसा ॥ ८२ ॥
कारस्करैधिते वह्नौ व्रणतैलेन मन्त्रवित् ।
होमं कृत्वायुतं वत्सं जुहुयाद् यतमानसः ॥ ८३ ॥
एकेन दिवसेनारिर्गच्छेद् यमपुरं सुधीः ।
त्रिकोणकुण्डलिखिते वह्नौ मन्त्रेण दीपिते ॥ ८४ ॥
अर्चिते गन्धपुष्पाद्यैरयुतं जुहुयात् क्रमात् ।

राजिभल्लातकतिलतैलैः सप्तदिनं ततः॥ ८५॥
प्रसूतिसमयप्राप्तां मह्षिषीं स्थापितामिमाम्।
पूजितां गन्धपुष्पाद्यैः स्पृशन् कूर्चेन तां जपेत्॥ ८६॥
मस्तकाद् योनिपर्य्यन्तं धिया वल्लमनुस्मरन्।
आकृष्य हस्ते पतितं जुहुयादेधितेऽनले॥ ८७॥
एवं कृते समुत्पन्नान् क्रव्यादीशान् हुताशनान्।
भक्षयेदचिराच्छत्रुमीश्वरेणापि रक्षितम्॥ ८८॥
पुनरग्नौ विशल्यैषा कर्त्तारमपि काङ्क्षिणी।
एवंविधानि कर्माणि यः कुर्य्यान्मन्त्रवित्तमः॥ ८९॥
स जपेदात्मरक्षार्थं मन्त्रान् मृत्युञ्जयादिकान्।
अथो लवणमन्त्रस्य विधानमभिधीयते॥ ९०॥
ऋगाद्या कथिता पूर्वं लवणाम्भसि पूर्विका।
रावणादिर्द्वितीयान्यादद्वाद्या परिकीर्त्तिता॥ ९१॥
सदृग्धाद्या चतुर्थी स्याद् याता पूर्वाथ पञ्चमी।
अङ्गिरा मुनिराख्यातश्छन्दोऽनुष्टुबुदाहृतम्॥ ९२॥
अग्निरात्री पुनर्दुर्गा भद्रकाली च देवताः।
चितिमन्त्राक्षरैः कुर्य्यात् षडङ्गानि समाहितः॥ ९३॥
पञ्चभिर्हृदयं प्रोक्तं त्रिभिर्वर्णैः शिरः स्मृतम्।
पञ्चवर्णैः शिखा प्रोक्ता कवचं करणाक्षरैः॥ ९४॥
पञ्चभिर्नेत्रमुदितं युगाननास्त्रमीरितम्।
तारं चिटिद्वयं पश्चाच्चाण्डालि तदनन्तरम्॥ ९५॥
महत्पादाद्यान्तां ब्रूयादमुकं मे ततः परम्।
वशमानय ठद्वन्द्वं चिटिमन्त्र उदाहृतः।
चतुर्विंशत्यक्षरात्मा सर्वकामफलप्रदः॥ ९६॥
नवकुङ्कुमसन्निभं त्रिनेत्रं रुचिराकल्पशतं भजामि वह्निम्।
स्रुवशक्तिवराभयानि दोर्भिर्दधतं रक्तसरोरुहे निषण्णम्॥९७॥

कालाम्बुवाहद्युतिमिन्दुवक्त्रां तारावलीशोभिपयोधराढ्याम्।
कपालपाशाङ्कुशशूलहस्तां नीलाम्बरां यामवतीं नमामि ॥९८॥
कालाम्बुदाभामसिखड्गशूलचक्राब्जहस्तां तरुणेन्दुचूडाम्।
भीमां त्रिनेत्रां जितशत्रुवर्गां देवीं स्मरेत् शान्तिकभद्रदाम् ॥९९॥
टङ्कं कपालं डमरुं त्रिशूलं संबिभ्रती चन्द्रकलावतंसा।
पिङ्गोर्ध्वकेशी सितभीमदंष्ट्रा भूयाद् विभूत्यै मम भद्रकाली ॥१००॥

ऋक्पञ्चकं जपेत् सम्यगयुतं तद्दशांशतः।
हविषा घृतसिक्तेन जुहुयादर्चितेऽनले ॥१०१॥
एवं कृतपुरश्चर्यः प्रयोगे कुशलो भवेत्।
अतो यामवती ध्येया वश्याकर्षणकर्मणोः ॥१०२॥
स्मरेद् दुर्गां भद्रकालीं शत्रौ मारणकर्मणि।
जानुप्रमाणे सलिले स्थित्वा निशि जपेन्मनुम् ॥१०३॥
अनेन वाञ्छितः साध्यः किङ्करो जायते क्षणात्।
नाभिमात्रोदके स्थित्वा जपेन्मन्त्रमिमं सुधीः ॥१०४॥
अष्टोत्तरसहस्रं यस्तस्य साध्यो वशो भवेत्।
ऋक्पञ्चकं जपेन्मन्त्री कण्ठमात्राम्भसि स्थितः ॥१०५॥
सप्तभिर्दिवसैर्भूपान् वशयेद्विधिनामुना।
विलिख्य तालपत्रे तं साध्यनाम्ना विदर्भितम् ॥१०६॥
निःक्षिप्य क्षीरसंमिश्रे जले तत् क्वाथयेन्निशि।
वश्यो भवति साध्योऽस्य नात्र कार्या विचारणा ॥१०७॥
तालपत्रे लिखित्वैतद् भद्रकालीगृहे खनेत्।
वश्याय सर्वजन्तूनां प्रयोगोऽयमुदाहृतः ॥१०८॥
ताम्रपात्रे समालिख्य मन्त्रं साध्यविदर्भितम्।
तापयेत् खादिरे वह्नौ मासात् वश्यो भवेन्नरः ॥१०९॥
विकीर्य कुङ्कुमोपाद्य सम्यक्शाल्योत्थलवणम्।

तस्मिन् होमं प्रकुर्वीत संस्कृते हव्यवाहने ॥ ११० ॥
प्रक्षाल्य गव्यदुग्धेन संशोध्य लवणं सुधीः ।
अनले तु प्रजुहुयात् सप्ताहाद्वशयेज्जगत् ॥ १११ ॥
दधिमध्वाज्यसंमिश्रैः सैन्धवैर्जुहुयात्तथा ।
वशयेदखिलान् देवानचिरात् किमु पार्थिवान् ॥ ११२ ॥
विशुद्धं लवणप्रस्थं विभक्तं पञ्चधा पृथक् ।
एकैकया प्रजुहुयादृचा पञ्चाहमादरात् ॥ ११३ ॥
यस्य नाम्ना स वश्यः स्यादनेन विधिनाचिरात् ।
शुद्धं लवणमादाय जुहुयान्मधुरान्वितम् ॥ ११४ ॥
ऊनपञ्चाशदाहुत्या वशं नयति वाञ्छितम् ।
नित्यं शुद्धेन लोणेन हुत्वा शत्रून् वशं नयेत् ॥ ॥ ११५ ॥
मधुरत्रयसंयुक्तैर्लवणैः साधुचूर्णितैः ।
जुहुयाद्वशयेन्नारीर्नरान्नरपतीनपि ॥ ११६ ॥
मन्त्रं कृष्णतृतीयादि प्रजपेद् यावदष्टमी ।
तुलसीः पञ्च कुर्वीत साङ्गोपाङ्गाः समाः शुभाः ॥ ११७ ॥
एका साध्यद्रुमेण स्यादन्या पीष्टमयी स्मृता ।
लवणं पीतसम्भूतं चूर्णितं परिशोधितम् ॥ ११८ ॥
कुड्यं प्रोक्षयेत् क्षीरदध्याज्यमधुभिः क्रमात् ।
गुडाज्यमधुभिः सम्यक् मिश्रितेनाम्बुना ततः ॥ ११९ ॥
कुर्वीत तुलसीं सौम्यां सर्वावयवशोभिताम् ।
प्राणमन्त्रकृतं यन्त्रमासां हृदि विनिःक्षिपेत् ॥ १२० ॥
आशु प्राणान् प्रतिष्ठाप्य पूजयेत् कुसुमादिभिः ।
पश्चात् कृष्णाष्टमीरात्रौ याममात्रगते सति ॥ १२१ ॥
विधाय मातृकान्यासं मन्त्रन्यासमनन्तरम् ।
चिटिमन्त्रसमुद्भूतांश्चतुर्विंशतिसंख्यकान् ॥ १२२ ॥
ताराद्यान् विन्यसेद्वर्णान् स्थानेष्वेषु समाहितः ।

मूर्ध्नि भाले दृशाः श्रुत्योर्नसास्यचिवुकेष्वथ ॥ १२३ ॥
कण्ठे हृत्स्तनयुग्मेषु कुचौ नाभौ कटिद्वये।
मेढ्रे पायौ प्रविन्यस्य मिष्टं वर्णचतुष्टयम्॥ १२४ ॥
ऊरुद्वये जानुयुगे जङ्घायुग्मे पदद्वये।
एवं विन्यस्य सर्वाङ्गे रक्तमाल्यानुलेपनः॥ १२५ ॥
रक्तवस्त्रधरः शुद्धः पुत्तलीं दारुणा कृताम्।
अधोमुखीं खनेत् कुण्डे पिष्टजामासनादधः॥ १२६ ॥
मृण्मयीं प्रतिमां पाददेशे न्यस्येत्तथात्मनः।
मधूच्छिष्टमयीं व्योम्नि कुण्डस्योर्द्ध्वं प्रलम्बयेत्॥ १२७ ॥
लवणेन कृतां पश्चात् पुत्तलीं संस्पृशन् जपेत्।
ऋक्पञ्चकं यथान्यायमष्टोत्तरसहस्रकम्॥ १२८ ॥
ततस्तु चिटिमन्त्रान् वै पुनर्मन्त्र्यात्मनो न्यसेत्।
लिङ्गदेशे पुनर्नाभौ जठरे हृदयाम्बुजे॥ १२९ ॥
स्तनद्वये कन्धरायां चिवुके वदने पुनः।
घ्राणयोः कर्णयोरक्ष्णोर्ललाटे मूर्द्धनि क्रमात्॥ १३० ॥
अग्निमादाय सन्दीप्य साध्यनक्षत्रदारुभिः।
अस्मिन्नभ्यर्च्य मन्त्रोक्तां देवतां रौप्यपात्रके॥ १३१ ॥
कुसीतपुष्पराजीभिर्दत्त्वार्घ्यं प्रणमेत् सुधीः।
मन्त्रैरेतैः प्रयोगादावन्ते संयतमानसः॥ १३२ ॥
उह्यमानममित्रघ्नो निशायां हव्यवाहने।
हविषा जप्तमन्त्रेण तृप्तो भव तया सह॥ १३३ ॥
जातवेदो महादेव तप्तजाम्बूनद प्रभ !।
स्वाहापते विश्वभक्ष लवणं दह सन्दहन् !॥ १३४ ॥
ॐ ईशे सर्वार सर्वाणि अस्तं मुक्तं त्वया गजत्।
महादेवि ! नमस्तुभ्यं वरदे ! कामदा भव॥ १३५ ॥
नमोऽमयि महादेवि महादेवस्य सुव्रते !।

त्रियामे ! पुंरुषं हत्वा वशमानय दह्य मे ॥ १३६ ॥
ॐ दुर्गे दुर्गतिरहिते दुर्गमबोधनाकुले ! ।
चक्रशङ्खधरे देवि दुष्टशत्रुभयङ्करि ! ॥ १३७ ॥
नमस्ते दह शत्रून् मे वशमानय चण्डिके ! ।
शाकम्भरि महादेवि ! शरणं मे भवानघे ! ॥ १३८ ॥
श्रीं भद्रकालि भयाभीष्टे भद्रसिद्धिप्रदायिनि ! ।
सपत्नान्मे हन हन दह शोषय तापय ॥ १३९ ॥
शूलासिशक्तिवज्राद्यैरुत्कृत्योत्कृत्य मारय ।
महादेवि महाकालि रक्षास्मानम्बतात्मिके ! ॥ १४० ॥
साध्यं संस्मृत्य निर्भिद्य पुत्तलीं सप्तधा ततः ।
एकैकपञ्चकं समुच्चार्य जुहुयादेधितेऽनले ॥ १४१ ॥
प्रथमो दक्षिणः पादस्तत्करस्तदनन्तरम् ।
शिरस्तृतीयमाख्यातं वामहस्तमतः परम् ॥ १४२ ॥
मध्यादूर्द्ध्वं पञ्चमः स्यादधो यः षष्ठ ईरितः ।
सप्तमो वामपादः स्यादेवं भागक्रमः स्मृतः ॥ १४३ ॥
सप्तसप्तविभागो वा प्रोक्तेष्वेषु यथाविधि ।
कृत्वैवमर्चयित्वाग्निं प्रणमेद्दण्डवत्ततः ॥ १४४ ॥
यजमानो धनैर्धान्यैः प्रीणयेद् गुरुमात्मनः ।
अनेन विधिना मन्त्री वशयेदसुरान् सुरान् ॥ १४५ ॥
किं पुनर्मनुजान् भूपानमात्यान् पयोषितः ।
मारणे पूर्वसंप्रोक्तं पुत्तलीनां चतुष्टयम् ॥ १४६ ॥
निवेशयेद् यथापूर्वं साधकेन्द्रो विधानवित् ।
अपरान् वक्ष्यमाणेन विधानेन प्रकल्पयेत् ॥ १४७ ॥
काकोलूकपारावतविट्तिलचूर्णशरामठैः ।
लवणकविल्वनिर्यासं साध्यवामाङ्घ्रिरेणुभिः ॥ १४८ ॥
महिषमूत्रसम्पिष्टैः पूर्वोक्तलवणान्वितैः ।

विधाय पुत्तलीं सम्यक् प्राणस्थापनमाचरेत्। १४८॥
जपपूजादिकं सर्वं कुर्य्यात् प्रागुक्तवर्त्मना।
ततः पूर्वोदिते कुण्डे रात्रौ प्रज्वलितेऽनले॥ १५०॥
दुर्गां वा भद्रकालीं वा समाराध्य यथाविधि।
धारयन्निशितं शस्त्रं सव्यहस्तेन साधकः॥ १५१॥
वामपादं समारभ्य दक्षिणाङ्घ्र्यवसानकम्।
छित्त्वा छित्त्वा प्रजुहुयान्निराहारो जितेन्द्रियः॥ १५२॥
कृष्णाष्टमीं समारभ्य यावत् कृष्णचतुर्द्दशी।
अनेनैव विधानेन होमं कुर्य्याद्विचक्षणः॥ १५३॥
त्रिसप्ताहप्रयोगेण मारयेद्रिपुमात्मनः।
कारस्करोऽथ धात्री स्यादुडुम्बरतरुः पुनः॥ १५४॥
जम्बूखादिरकृष्णाख्यवंशपिप्पलसंज्ञकाः।
नागरौहिणनामानौ पलाशप्लक्षसंज्ञकौ॥ १५५॥
जम्बूश्च बिल्वार्जुनाख्यविकङ्कतमहीरुहाः।
वकुलः सरलः सर्जो मञ्जुलः पनसार्ककौ॥ १५६॥
शमीकदम्बनिम्बाम्रमधुका ऋक्षशाखिनः।
आत्मरक्षादिकं सर्वं कुर्य्यान्मन्त्री यथा पुरा॥ १५७॥
अमुना मनुना सम्यगभीष्टफलसाधनम्।
सदृशो नास्ति मन्त्रोऽन्यः सत्यमेतन्न चान्यथा॥ १५८॥

इति सारदातिलके द्वाविंशः पटलः।

---

## त्रयोविंशः पटलः।

अथ त्र्यम्बकं मन्त्रमभिधास्याम्यनुष्टुभम्।
जप्यमानो नरं कालः स्वयं वीक्षितुमक्षमः॥ १॥
वशिष्ठोऽस्य मुनिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम्।

देवतास्य समुद्दिष्टा त्र्यम्बकः पार्वतीपतिः ॥ २ ॥
विभक्तैर्मन्त्रवर्णैः स्यात् षडङ्गानां प्रकल्पना ।
हृदयं त्रिभिराख्यातं चतुर्भिः शिर ईरितम् ॥ ३ ॥
शिखाष्टभिः समुद्दिष्टा नवतिः कवचं मतम् ।
पञ्चभिर्नेत्रमाख्यातमस्त्रं त्रिभिरुदाहृतम् ॥ ४ ॥
पूर्वपश्चिमयाम्येषु उत्तरे तदनन्तरम् ।
उरौ गले तथास्येषु नाभिहृत्पृष्ठकुक्षिषु ॥ ५ ॥
लिङ्गपायूरुमूलान्तर्जानुयुग्मेषु तत्परम् ।
तद्वृत्तयुग्मे स्तनयोः पार्श्वयोः पादयोः पुनः ॥ ६ ॥
पाण्योर्नासिकयोः शीर्षे मन्त्रवर्णान् न्यसेत् क्रमात् ।
पदान्येकादश न्यस्येच्छिद्रे भ्रूयुगलेषु च ॥ ७ ॥
वक्त्रे गण्डयुगे भूयो हृदये जठरे पुनः ।
ऊरौ नाभौ पदे चैव न्यासमेवं समाचरेत् ॥ ८ ॥
हस्ताभ्यां कलशद्वयामृतरसैराप्लावयन्तं शिरो
द्वाभ्यां तौ दधतं मृगाक्षवलये द्वाभ्यां वहन्तं परम्
अङ्कन्यस्तकरद्वयामृतघटं कैलासकान्तं शिवं
स्वच्छाम्भोजगतं नवेन्दुमुकुटं देवं त्रिनेत्रं भजे ॥ ९ ॥
जपेन्मन्त्रं लक्षमेवं देवं ध्यायन् जितेन्द्रियः ।
जुहुयाद्दशभिर्द्रव्यैरयुतं घृतसंप्लुतम् ॥ १० ॥
बिल्वं पलाशं खदिरं वटश्च तिलसर्षपौ ।
दौग्धं दुग्धं दधि पुनर्दूर्वान्तानि विदुर्बुधाः ॥ ११ ॥
पश्चाच्चरोदिते पीठे पूजयेद्वृषभध्वजम् ।
मूर्त्तिं मूलेन संकल्प्य वक्ष्यमाणेन वर्त्मना ॥ १२ ॥
पूर्वमङ्गानि संपूज्य पश्चान्मूर्त्तीः प्रपूजयेत् ।
अर्केन्दुवसुधातोयवह्निरधियदात्मानः ॥ १३ ॥
रमा राका प्रभा ज्योत्स्ना पूर्णोषा प्रसन्ना स्वधा ।

अष्टाविमाः क्रमात् पूज्यास्तृतीयावरणे ततः ॥ १४ ॥
विश्वा विद्या सिता प्रह्वा सारा सन्ध्या शिवा निशा।
चतुर्थावरणे पूज्याः शक्तयोऽष्टौ क्रमादिमाः ॥ १५ ॥
आर्या प्रज्ञा प्रभा मेधा शान्तिः कान्तिर्धृतिर्मतिः।
पञ्चमावरणे पूज्याः क्रमादेतास्ततः परम् ॥ १६ ॥
परमा पावनी पद्मा शान्ता मोघा जयामला।
षष्ठावरणगाः पूज्या लोकपालास्ततः परम् ॥ १७ ॥
एवं कृते प्रयोगार्हो जायतेऽयं महामनुः।
अयुतं जुहुयाद्बिल्वसमिद्भिर्ब्रह्मतेजसे ॥ १८ ॥
खादिरैरयुतं हुत्वा कान्तिं पुष्टिमवाप्नुयात्।
वटवृक्षस्य समिधो जुहुयादयुतावधि ॥ १९ ॥
धनधान्यसमृद्धिः स्यादचिरेणैव साधकः।
तिलैस्तत्संख्यया हुत्वा सर्वपापैः प्रमुच्यते ॥ २० ॥
सिद्धार्थैरयुतं हुत्वा शत्रून् विजयते नृपः।
अनेनैव विधानेन नश्येन्मृत्युरकालतः ॥ २१ ॥
पायसेन कृतो होमो रक्षाश्रीकीर्त्तिदायकः।
पशुदुग्धेन सिद्धान्नं हुत्वा कृत्यां विनाशयेत् ॥ २२ ॥
अयमेव मतो होमः शान्तिश्रीसम्पदावहः।
दधिहोमेन संवादं कुर्य्याद्विद्वेषिणोर्मिथः ॥ २३ ॥
प्रत्यहं जुहुयान्मन्त्री दूर्वा अष्टोत्तरं शतम्।
आमयान् निखिलान् छित्त्वा दीर्घमायुरवाप्नुयात् ॥ २४ ॥
जुहुयात् जन्मदिवसे पायसान्नैर्घृतान्वितैः।
दद्यादनिन्दितां लक्ष्मीमारोग्यमतुलं यशः ॥ २५ ॥
गव्यदुग्धघृताक्ताभिर्दूर्वाभिर्जुहुयाद्वशी।
सविंशतिशतं सम्यक् स्वजन्मदिवसे सुधीः ॥ २६ ॥
आमयैः सकलैर्मुक्तो जीवेद्वर्षशतं सुधीः।

काश्मरीसमिधस्तिस्रः पयोऽनु विंशतं पृथक् ॥ २७ ॥
जुहुयाद्ब्राह्मणानन्ते भोजयेन्मधुरान्वितम्।
प्रीणयेद्धनधान्याद्यैरात्मनो गुरुमादरात् ॥ २८ ॥
अनामयमवाप्नोति दीर्घमायुः श्रिया सह।
सघृतेन पयोऽन्नेन हुत्वा पर्वणि पर्वणि ॥ २९ ॥
राज्यश्रियमवाप्नोति षण्मासाभ्यान्न संशयः।
लाजैर्विशुद्धैर्जुहुयात् कन्यार्थी सारवासरे ॥ ३० ॥
क्षीरद्रुमसमिद्धोमाद्ब्राह्मणादीन् वशं नयेत्।
स्नात्वा सहस्रं प्रजपेदादित्याभिमुखो मनुम् ॥ ३१ ॥
आधिव्याधिविनिर्मुक्तो दीर्घमायुरवाप्नुयात्।
अनेन मनुना सर्वं साधयेदिष्टमात्मनः ॥ ३२ ॥
यैः साधयन्ति सततं प्राप्नोति निजवाञ्छितम्।
पूर्वोक्त एव मुन्याद्याः परं तेजोऽस्य देवता ॥ ३३ ॥
हृदये दशभिः प्रोक्तं रुद्रार्णैः शिर ईरितम्।
द्वाविंशत्या शिखा प्रोक्ता तावद्भिः कवचं मतम् ॥ ३४ ॥
स्यात् पञ्चदशभिर्नेत्रमस्त्रं सप्तदशाक्षरैः।
वर्णन्यासादिकं सर्वं कुर्य्यात् पूर्वोक्तवर्त्मना ॥ ३५ ॥
सत्यमानविवर्जितं श्रुतिगिरामाद्यं जगत्कारणं
व्याप्तं स्थावरजङ्गमं मुनिवरैर्ध्यातं निरुद्धेन्द्रियैः।
अर्काग्नीन्दुमयं शताक्षरवपुस्तारात्मकं सन्ततं
नित्यानन्दगुणालयं परतरं वन्दामहे तन्महः ॥ ३६ ॥
लक्षमानं जपेदेनमयुतं पायसाम्भसा।
जुहुयाद् घृतसिक्तेन मन्त्रवित् विजितेन्द्रियः ॥ ३७ ॥
शैवे पीठे यजेत् सम्यक् अङ्गमानविधानतः।
आद्यामावृतिमभ्यर्चेत् षडङ्गैर्देशिकोत्तमः ॥ ३८ ॥
गायत्रीशक्तिभिस्तिस्रः पूजयेदावृतीः क्रमात्।

आवृतिः पञ्चमी प्रोक्ता त्रिष्टुबुक्तपक्तिभिः ॥ ३९ ॥
अनुष्टुप्पङ्क्तिभिः प्रोक्तमावृतीनां चतुष्टयम्।
इन्द्राद्यैर्दशमी प्रोक्ता वज्राद्यैस्तत्परा मता ॥ ४० ॥
एवं सिद्धे मनौ मन्त्री भवेद्भास्करसन्निभः।
सुधालतोद्भवैः खण्डैर्जुहुयात् क्षीरसंयुतैः ॥ ४१ ॥
दीर्घमायुरवाप्नोति निराधिर्व्याधिवर्जितः।
दूर्वाभिर्घृतसिक्ताभिस्तदेव फलमाप्नुयात् ॥ ४२ ॥
मधुरत्रयसंसिक्तैर्जुहुयादरुणाम्बुजैः।
महालक्ष्मीमवाप्नोति षड्भिर्मासैर्विधानवित् ॥ ४३ ॥
रक्तोत्पलैस्त्रिमध्वक्तैर्जुहुयात् सर्वसम्पदे।
श्रीप्रसूनैः प्रजुहुयात् रमाया वसतिर्भवेत् ॥ ४४ ॥
सहस्रं जुहुयान्नित्यं मासमेकं तिलैः शुभैः।
भानुसंख्यान् द्विजान् नित्यं भोजयेत् मधुरान्वितैः ॥४५॥
सर्वपापविनिर्मुक्तः सर्वरोगविवर्जितः।
कृत्याद्रोहग्रहद्रोहान् जित्वा दीर्घं स जीवति ॥ ४७ ॥
प्रातःस्नानरतो मन्त्री जपेन्नित्यं शतं शतम्।
भानुमालोकयन्नित्यं स जीवेच्छरदां शतम् ॥ ४८ ॥
तारव्याहृतिसंरुद्धं जपेन्मन्त्रं शताक्षरम्।
नित्यमष्टोत्तरशतं निःश्रेयसफलाप्तये ॥ ४९ ॥
गायत्र्याद्यं जपेन्मन्त्रं सर्वपापविमुक्तये।
सर्वशत्रुविनाशाय त्रिष्टुबाद्यमिमं जपेत् ॥ ५० ॥
अनुष्टुबाद्यं प्रजपेदायुरारोग्यसिद्धये।
शताक्षरो मनुः प्रोक्तः समस्तपुरुषार्थदः ॥ ५१ ॥
ऋचो विधानं वारुण्या यथावदभिधीयते।
ऋग्वेदे सा समुद्दिष्टा ध्रुवा स्वाद्या मनीषिभिः ॥ ५२ ॥
वशिष्ठो मुनिराख्यातश्छन्दस्त्रिष्टुबुदाहृतम्।

वरुणो देवता प्रोक्तस्तद्वीजैरङ्गकल्पना ॥ ५३ ॥
अष्टाभिर्हृदयं प्रोक्तं सप्तभि: शिर ईरितम्।
शिखा षड्वर्णैराख्याता वस्वर्णैः कवचं स्मृतम् ॥ ५४ ॥
साग्रेषु सन्धिषु पदे गुह्ये मेढ्रे च नाभिषु।
कुचौ पृष्ठे हृदि कुचे गले बाह्वग्रसन्धिषु ॥ ५५ ॥
वक्त्रे कपालनासाक्षिवर्णश्च मध्यमस्तके।
शिर:सवाङ्गयोर्न्यस्येन्मन्त्रवर्णान् यथाविधि ॥ ५६ ॥
चन्द्रप्रभं पङ्कजसन्निषण्णं पाशाङ्कुशाभीतिवरं दधानम्।
मुक्ताविभूषाञ्चितसर्वगात्रं ध्यायेत् प्रसन्नं वरुणं विभूत्यै ॥ ५७ ॥
लक्षमेनं जपेन्मन्त्रं पायसेन दशांशत:।
सर्पि:सिक्तेन जुहुयान्मन्त्री मन्त्रस्य सिद्धये ॥ ५८ ॥
धर्मादिकल्पिते पीठे वरुणं सम्यगर्चयेत्।
कृत्वाङ्गपूजनं शेषं वासुकिं तक्षकं पुन: ॥ ५९ ॥
कर्कोटकं तत: पद्मं महापद्ममनन्तरम्।
शङ्खपालाख्यकुलिकौ सम्यक् पत्रेषु पूजयेत् ॥ ६० ॥
इन्द्राद्यानायुधांश्चैव चार्चयेत् तदनन्तरम्।
ऋणमुक्त्यै जपेन्मन्त्रं प्रत्यहं साष्टकं शतम् ॥ ६१ ॥
जपेनानेन लभते महतीं मरुतां श्रियम्।
सितेक्षुशकलैर्मन्त्री जुहुयाद् घृतसंप्लुतै: ॥ ६२ ॥
चतुर्दिनं दशशतमृणमुक्त्यै महाश्रिये।
समिद्भिर्वेतसोत्थाभि: चौराक्ताभिर्दिनत्रयम् ॥ ६३ ॥
जुहुयादिष्टसंसिद्ध्यै मन्त्रविद्विजितेन्द्रिय:।
अनेन विधिना मन्त्री सूर्ये शतभिषां गते ॥ ६४ ॥
चतु:शतं घृतयुतं पायसं जुहुयाद् वशी।
ऋणनाशाय सम्यक्त्वे वश्यारोग्याभिवृद्धये ॥ ६५ ॥
भृगुवारे कृतो होम: पायसेन ससर्पिषा।

महतीं सम्पदं कुर्य्यात् नाशयेत् सकलापदः॥ ६६॥
शालिभिर्घृतसंसिक्तैः साधको यतमानसः।
तद्दत् चतुःशतं हुत्वा स्तम्भयेत् परसैनिकम्॥ ६७॥
सायं प्रत्यङ्मुखो वह्निमाराध्य प्रजपेन्मनुम्।
चतुःशतं विमुच्येत मन्त्री सर्व्वैरुपद्रवैः॥ ६८॥
मन्त्री प्रत्यङ्मुखो भूत्वा तर्पयेत् विमलैर्जलैः।
सर्व्वोपद्रवनाशाय समस्ताभ्युदयाप्तये॥ ६९॥
बहुना किमिहोक्तेन मन्त्रेणानेन साधकः।
साधयेत् सकलान् कामान् जपहोमादितत्परः॥ ७०॥
प्राणप्रतिष्ठामन्त्रस्य विधानमभिधीयते।
येन प्राणेरिता मन्त्राः प्राणवन्तो भवन्ति ते॥ ७१॥
पाशाङ्कुशपुटाशक्तिर्वाणीविन्दुविभूषितः।
साद्याः सप्तसकारान्ता व्योमसार्द्धेन्दुसंयुतम्॥ ७२॥
तदन्ते हंसमन्त्रः स्यात्ततोऽमुष्य पदं भवेत्।
प्राणा इति वदेत् पश्चादिह प्राणास्ततः परम्॥ ७३॥
अमुष्य जीव इहान्ते स्थितामुष्य पदं भवेत्।
सर्व्वेन्द्रियाण्यमुष्यान्ते वाङ्मनश्चक्षुरन्ततः।
श्रोत्रघ्राणपादप्राणा इहागत्य सुखं चिरम्॥ ७४॥
तिष्ठन्त्वग्निवधूरन्ते प्राणमन्त्रोऽयमीरितः।
प्रत्यमुष्यपदपूर्व्वं पाशादीनि प्रयोजयेत्॥ ७५॥
प्रयोगेषु समाख्यातः प्राणमन्त्रो मनीषिभिः।
ब्रह्मविष्णुशिवाः प्रोक्ता मुनयस्तन्त्रवेदिभिः॥ ७६॥
उक्तामृग् च यजुःसामच्छन्दश्छन्दोविशारदैः।
चैतन्यरूपाः प्राणाद्या देवता शक्तिरीरिता॥ ७७॥
कवर्गेण वियत् पूर्व्वभूतैर्हृदयमीरितम्।
शिरश्च वद्यशब्दाद्यैरीरितं तदनन्तरम्॥ ७८॥

ज्ञानेन्द्रियैस्तु षडाद्यैस्तच्छिखा परिकीर्त्तिता।
कर्मेन्द्रियैस्तु षडाद्यै: कवचं परिकीर्त्तितम्॥ ७९॥
वचनाद्यैश्च षडाद्यैर्विलोचनमुदीरितम्।
शब्दाद्यैर्यादिसंयुक्तैरस्त्रमस्य समीरितम्॥ ८०॥
अथानन्ता: समाख्याता अङ्गमन्त्रा: सजातिभि:।
नाभेश्चरणपर्य्यन्तं पाशबीजं प्रविन्यसेत्॥ ८१॥
हृदयान्नाभिपर्य्यन्तं शक्तिबीजं तत: परम्।
मूर्द्धादि हृदयं यावदङ्कुशं विन्यसेत्तत:॥ ८२॥
हृदये धातुषु न्यस्येद् वादीन् सप्त यथाक्रमम्।
प्राणे जीवे ततो न्यस्येद्धंसवर्णद्वयं पृथक्॥ ८३॥
कुर्य्याद् व्यापकमन्त्रेण समस्तेन विधानवित्।
ततो विचिन्तयेद्देवीं जीवभूतां जगन्मयीम्॥ ८४॥
आदित्यवदरुणपद्मसंस्थां पाशाङ्कुशाविक्षुशरासनांश्च।
शूलं कपालं दधतीं कराग्रै रक्तां त्रिनेत्रां प्रणमामि देवीम्॥ ८५
एवं ध्यात्वा जगद्धात्रीं लक्षमेकं जपेन्मनुम्।
जुहुयात्तद्दशांशेन चरुभिर्घृतसंयुतै:॥ ८६॥
षट्कोणाढ्ये शक्तिपीठे विधिनानेन पूजयेत्।
अर्चयेत् षट्सु कोणेषु ब्रह्माणं विष्णुमीश्वरम्॥ ८७॥
वाणीं लक्ष्मीं उमां पश्चात् षडङ्गानि प्रपूजयेत्।
दलेषु मातर: पूज्यास्तद्वाह्ये लोकपालका:॥ ८८॥
एवं संपूजयेद्देवीं सुगन्धिकुसुमादिभि:।
इति संसाधितो मन्त्र: षट्कर्मफलदो भवेत्॥ ८९॥
स्थापयेद् मनुनानेन प्राणान् सर्वत्र देशिक:।
बीजान्तेऽमुष्यशब्दानामादौ दूती: प्रयोजयेत्॥ ९०॥
अमृता वैवस्वता भूयो जीवघ्ना प्राणघ्ना तत:।
अकृष्या प्रथमा पश्चात् प्रथमादि स्फुलिङ्गिनी॥ ९१॥

चेतप्रतिकृतीत्येता: प्राणकृत्यौ तत्र स्मृता:।
पाशेन बद्धचेष्टस्य शक्त्या स्वीकृतचेतस: ॥ ९२ ॥
अङ्कुशेन कृतस्याथ: साध्यस्यासून् समाहरेत्।
द्वादशाङ्गुलमानेन कृत्वा साध्यस्य पुत्तलीम् ॥ ९३ ॥
तस्या: प्राणात्मकं मन्त्रं सकीटं हृदये न्यसेत्।
निशीथसमये साध्ये सुप्ते तस्य हृदम्बुजे ॥ ९४ ॥
दानवासुरवह्नीन्द्रवरुणानामत: परम्।
ईशराक्षसशीतांशुयमानां कर्णिकान्तरे ॥ ९५ ॥
यादीन् हंससमायुक्तान् भृङ्गाकारान् ननु स्मरेत्।
शिरोबिन्दुसमुद्भूततन्तुसम्बन्धविग्रहान् ॥ ९६ ॥
एवमात्महृदम्भोजे भृङ्गरूपान् धिया स्मरेत्।
आत्महृत्पद्मगा भृङ्गा: प्रस्थाप्य स्वस्ववर्त्मना ॥ ९७ ॥
एकैकात् साध्यहृत्पद्मात् भृङ्गमेकैकमानयेत्।
पुत्तल्यां स्थापयेन्मन्त्री स्वचित्ते वा विधानवित् ॥ ९८ ॥
तन्तुच्छेदं प्रकुर्वीत वह्निबीजेन सर्वत:।
आकृष्टान् साध्यहृद्भृङ्गान् तद्वा संस्तम्भयेत्तत: ॥ ९९ ॥
एवमेकादशावृत्ती: कुर्य्यात् सर्वेषु कर्मसु।
वश्याकर्षणयोर्यादीन् वर्णान् संस्मरेत् सुधी: ॥ १०० ॥
मोहविद्वेषयोर्धीमान् कृष्णान्मारणकर्मणि।
पीतान् संस्तम्भने ध्यायेत् प्राणाकर्षणकर्मणि ॥ १०१ ॥
आकृष्टान् साध्यहृत्प्राणान् स्थापयेदात्मनो हृदि।
क्रूरकर्मसु पुत्तल्यां तेषां स्थापनमीरितम् ॥ १०२ ॥
प्राणान् साध्यस्य मण्डूकानात्मनस्तु भुजङ्गमान्।
संस्मरेत्तत्र निपुण: सदा क्रूरेषु कर्मसु ॥ १०३ ॥

वायुग्निशक्रवरुणेश्वरराक्षसेन्दु-
प्रेतेश पत्रलिखिते रययादिवर्णै:।

विन्द्वन्तकैत्वगतहंससमेतसाध्यं

प्राणात्मयन्त्रमथ वर्णकृतं धराख्यम् ॥ १०४ ॥

इत्थं प्रयोगकुशलो मनुनानेन मन्त्रवित् ।

वशयेत् सकलान् देवान् किं पुनः पार्थिवान् जनान् ॥१०५॥

आवाहन्यादिका मुद्रा प्रवक्ष्यामि यथाक्रमम् ।

याभिर्विरचिताभिश्च मोदन्ते सर्वदेवताः ॥ १०६ ॥

सम्यक् संपूरितः पुष्पैः कराभ्यां कल्पितोऽञ्जलिः ।

आवाहनी समाख्याता मुद्रा देशिकसत्तमैः ॥ १०७ ॥

अधोमुखी कृता सैव प्रोक्ता स्थापनकर्मणि ।

अश्लिष्टमुष्टियुगला प्रोन्नताङ्गुष्ठयुग्मका ॥ १०८ ॥

सन्निधाने समुद्दिष्टा मुद्रेयं तन्त्रवेदिभिः ।

अङ्गुष्ठगर्भिणी सैव सन्निरोधे समीरिता ॥ १०९ ॥

उत्तानमुष्टियुगला संमुखीकरणी मता ।

देवताङ्गे षडङ्गानां न्यासः स्यात् सकलीकृतिः ॥ ११० ॥

सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी ।

अवगुण्ठनमुद्रेयमभितो भ्रामिता सती ॥ १११ ॥

अन्योन्याभिमुखाश्लिष्टकनिष्ठानामिका पुनः ।

तथा तु तर्जनी मध्या धेनुमुद्रेयमीरिता ॥ ११२ ॥

अमृतीकरणं कुर्यात्तया देशिकसत्तमः ।

अन्योन्यग्रथिताङ्गुष्ठप्रसारितकराङ्गुली ॥ ११३ ॥

महामुद्रेयमुदिता परमीकरणे बुधैः ।

प्रयोजयेदिमा मुद्रा देवतायागकर्मणि ॥ ११४ ॥

आदिक्षान्तार्णयोगित्वादक्षमालेति कीर्त्तिता ।

तद्वर्णसंख्यैर्मणिभिर्जपमालां प्रकल्पयेत् ॥ ११५ ॥

रुद्राक्षमालया भद्रे जपेन सुमनोरथान् ।

पद्माक्षैर्विहिता माला शत्रूणां नाशिनी मता ॥ ११६ ॥

कुशग्रन्थिमयी माला सर्वपापविनाशिनी।
पुत्रजीवफलैः क्लृप्ता कुरुते पुत्रसम्पदम्॥ ११७॥
निर्मिता रौप्यमणिभिर्जपमालेप्सितप्रदा।
हिरण्मयैर्विरचिता माला कामान् प्रयच्छति॥ ११८॥
प्रवालैर्विहिता माला प्रयच्छेत् पुष्कलं धनम्।
सौभाग्यं स्फाटिकी माला मौक्तिकैर्विहिता श्रियम्॥११९॥
निर्मिता शङ्खमणिभिः कुरुते कीर्त्तिमक्षयाम्।
सर्वैरेतैर्विरचिता माला स्यान्मुक्तये नृणाम्॥ १२०॥
अथाभिधास्ये तन्त्रेऽस्मिन् सम्यक् षट्कर्मलक्षणम्।
सर्वतन्त्रानुसारेण प्रयोगे फलसिद्धिदम्॥ १२१॥
शान्तिवश्यस्तम्भनानि विद्वेषोच्चाटने ततः।
मारणान्तानि शंसन्ति षट्कर्माणि मनीषिणः॥ १२२॥
रोगकृत्याग्रहादीनां निरासः शान्तिरीरिता।
वश्यं जनानां सर्वेषां विधेयत्वमुदीरितम्॥ १२३॥
प्रवृत्तिरोधः सर्वेषां स्तम्भनं समुदाहृतम्।
स्निग्धानां द्वेषजननं मिथो विद्वेषणं मतम्॥ १२४॥
उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्त्तितम्।
प्राणिनां प्राणहरणं मारणं समुदाहृतम्॥ १२५॥
स्वदेवतादिक्कालादीन् ज्ञात्वा कर्माणि साधयेत्।
रतिर्वाणी रमा ज्येष्ठा दुर्गा काली यथाक्रमात्॥१२६॥
षट्कर्मदेवताः प्रोक्ताः कर्मादौ ताः प्रपूजयेत्।
ईशचन्द्रेन्द्रनिर्ऋतिवाय्वग्नीनां दिशो मताः॥ १२७॥
सूर्य्योदयं समारभ्य घटिका दशकं क्रमात्।
ऋतवः स्युर्वसन्ताद्या अहोरात्रं दिने दिने॥ १२८॥
वसन्तग्रीष्मवर्षाख्यशरद्धेमन्तशैशिराः।
हेमन्तः शान्तिके प्रोक्तो वसन्तो वश्यकर्मणि॥ १२९॥

शिशिरः स्तम्भने प्रोक्तो विद्वेषे ग्रीष्म ईरितः ।
प्रावृडुच्चाटने ज्ञेयो शरन्मारणकर्मणि ॥ १३० ॥
पद्माख्यं स्वस्तिकं भूयो विकटं कुक्कुटं पुनः ।
वज्रं भद्रकमित्याहुरासनानि मनीषिणः ॥ १३१ ॥
षण्मुद्राः क्रमतो ज्ञेयाः पद्मपाशगदाह्वयाः ।
मुषलाशनिखड्गाख्याः शान्तिकादिषु कर्मसु ॥ १३२ ॥
जलं शान्तिविधौ शस्तं वश्ये वह्निरुदाहृतः ।
स्तम्भने पृथिवी शस्ता विद्वेषे व्योम कीर्त्तितम् ॥ १३३ ॥
उच्चाटने स्मृतो वायुर्भूयोऽग्निर्मारणे मतः ।
तत्तद्भूतोदये सम्यक् तत्तन्मण्डलसंयुतम् ॥ १३४ ॥
तत्तत् कर्म विधातव्यं मन्त्रिणा निश्चितात्मना ।
शीतांशुसलिलक्षौणीव्योमवायुहविर्भुजाम् ॥ १३५ ॥
वर्णाः स्युर्मन्त्रबीजाना षट्कर्मसु यथाक्रमम् ।
ग्रथनञ्च विदर्भश्च सम्पुटो रोधनं तथा ॥ १३६ ॥
योगः पल्लव इत्येते विन्यासाः षट्सु कर्मसु ।
मन्त्रेणान्तरितान् कुर्य्यान्नामवर्णान् यथाविधि ॥ १३७ ॥
ग्रथनं तद्विजानीयात् प्रशस्तं शान्तिकर्मणि ।
मन्त्रार्णद्वन्द्वमध्यस्थं साध्यनामाक्षरं क्षिपेत् ॥ १३८ ॥
विदर्भः स च विज्ञेयो मन्त्रिभिर्वश्यकर्मणि ।
आद्यावन्ते च मन्त्रः स्यान्नाम्नोऽसौ संपुटः स्मृतः ॥ १३९ ॥
एषः संस्तम्भने शस्तः इत्युक्तो मन्त्रवेदिभिः ।
नाम्न आद्यन्तमध्येषु मन्त्रः स्याद्रोधनं मतम् ॥ १४० ॥
विद्वेषणविधानेषु प्रशस्तमिदमीरितम् ।
मन्त्रस्यान्ते भवेन्नामयोगः प्रोच्चाटने मतः ॥ १४१ ॥
अन्ते नाम्नो भवेन्मन्त्रः पल्लवो मारणे मतः ।
सितरक्तपीतमिश्रकृष्णधूम्राः प्रकीर्त्तिताः ॥ १४२ ॥

वर्णतो मन्त्रसंप्रोक्ता देवताः षट्सु कर्मसु।
मन्त्राणां लेखनद्रव्यं चन्दनं रोचना निशा ॥ १४३ ॥
गृहधूमो चिताङ्गारो मारणेऽष्टविषाणि च।
श्येनाग्निलोणपित्तानि धुस्तूरकरसं ततः ॥ १४४ ॥
गृहधूमस्त्रिकश्चैव विषाष्टकमुदाहृतम्।
देवताकालमुद्रादीन् सम्यक् ज्ञात्वा विचक्षणः।
षट्कर्माणि प्रयुञ्जीत यथोक्तफलसिद्धये ॥ ॥ १४५ ॥
इति श्रीसारदातिलके त्रयोविंशः पटलः।

---

## चतुर्विंशः पटलः।

अथ वक्ष्यामि यन्त्राणां भेदांस्तन्त्रेषु गोपितान्।
यैः साधयन्ति सततं मन्त्रिणो निजवाञ्छितम् ॥ १ ॥
मायां लिखेत् सार्णयुतंससाध्यं वर्णाष्टपत्रे स्वरकेशराढ्यम्।
बहिः सदीर्घैर्गगनैः प्रवीतं रक्षाकरं यन्त्रमिदं प्रशस्तम् ॥ २ ॥
पुटीकृतं भूमिपुरस्य युग्मे मायां लिखेन्मध्यग साध्यसंज्ञाम्।
वकारकोणेन महीपुरेण संवेष्टितं वश्यकरं सदुक्तैः ॥ ३ ॥
मध्ये सार्णविदर्भितं प्रपुटितं मृत्युञ्जयत्र्यक्षरैः
चान्तःस्थं निजसाध्यनाम विलिखेत् किञ्जल्कसंस्थान् स्वरान्।
पत्रेष्वष्टसु नाममन्त्रपुटितान् वर्णांस्तदग्रेष्वथो
यन्त्रं पद्मपुटीकृतं निगदितं मृत्युञ्जयाख्यं परम् ॥ ४ ॥
विषज्वरशिरोरोगनाशनं श्रीजयप्रदम्।
कान्तिपुष्टिप्रदं वश्यं सर्वकार्य्यार्थसाधनम् ॥ ५ ॥
साध्याढ्यचिन्तामणिमग्निगेहे विलिख्य बाह्येऽनलगेहवीतम्।
प्रवेष्टयेत्तद्बहिरष्टवर्णमन्त्रेण यन्त्रं ज्वरशान्तिदं स्यात् ॥ ६ ॥
संप्लवसः प्लावयसो मन्त्रोऽष्टाक्षर ईरितः।

एष एव भवेद्दत्तो विषज्वरविनाशने ॥ ७ ॥
नारठद्वयपुटं कुरुकुल्ले मन्त्रमत्र हुतभुक् गृहयुग्मे ।
मध्यकोणविवरेषु लिखेत्तद् यन्त्रमाशु विनिहन्ति भुजङ्गान्
॥ ८ ॥

ॐकारमायादिकमेखलेऽग्नि-
वधूमनुं वह्निगृहस्य युग्मे ।
मध्यादिकोणेषु विलिख्य भूर्जे
यन्त्रं विदध्याद्रिपुनागहारि ॥ ९ ॥
शूलाङ्किते वह्निगृहस्य युग्मे
धूमावतीमत्र लिखेत् क्रमेण ।
मध्यादिकोणेषु मरुद्गृहस्थं
यन्त्रं हुताशानिलवर्णवीतम् ॥ १० ॥

दान्तौ सार्घीशबिन्द्वन्तौ वीजे धूमावती द्विठः ।
धूमावतीमनुः प्रोक्तः शत्रुनिग्रहकारकः ॥ ११ ॥
विशेषात् कनकाम्भोभिः प्रेतकर्पटकल्पितम् ।
श्मशाने निखनेदेतच्छत्रुमुत्सादयेद्द्रुतम् ॥ १२ ॥
हुताशगेहद्वितयं लिखित्वा वैवस्वताय द्विठवर्णमन्त्रम् ।
मध्यान्तमाकल्पितमिन्दुबिम्बे यन्त्रं महाभूतपिशाचवैरि ॥१३॥
नामालिख्य मकारकोष्ठयुगलं कोणेषु तस्या लिखेत्
मन्त्रज्ञो ङ ञ ण नकारसहितां धूमावतीं यन्त्रगाम् ।
वीतं घुर्मुटिकां दिनापरमिदं बाह्यत्रिगेहावृतं
यन्त्रं प्रान्तपरेतभूमिनिहतं विद्वेषणं स्याद्द्विषाम् ॥ १४ ॥
पूर्वं घुर्मुटिके युग्मं ततो मर्कटिके युगम् ।
घोरे विद्वेषकारिणि विद्वेषो द्वेषकारिणि ॥ १५ ॥
अथ घोराघोरयोः स्यादमुकामुकयोस्ततः ।
विद्वेषय द्वयं हुं फट् विद्या घुर्मुटिकेरिता ॥ १६ ॥

प्राक् प्रत्यग्दक्षिणोदग्विधिवदभिलिखेत् स्पष्टरेखाचतुष्कं
कोणेष्वच्छूलयुक्तं वलययुगयुतं मध्यपूर्वं तदन्तम्।
मन्त्रस्यार्णान् परस्तात् वसुपदविवरेष्वष्टवर्णान् लिखित्व
शूलेष्वद्वादशार्णं विधिवदभिहितं प्रेतराजस्य यन्त्रम् ॥१७

यमराज सदामेय यदा मे दारुणोदयः।
सदयोनिजरूपाय क्षेपकश्च निरामयः ॥ १८ ॥
अनेन मनुना सिद्धिः सत्यं सत्यं न संशयः।
प्रणवः श्रोस्ततो दंष्ट्रा तत्परं विक्षतायतुः ॥ १९ ॥
वर्मास्त्रान्ते बधूवह्निर्मन्त्रोऽयं द्वादशाक्षरः।
विषवृक्षस्य फलके नृचर्मणि पटेऽथवा ॥ २० ॥
आलिख्याष्टविषैरेतत् श्मशाने निखनेन्निशि।
ज्वरेण महताविष्टो मूर्च्छाकुलितमानसः।
रिपुर्गच्छति पक्षेण यमलोकं न संशयः ॥ २१ ॥

एकाशीतिपदेषु मध्यदहने साध्यं लिखेत् घूं पुनः
क्ष्रं श्रूं क्रूमिति दिग्गतासु विलिखेत् वीजानि पंक्तिष्वथ।
शिष्टे वै निशाचरादि विलिखेत् कालीमनुं पंक्तिश-
स्तद्वाह्ये यमवीजमग्निपवनं वीजञ्च यन्त्रं लिखेत् ॥ २२ ॥

'कालीमारय मालिका नीलामाक्षमालिनी।
मामोदे ततदेवी मा रक्ष तदव्रतक्षर ॥ २३ ॥
कालीमनुरयं प्रोक्तः कालरात्रिः स्ववैरिणाम्।
यमापाटटमायाय माटमोट टमोटमाम् ॥ ॥ २४ ॥
वामो भुवि विभूमो वा टट धीस्त्वटवीटट।
यमात्मकोऽयमाख्यातो श्लोको वैरिविनाशनः ॥ २५ ॥
लिखेदष्टविषाङ्गारैर्निम्बनिर्य्यासकज्जलैः।
निग्रहाख्यमिदं चक्रं काकपक्षेण कर्पटे ॥ २६ ॥
विभीतवृक्षे वल्मीके श्मशाने वा चतुष्पथे।

दक्षिणस्थेऽनिले मन्त्री निखनेदष्टरात्रिके ॥ २७ ॥
सर्वथा शत्रुरेतेन समाह्वाम्मरणं व्रजेत् ।
निगृह्यते महारोगैः पतितो वा भवेदसौ ॥ २८ ॥
शिलायामिष्टकायां वा चक्रमेतत् प्रकल्पितम् ।
मर्कटीविषदण्डीभिः समालिप्तमधोमुखम् ।
यन्त्रं रात्रौ खनेत्तत्र भूयो भूयो शुभं भवेत् ॥ २९ ॥
लिखेच्चतुःषष्टिपदेषु कालीमोशादिकन्यादियमात्मकेन ।
श्लोकेन संवेष्ट्य क्रमानुवायुबीजावृतं यन्त्रमिदं विदध्यात् ॥ ३० ॥
लिप्तं विषमसीदण्डीमर्कटीभिरधोमुखम् ।
निखनेद् यत्र तत्र स्यान्नृणामुच्चाटनं सदा ।
शस्यहानिमनावृष्टिं गवां नाशं करोति सः ॥ ३१ ॥
आख्यातुं कुरु मध्यतः स्मरगतामालिख्य जम्भादिकां
विद्यां दिग्गतपत्रकेष्वथ लिखेद्देवीं कुलेषु स्मरम् ।
कोणस्थेषु सनामकं बहिरतः पाशाङ्कुशाभ्यां वृतं
यन्त्रं वश्यकरं ग्रहादिभयकृत् क्षुद्राभिचारापहम् ॥ ३२ ॥
जम्भे जम्भिनि ठद्वन्द्वं मोहे मोहिनि ठद्वयम् ।
अन्धे अन्धिनि ठद्वन्द्वं रुन्धे रुन्धिनि ठद्वयम् ॥ ३३ ॥
हित्वा कामं लिखेच्छान्तिं यन्त्रेऽस्मिन् नृकपालके ।
सन्ध्यासु तापयेदेतदुच्चैः साध्यं वशं नयेत् ॥ ३४ ॥
हित्वा शान्तिं लिखेद्धर्मं पटे वा नरचर्मणि ।
वह्निवायुगृहावीतं श्मशानस्थं रिपुं हरेत् ॥ ३५ ॥
हित्वा वर्मं लिखेदस्मिन् फलकेऽश्वतरूद्भवे ।
वह्निवायुयुतं नाम विषाक्तरुधिरेण तत् ॥ ३६ ॥
चत्वरे निखनेत्तत्तं विद्वेषं कुरुते मिथः ।
हित्वा रेफयकारौ द्वौ लकारं मध्यतो लिखेत् ॥ ३७ ॥
धरापुरेण वीतं तदिष्टकान्तर्निवेशितम् ।

सर्वेषां स्तम्भनं कुर्य्यान्नात्र कार्य्या विचारणा ॥ ३८ ॥
हुत्वा लकारं तन्मध्ये वायुबीजं समालिखेत् ।
विषरक्तमसीकाकपुरीषैर्ध्वजवाससि ॥ ३९ ॥
श्मशाने निहितं कुर्य्यात् कुलोच्छेदं स्ववैरिणाम् ।
मुक्ता वायुमयं बीजं तत्र फट्कारमालिखेत् ॥ ४० ॥
तस्यैव कृष्णकाकस्य रुधिरेण यथाविधि ।
ईप्सिते निखनेत् स्थाने विद्वेषं कुरुते द्विषाम् ॥ ४१ ॥
अस्त्रबीजमपास्यास्मिन् लकारं स्वार्णसंयुतम् ।
विलिखेन्मन्त्रमेतत् स्याल्लोहत्रयसमावृतम् ॥ ४२ ॥
सर्वरोगप्रशमनं कृत्याद्रोहादिशान्तिदम् ।
विहाय बीजं तूङ्कारं ग्लौङ्कारं तत्र संलिखेत् ॥ ४३ ॥
षकारेण वृतं बाह्ये पाशाङ्कुशवृतं पुनः ।
टकारेण वृतं भूयो भूमिमण्डलमध्यगम् ॥ ४४ ॥
लकारैर्बिन्दुसंयुक्तैर्वेष्टितं तद्बहिः क्रमात् ।
साद्यन्तमातृकाबीजं सर्वं वृत्तेन वेष्टितम् ॥ ४५ ॥
कौशेयकर्पटे क्लृप्तमिष्टकाद्वयमध्यगम् ।
सेनाग्रे निखनेदेतत् स्तम्भनं कुरुते ध्रुवम् ॥ ४६ ॥
मध्ये श्रीनरसिंहबीजमथ तद्बाह्ये स्वरान् केशवे-
रविचन्द्रयमेन्द्रान् पश्चात् दिक्षु विलिखेत् मध्ये मनुं गारुड़म् ।
अन्तस्थान् मरुदग्निनैर्ऋतशिरस्त्वालिख्य चक्राकृतं
यन्त्रं षड्भिरष्टभिः परिवृतं संवर्त्तकैर्गारुड़म् ॥ ४७ ॥
संवर्त्तको नेत्रयुतः पार्थस्तारोऽग्निसुन्दरी ।
गारुड़ो मनुराख्यातो विषद्वयविनाशनः ॥ ४८ ॥
स्मरन् गरुड़मात्मानं स्तम्भनार्थं जपेन्नरः ।
विषमालोकनेनैव हन्यान्नागकुलोद्भवम् ॥ ४९ ॥
मध्ये वायुं भृगुस्थं विलिखतु विधिवत् साध्यनाम्ना समेतम् ।

किञ्जल्केषु स्वरा: स्युर्वसुदलविवरेष्वालिखेन्मध्यवीजम्।
काद्यर्णान् केशरेषु त्रिगुणवसुदलेवष्वपर्ययेन्मध्यवीजं
यन्त्रं संजीवनाख्यं सलिलपुरगतं क्षुद्ररोगादिहारि ॥ ५० ॥
मध्ये पिण्डमतो दलादिषु लिखेद्वारीशताराधिप-
प्रेताधीश्वरशक्रदिक्षु विलिखेत् मध्ये च वर्णान् लिखेत्।
यादीन् मारुतवह्निराक्षसशिर: स्वर्णान् बहिर्वेष्टयेत्
काद्यैर्वामविलोचनेन कथितं पिण्डाख्ययन्त्रं परम् ॥ ५१ ॥

मनुस्वरेन्दुजे साग्निसंयुतश्चतुराननः।
पिण्डवीजमिदं प्रोक्तं पुंसां सर्वार्थसाधनम् ॥ ५२ ॥
वीजेनानेन संजप्तं यन्त्रं रक्षाकरं परम्।
आयुरारोग्यजननं लक्ष्मीसौभाग्यवर्द्धनम् ॥ ५३ ॥
चौरसर्पमृगव्यालभूतामयनिकृन्तनम्।
गर्भरक्षाकरं स्त्रीणां पुत्रदं क्षुद्रनाशनम्।
धृतं मूर्ध्नि करोत्येतत् लोकवश्यमनुत्तमम् ॥ ५४ ॥
मध्ये तोयगृहे लकारविवरे सान्ताख्यसाध्यं लिखेत्
पत्रेष्वष्टसु हंसमन्त्रमभितो हंसार्णसंवेष्टितम्।
यन्त्रं भूमिगृहेण वेष्टितमिदं मूर्ध्ना सदा धारितं
हन्यात् क्षुद्रमहाग्रहामयरिपुं दद्यात् यश: सम्पदम् ॥५५॥

ईकारगर्भे विलिखेत् स्वसाध्य तमष्टपत्रेषु पुनर्विलिख्य।
संवेष्टयेत्तेन धरापुरस्थं यन्त्रं भवेद्वश्यकरं नराणाम् ॥ ५६ ॥

ताम्रपत्रे समालिख्य यन्त्रमेतत् सुसाधितम्।
वशयेत् सकलान् मर्त्त्यान् नात्र कार्य्या विचारणा ॥ ५७ ॥
मध्ये भान्तं भृगुविनिहितं नामवर्णै: प्रवीतं
टान्तं लान्तान्वितमथ विलिखेदष्टपत्रेषु भूय:।
भूविम्बस्थं निगदितमिदं साधुसंजीवनाख्यं
शत्रूद्भूतं भयमपहरेद्धार्य्यमाणं भुजेन ॥ ५८ ॥

वर्णावृतं साध्ययुतं सकारं टान्तं लिखेदष्टदलेषु हंसम्।
आवेष्टयेदङ्कुशबीजेन बाह्ये लान्तावृतं यन्त्रमिदं ज्वरघ्नम् ॥५९॥
टान्तं नाम लिखेत् चकारविवरे मृत्युञ्जयत्र्यक्षरी
रुद्धं तद्बहिरष्टपत्रविवरे साध्याह्वयं पूर्ववत्।
अथ किञ्जल्कयुते वसुद्वयदले पद्मे तथैवाह्वयं
द्वात्रिंशद्दलपङ्कजेषु च तथा काद्यर्णयुक्केशरे ॥ ६० ॥
ईकारेण समावीतं यन्त्रं मृत्युञ्जयाह्वयम्।
सर्वरोगाभिचारघ्नं सर्वसौभाग्यसिद्धिदम् ॥ ६१ ॥
ग्लौरुद्धं प्रणवद्वयं परिलिखेत् साध्यस्य नामान्वितं
बाह्ये भूपुरमष्टवज्रविलसत्तारं लिखित्वा पुनः।
ग्लौं कोणेषु दिशास्वलं प्रविलिखेत् पाशाङ्कुशत्र्यक्षरी-
वीतं स्तम्भनयन्त्रमावृतिलसज्जम्भादिविद्याष्टकम् ॥ ६२ ॥
जम्भे वह्निवधूः पूर्वं पश्चाज्जम्भिनि ठद्वयम्।
मोहे पावकजाया स्यात्ततो मोहिनि ठद्वयम्।
स्तम्भे हुताशनपत्नी स्यात्स्तम्भिनि द्विठसंयुतम् ॥ ६३ ॥
वान्तं नाम विलिख्य दिक्षु विलिखेत् भूयस्तमेवाष्टसु
क्षौणी विम्बमतो नरेन्द्रभुजगावन्योन्यवक्त्रौ लिखेत्।
आख्यान्तान् मुखयोर्विभीतफलके यन्त्रं समापादितं
निर्माल्ये निहितं सदा वितनुते वाचां द्विषां स्तम्भनम् ॥६४॥
साध्याढ्यं कवचं लिखेद् बहिरथो दिक्पत्रमध्येषु तत्
ग्लौं मध्येषु महीपुरस्य विलिखेत् कोणेषु शूलान्वितम्।
वज्रेष्वष्टसु वर्मतोयपुरगं भूविम्बमध्यस्थितं
यन्त्रं रात्रिविनायकान्तरगतं न्यस्येच्छरावद्वये ॥ ६५ ॥
रहस्यस्थाननिक्षिप्तं पूजितं प्रतिवासरम्।
स्तम्भनं कुरुते वाचां सेनादीनाञ्च वैरिणाम् ॥ ६६ ॥
कृत्वा रेखाष्टकमृजु पुनस्तिर्यगालिख्य षट्कं

बाह्यां वृत्तां लिखतु विधिवद्बिन्दुयुक्तं चकारम् ।
अन्तः पङ्क्तौ लिखतु धरणीं शिष्टकोष्ठत्रयान्तः
कृत्वा नाम प्रथममुदितं यन्त्रमेतज्ज्वरघ्नम् ॥ ६७ ॥
यन्त्रमेतत् समभ्यर्च्य दत्त्वा भूतबलिं ततः ।
साध्यस्य मूर्ध्नि बध्नीयात् सर्वज्वरविमुक्तये ॥ ६८ ॥
तारं लिखेद् वह्निपुरस्य युग्मे
तत्पार्श्वयोर्नाममथाग्निबीजम् ।
कोणेषु पूर्वापरयोश्च यन्त्रं
पाशाङ्कुशावीतमिदं ज्वरघ्नम् ॥ ६९ ॥
यन्त्रमभ्यर्च्य मन्त्रेण तारपाशाङ्कुशात्मना ।
निबध्नीयाज्ज्वरार्त्तस्य हस्तादौ ज्वरशान्तये ॥ ७० ॥
पिण्डे लिखेन्नाम ससर्णठान्तं विदर्भितं सस्वरकेशराढ्यम् ।
तान्ताष्टपत्रं वसुधापुरस्थं कान्तिप्रदं यन्त्रमिदं ज्वरघ्नम् ॥७१॥
तारादिलुद्दयजलादिठवर्णवीता
तस्यान्तरे विनिहिता विधिनैव माया ।
साध्यावृता बहिरतो वदमार्द्धचन्द्र-
यन्त्रं शिशो रुरुदिमां विनिहन्ति सद्यः ॥ ७२॥
व्योमार्णमालिख्य सबिन्दुमाख्या विदर्भितं तु त्रययुक्तकोणे ।
वसुन्धरा गेहयुगे निबद्धं यन्त्रं समस्तज्वरनाशनं स्यात् ॥७३॥
सार्णं नाम विदर्भितं प्रविलिखेद् बाह्येऽष्टपत्रे भृगुं
पद्मं स्यादथ कादिशान्तलिपिभिर्नि शहलं बाह्यतः ।
वीतं तोयपुरेण यन्त्रमुदितं भूर्जोदरे कल्पितं
भूतव्याधिमहाज्वरप्रशमनं कृत्यापहं श्रीपदम् ॥ ७४ ॥
चक्रे चतुःषष्टिपदे सबिन्दूनन्तस्थवर्णान् क्रमशो विलिख्य ।
रेखा शिरःकल्पितशूलयुक्तं यन्त्रेऽथ शीत ज्वरशान्तिहेतोः॥७५॥
पुटितभूमिपुरद्वयमध्यतः प्रविलिखेद्वनितां गिरिजापतेः ।

प्रणवमस्य लिखेद् वसुकोणगं ज्वरहरं परमेतदुदीरितम् ॥७६॥
वाणे लिखेन्नाम शशाङ्कमध्ये टान्तं बहिर्भूमिपुरं परस्तात्।
वृत्तावृतं यन्त्रमिदं समुक्तं वश्याय नृणां सकलार्त्तिशान्त्यै ॥७७॥

सस्वस्तिके दहनगेहयुगेससाध्यां
मायां लिखेल्ललितनागलतादलान्तः।
पाशाङ्कुशावृतमिदं निशि तापयेद् यो
मन्त्रं जपन् व्रजति तत् स्वयमेव साध्याम् ॥ ७८ ॥

षट्कोणे निजसाध्यनामसहितां मायां लिखेन्मध्यत-
स्तत्कोणेषु विदर्भितामभिलिखेच्छक्तिं स्वसाध्याख्यया।
बाह्ये भूमिपुरं सकोणसदनं ताम्बूलपत्रे कृतं
जप्तं खादयतु प्रियां निशि भवेत् सा तस्य वश्या चिरम् ॥७९॥
शक्तौ नाम लिखेच्चतुर्भिरभितो बीजैः समावेष्टयेद्
बीतं शक्तिमनोभवाङ्कुशमनुश्रीबीजकैः पिष्टजे।
रूपे साध्यनरस्य जप्तपवनं त्रिः स्वादुना तद्भजेत्
खादेत्तस्य वशं प्रयाति नियतं साध्यः सदा दासवत् ॥ ८० ॥
कामं लिखेत् साध्ययुतं सरोजे स्वरोल्लसत्केसरपत्रके च।
उदीरितं मन्मथमन्त्रमेतत् सौभाग्यलक्ष्मीविजयप्रदायि ॥८१॥

काश्मीररोचनालाक्षामृगेभमदचन्दनैः।
विलिखेद्धेमलेखन्या यन्त्राण्येतानि देशिकः ॥ ८२ ॥
भूमिस्पृष्टं शवस्पृष्टं दग्धं निर्माल्यसङ्गतम्।
विशीर्णं लङ्घितं मन्त्री यन्त्रं जातु न धारयेत् ॥ ८३ ॥
अथानन्दमयीं साक्षात् शब्दब्रह्मस्वरूपिणीम्।
ईडे सकलसम्पत्त्यै जगत्कारणमम्बिकाम् ॥ ८४ ॥

आद्यामशेषजननीमरविन्दयोने-
र्विष्णोः शिवस्य च वपुः प्रतिपादयित्रीम्।
सृष्टिस्थितिक्षयकरीं जगतां त्रयाणां

स्तुत्वा गिरा विमलयाप्यहमम्बिके ! त्वाम् ॥ ८५ ॥
पृथ्व्या जलेन शिखिना मरुताम्बरेण
होत्रेन्दुना दिनकरेण च मूर्त्तिभाजः ।
देवस्य मन्मथरिपोरपि शक्तिमत्ता-
हेतुस्त्वमेव खलु पर्वतराजपुत्रि ! ॥ ८६ ॥
त्रिस्रोतसः सकललोकसमर्चितायाः
वैशिष्ट्यकारणमवैमि तदेव मातः ! ।
त्वत्पादपङ्कजपरागविचित्रितासु
शम्भोर्जटासु सततं परिवर्त्तनं यत् ॥ ८७ ॥
आनन्दयेत् कुमुदिनीमधिपः कलानां
नान्यामिनः कमलिनीमथ नेतरां वा ।
एकस्य मोदनविधौ परमेक ईष्टे
त्वन्तु प्रपञ्चमभिनन्दयसि स्वदृष्ट्या ॥ ८८ ॥
आद्याप्यशेषजगतां नवयौवनासि
शैलाधिराजतनयाप्यतिकोमलासि ।
त्रय्याः प्रसूतिरनया न समीक्षितासि
ध्येयापि गौरि ! मनसां पथि न स्थितासि ॥ ८९ ॥
आसाद्य जन्म मनुजे सुचिराद् दुरापं
तत्रापि पाटवमवाप्य निजेन्द्रियाणाम् ।
नाभ्यर्चयन्ति जगतां जनयित्रि ! ये त्वां
निःश्रेणिकाग्रमधिरुह्य पुनः पतन्ति ॥ ९० ॥
कर्पूरचूर्णहिमवारिविलोड़ितेन
ये चन्दनेन कुसुमैश्च सुजातगन्धैः ।
आराधयन्ति हि भवानि ! समुत्सुकास्त्वां
ते खल्वशेषभुवनाधिभुजः प्रथन्ते ॥ ९१ ॥
आविश्वमध्यपदवी प्रथमे सरोजे

मुक्ताहिराजसदृशी विरचय्य विश्वम्।
विद्युल्लतावलयविभ्रममुद्वहन्ती
पद्मानि पञ्च विदलानि समश्नुवाना ॥ ८२ ॥
तन्निर्गतामृतरसैः परिषिक्तगात्री
मार्गेण तेन निलयं पुनरप्यवाप्ता।
येषां हृदि स्फुरसि जातु न ते भवेयु-
र्मातर्महेश्वरकुटुम्बिनि! गर्भभाजः ॥ ८३ ॥
आलम्बिकुन्तलभरामभिरामवक्त्रा-
मापीवरस्तनतटीं तनुवृत्तमध्याम्।
चिन्ताक्षसूत्रकलसालिखिताग्रहस्ता-
मावर्त्तयामि मनसा तव गौरि! मूर्त्तिम् ॥ ८४ ॥
आस्थाय योगमवजित्य च वैरिषट्क-
माबध्य चेन्द्रियगणं मनसि प्रसन्ने।
पाशाङ्कुशाभयवराढ्यकरां सुरक्ता-
मालोकयन्ति भुवनेश्वरि! योगिनस्त्वाम् ॥ ८५ ॥
उत्तप्तहाटकनिभा करिभिश्चतुर्भि-
रावर्त्तितामृतघटैरभिषिच्यमाना।
हस्तद्वयेन रुचिरे नलिने वहन्ती
पद्मापि साभयवरा भवसि त्वमेव ॥ ८६ ॥
अष्टाभिरुग्रविविधायुधवाहिनीभि-
र्दोर्वल्लरीभिरधिरुह्य मृगाधिराजम्।
दूर्वादलद्युतिभिरमर्त्त्यपचपचान्
न्यक् कुर्वती त्वमसि देवि! भवानि! दुर्गे! ॥ ८७ ॥
आदौ निदाघजलशीकरशोभिवक्त्रां
गुञ्जागुणेन परिकल्पितहारयष्टिम्।
पद्मांशुकामसितकान्तिमनङ्गहन्त्री-

माद्यौ पुलिन्दतरुणीमसकृत् स्मरामि ॥ ९८ ॥
हंसैर्गतिक्वणितनूपुरदूरकृष्टै-
र्मूर्त्तैरिवार्थवचनैरनुगम्यमानौ।
पद्माविवोर्ध्वमुखरूढसुजातनालौ
श्रीकण्ठपत्नि! शिरसैव दधे तवाङ्घ्री ॥ ९९ ॥
द्वाभ्यां समीचितुमतृप्तिमतेव दृग्भ्यां
उत्पाद्य भालनयनं वृषकेतनेन।
सान्द्रानुरागतरलेन निरीक्ष्यमाणे
जङ्घे उभे अपि भवानि! तवानतोऽस्मि ॥ १०० ॥
ऊरू स्मरामि जितहस्तिकरावलेपौ
स्थौल्येन पाण्डुरतया परिभूतरम्भौ।
श्रोणिभरस्य सहनौ परिकल्प्य दत्तौ
स्तम्भाविवाम्ब! वयसा तव मध्यमेन ॥ १०१ ॥
श्रोण्यौ स्तनौ च युगपत् प्रथयिष्यतोच्चै-
र्बाल्यात् परेण वयसा परिकृष्टसारः।
रोमावलीविलसितेन विभाव्यमूर्त्ति-
र्मध्यस्तव स्फुरतु मे हृदयस्य मध्ये ॥ १०२ ॥
सख्युः स्मरस्य हरनेत्रहुताशभीरो-
र्लावण्यवारिभरितं नवयौवनेन।
आपाद्य दत्तमिव पल्वलमप्रधृष्यं
नाभिं कदापि तव देवि! न विस्मरेयम् ॥१०३ ॥
ईशोपगुह्यपिशुनं हसितं दधाने
काश्मीरकर्दममनु स्तनपङ्कजे ते।
स्नातोत्थितस्य करिणः क्षणलब्धफेनौ
सिन्दूरितौ स्मरयतः समदस्य कुम्भौ ॥ १०४ ॥
कण्ठातिरिक्तगलदुज्ज्वलकान्तिधारा-

शोभौ भुजौ निजरिपोर्मकरध्वजेन ।
कण्ठग्रहाय रचितौ किल दीर्घपाशौ
मातर्मम स्मृतिपथं न विलङ्घयेताम् ॥ १०५ ॥
नात्यायतं रचितकम्बुविलासचौर्य्यं
भूषाभरेण विविधेन विराजमानम् ।
कण्ठं मनोहरगुणं गिरिराजकन्ये !
सञ्चिन्त्य तृप्तिमुपयामि कदापि नाहम् ॥ १०६ ॥
अत्यायताक्षमभिजातललाटपट्टं
मन्दस्मितोदरफुल्लकपोलरेखम् ।
बिम्बाधरं वदनमुन्नतदीर्घनासं
यस्ते स्मरत्यसकृदम्ब ! स एव जातः ॥ १०७ ॥
आदौ तुषारकररेखमनल्पगन्धं
पुष्पोपरि भ्रमदलिव्रजनिर्विशेषम् ।
यश्चेतसा कलयते तव केशपाशं
तस्य स्वयं गलति देवि ! पुराणपाशः ॥ १०८ ॥
श्रुतिषु चरितपाकं श्रीमतां स्तोत्रमेतत्
पठति य इह मर्त्यो नित्यमार्द्रान्तरात्मा ।
स भवति पदमुच्चैः सम्पदां पादनम्र-
क्षितिपमुकुटलक्ष्मीलक्षणानां चिराय ॥ १०९ ॥
इति श्रीसारदातिलके चतुर्विंशः पटलः ।

## पञ्चविंशः पटलः ।

अथ योगं प्रवक्ष्यामि साङ्गं संवित्प्रदायकम् ।
ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः ॥ १ ॥
शिवात्मनो भवेदैक्यं प्रतिपत्तिः परे विदुः ।
शिवशक्त्यात्मकं ज्ञानं जगुरागमवेदिनः ॥ २ ॥

पुराणपुरुषस्याब्जे ज्ञानमाहुर्विशारदाः।
जित्वादावात्मनः शत्रून् कामादीन् योगमभ्यसेत् ॥ ३ ॥
कामक्रोधौ लोभमोहौ तत्परं मदमत्सरौ।
वदन्ति दुःखदानेतानरीन् षड्वर्गमात्मनः ॥ ४ ॥
योगाष्टकैरिमान् जित्वा योगिनो योगमाप्नुयुः।
यमनियमावासनप्राणायामौ ततः परम् ॥ ५ ॥
प्रत्याहारं धारणाख्यं ध्यानं सार्द्धं समाधिना।
अष्टाङ्गान्याहुरेतानि योगिनो योगसाधने ॥ ६ ॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं अपार्जवम्।
क्षमा धृतिर्मिताहारः शौचञ्चेति यमा दश ॥ ७ ॥
तपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम्।
सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च जपाहुतम् ॥ ८ ॥
दशैते नियमाः प्रोक्ता योगशास्त्रविशारदैः।
पद्मासनं स्वस्तिकाख्यं वज्रं भद्रासने तथा ॥ ९ ॥
वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम्।
ऊर्वोरुपरि विन्यस्य सम्यक् पादतले उभे ॥ १० ॥
अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमादधः।
पद्मासनमिति प्रोक्तं योगिनां हृदयङ्गमम् ॥ ११ ॥
जान्वोरन्तरे सम्यक् कृत्वा पादतले उभे।
ऋजुकायो विशेद् योगी स्वस्तिकं तत् प्रचक्षते ॥ १२ ॥
सीवन्याः पार्श्वयोर्न्यस्येत् गुल्फयुग्मं सुनिश्चलम्।
वृषणाधः पार्श्वपादौ पाणिभ्यां परिबन्धयेत् ॥ १३ ॥
भद्रासनं समुद्दिष्टं योगिभिः पूजितं परम्।
ऊर्वोः पादौ क्रमान्न्यस्येज्जानुनोः प्राङ्मुखाङ्गुलीः ॥ १४ ॥
करौ निदध्यादाख्यातं वज्रासनमनुत्तमम्।
एकं पादमधः कृत्वा विन्यस्योरौ तथेतरम् ॥ १५ ॥

ऋजुकायो विशेद् योगी वीरासनमितीरितम्।
ईड़या कर्षयेद्वायुं वाह्यं षोड़शमात्रया॥ १६॥
धारयेत् पूरितं योगी चतुःषष्ट्या तु मात्रया।
सुषुम्ना मध्यगं सम्यग् द्वात्रिंशन्मात्रया शनैः॥ १७॥
नाड्या पिङ्गलया चैनं रेचयेद् योगवित्तमः।
प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः॥ १८॥
भूयो भूयः क्रमात्तस्य अभ्यासेन समाचरेत्।
मात्रावृद्धिक्रमेणैव सम्यग् द्वादश षोड़श॥ १९॥
जपध्यानादिभिर्युक्तं सगर्भं तं विदुर्बुधाः।
तदन्यं तं विगर्भञ्च प्राणायामं परे विदुः॥ २०॥
क्रमादभ्यस्यतः पुंसो देहे स्वेदोद्गमोऽधमः।
मध्यमः कम्पसंयुक्तो भूमित्यागः परो मतः॥ २१॥
उत्तमस्य गुणावाप्तिर्यावच्छीलनमिष्यते।
इन्द्रियाणां विचरतां विषयेषु निरर्गलम्॥ २२॥
बलादाहरणं तेभ्यः प्रत्याहारो विधीयते।
अङ्गुष्ठगुल्फजानूरुसीवनीलिङ्गनाभिषु॥ २३॥
हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां ततः परम्।
भ्रूमध्ये मस्तके मूर्ध्नि द्वादशान्ते यथाविधि॥ २४॥
धारणं प्राणमरुतो धारणेति निगद्यते।
समाहितेन मनसा चैतन्यान्तरवर्त्तिना॥ २५॥
आत्मनोऽभीष्टदेवानां ध्यानं ध्यानमिहोच्यते।
समत्वभावना नित्यं जीवात्मपरमात्मनोः॥ २६॥
समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम्।
पस्युवत्यङ्गुलायामं शरीरमुभयात्मकम्॥ २७॥
गुदध्वजान्तरे कन्दमुत्सेधाद्द्व्यङ्गुलं विदुः।
तस्माद् द्विगुणविस्तारं वृत्तरूपेण शोभितम्॥ २८॥

नाद्यस्तत्र समुद्भूता मुख्यास्तिस्रः प्रकीर्त्तिताः ।
इड़ा वामे स्थिता नाड़ी पिङ्गला दक्षिणे मता ॥ २९ ॥
तयोर्मध्यगता नाड़ी सुषुम्ना वाममाश्रिता ।
पादाङ्गुष्ठद्वयं याता शिखाभ्यां शिरसा पुनः ॥ ३० ॥
ब्रह्मस्थानं समापन्ना सोमसूर्य्याग्निरूपिणी ।
तस्या मध्यगता नाड़ी चित्राख्या योगिवल्लभा ॥ ३१ ॥
ब्रह्मरन्ध्रं विदुस्तस्याः पद्मसूत्रनिभं परम् ।
आधारांश्च विदुस्तत्र मतभेदादनेकधा ॥ ३२ ॥
दिव्यमङ्गमिदं प्राहुरमृतानन्दकारणम् ।
इड़ायां सञ्चरेच्चन्द्रः पिङ्गलायां दिवाकरः ॥ ३३ ॥
क्रतो योगनिदानज्ञैः सुषुम्नायान्तु तावुभौ ।
आधारकन्दमध्यस्थं त्रिकोणमतिसुन्दरम् ॥ ३४ ॥
ज्योतिषां निलयं दिव्यं प्राहुरागमवेदिनः ।
तत्र विद्युल्लताकारा कुण्डली परदेवता ॥ ३५ ॥
परिस्फुरति सर्वात्मा सुप्ताहिसदृशाकृतिः ।
बिभर्त्ति कुण्डलीशक्तिरात्मानं हंसमाश्रिता ॥ ३६ ॥
हंसः प्राणाश्रयो नित्यं प्राणो नाड़ीमयाश्रयः ।
आधारादुद्गतो वायुर्यथावत् सर्वदेहिनाम् ॥ ३७ ॥
देहं व्याप्य स्वनाड़ीभिः प्रयाणं कुरुते बहिः ।
द्वादशाङ्गुलमानेन तस्मात् प्राण इतीरितः ॥ ३८ ॥
रम्ये मृद्वासने शुद्धे पट्टाजिनकुशोत्तरे ।
बद्धैकमासनं योगी योगमार्गपरो भवेत् ॥ ३९ ॥
ज्ञात्वा भूतोदयं देहे विधिवत् प्राणवायुना ।
तत्तद्भूतं जपेद्देही दृढ़त्वावाप्तये सुधीः ॥ ४० ॥
दण्डाकारगतिर्भूमिः पुटयोरुभयोरधः ।
तोयस्य पावकस्योर्द्धं गतिस्तिर्य्यक् नभस्वतः ॥ ४१ ॥

गतिर्य्योम्नो भवेन्मध्ये भूतानामुदयः स्मृतः।
धारणे चोदये कुर्य्यात् स्तम्भनं वश्यकर्मवित्॥ ४२॥
शान्तिकं पौष्टिकं कर्म तोयस्य समये वसोः।
मारणादीनि मरुतो विपच्चोच्चाटनादिकम्॥ ४३॥
क्ष्वेडादिनाशनं शस्तमुदये च विहायसः।
अङ्गुलीभिर्दृढं बद्धा करणानि समाहितः॥ ४४॥
अङ्गुष्ठाभ्यामुभे श्रोत्रे तर्जनीभ्यां विलोचने।
नासारन्ध्रे मध्यमाभ्यामन्याभिर्वदनं दृढम्॥ ४५॥
बद्धाथ प्राणमनसा कर्मैकत्वमनुस्मरन्।
धारयेन्मारुतं सम्यग् योगोऽयं योगिवल्लभः॥ ४६॥
नादः सञ्जायते तस्य क्रमादभ्यसतः शनैः।
मत्तभृङ्गावलीगीतसदृशः प्रथमो ध्वनिः॥ ४७॥
वंशिकस्यानिलापूर्णवंशध्वनिनिभोऽपरः।
घण्टारवसमः पश्चाद् घनमेघसमोऽपरः॥ ४८॥
एवमभ्यसतः पुंसः संसारध्वान्तनाशनम्।
ज्ञानमुत्पद्यते पूर्वं हंसलक्षणमव्ययम्॥ ४९॥
पुंप्रकृत्यात्मकौ प्रोक्तौ विन्दुसर्गौ मनीषिभिः।
ताभ्यां क्रमात् समुद्भूतौ विन्दुसर्गावसानकौ॥ ५०॥
हंसौ तौ पुंप्रकृत्याख्यौ हंपुमान् प्रकृतिस्तु सः।
अजपा कथिता ताभ्यां जीवोऽयमुपतिष्ठते। ५१॥
पुरुषं स्वाश्रयं मत्वा प्रकृतिर्नित्यमात्मनः।
यदा तद्भावमाप्नोति तदा सोऽहमियं भवेत्॥ ५२॥
सकारञ्च हकारञ्च लोपयित्वा ततः परम्।
सन्धिं कुर्य्यात् पूर्वरूपस्तदासौ प्रणवो भवेत्॥ ५३॥
परानन्दमयं नित्यं चैतन्यैकगुणात्मकम्।
आत्माभेदस्थितं योगी प्रणवं भावयेत् सदा॥ ५४॥

आम्नायवाचामतिदूरमाद्यं वेद्यं स्वसंवेद्यगुणेन सन्तः ।
आत्मानमानन्दरसैकसिन्धुं पश्यन्ति तारात्मकमात्मनिष्ठाः ॥ ५५ ॥

सत्यं हेतुविवर्जितं श्रुतिगिरामाद्यं जगत्कारणं
व्याप्य स्थावरजङ्गमं निरुपमश्चैतन्यमन्तर्गतम् ।
आत्मानं रविवह्निचन्द्रवपुषं तारात्मकं सन्ततं
नित्यानन्दगुणालयं सुकृतिनः पश्यन्ति रुद्धेन्द्रियाः ॥ ५६ ॥

तारस्य सप्तविभवैः परिचीयमानं
मानैरगम्यमनिशं श्रुतिमौलिमृग्यम् ।
संवित्समस्तगमनस्वरमच्युतं तत्
तेजः परं भजत सान्द्रसुधाम्बुराशिम् ॥ ५७ ॥

हिरण्मयं दीप्तमनेकवर्णं त्रिमूर्त्तिमूलं निगमादिबीजम् ।
अङ्गुष्ठमात्रं पुरुषं भजन्ते चैतन्यमात्रं रविमण्डलस्थम् ॥ ५८ ॥

ध्यायन्ति दुग्धाब्धिभुजङ्गभोगे शयानमाद्यं कमलायताक्षम् ।
प्रफुल्लनेत्राम्बुजमञ्जनाभं चतुर्मुखेनाश्रितनाभिपद्मम् ॥ ५९ ॥

आम्नायगं त्रिवरणं घननीलमुद्यत्-
श्रीवत्सकौस्तुभगदाम्बुजशङ्खचक्रम् ।
हृत्पुण्डरीकनिलयं जगदेकमूल-
मालोकयन्ति कृतिनः पुरुषं पुराणम् ॥ ६० ॥

बिन्दोर्नादसमुद्भवः समुदिते नादे जगत्कारणं
तारं तत्त्वमुखाम्बुजं परिवृतं वर्णात्मकैर्भूतजैः ।
आम्नायाङ्घ्रिचतुष्टयं पुररिपोरानन्दमूलं वपुः
पायाद्वो मुकुटेन्दुखण्डविलसद्दिव्यामृतौघप्लुतम् ॥ ६१ ॥

पिण्डं भवेत् कुण्डलिनी शिवात्मा पदन्तु हंसः सकलान्तरात्मा ।
रूपं भवेद्बिन्दुरमन्दकान्तिरतीतरूपं शिवसामरस्यम् ॥ ६२ ॥

पिण्डादियोगं शिवसामरस्यात् सबीजयोगं प्रवदन्ति सन्तः ।
शिवे लयं नित्यगुणाभियुक्तं निर्बीजयोगं फलनिर्व्यपेक्षम् ॥ ६३ ॥

मूलोन्निद्रभुजङ्गराजसदृशीं यान्तीं सुषुम्नान्तरं
भित्त्वाधारसमूहमाशु विलसत्सौदामिनीसन्निभाम् ।
व्योमाम्भोजगतेन्दुमण्डलगलद्दिव्यामृतौघप्लुतां
सम्भाव्य स्वगृहं गतां पुनरिमां सञ्चिन्तयेत् कुण्डलीम् ॥ ६४ ॥
हंसं नित्यमनन्तमव्ययगुणं स्वाधारतो निर्गता
शक्तिः कुण्डलिनी समस्तजननी हस्ते गृहीत्वा च ताम् ।
जाता शम्भुनिकेतनं परसुखं तेनानुभूय स्वयं
यान्ती वा स्वयमर्ककोटिरुचिरा ध्येया जगन्मोहिनी ॥ ६५ ॥
अव्यक्तं परविन्दुसञ्चितरुचिं नीत्वा शिवस्यालयं
शक्तिः कुण्डलिनी गुणत्रयवपुर्विद्युल्लतासन्निभा ।
आनन्दामृतमध्यगं पुरभिदश्चन्द्रार्ककोटिप्रभं
संवीक्ष्य स्वपुरं गता भगवती ध्येयानवद्या गुणैः ॥ ६६ ॥

मध्ये वर्णसमीरणद्वयमिथः संघट्टसंक्षोभजं
शब्दस्तोममतीत्य तेजसि तडित्कोटिप्रभाभासुराम् ।
उद्यन्तीं समुपास्महे नवजवासिन्दूरसन्ध्यारुणां
सान्द्रानन्दसुधामयीं परशिवं प्राप्तां परां देवताम् ॥ ६७ ॥

गमनागमनेष्वजाङ्घ्रिका सा तनुयादयोगफलानि कुण्डली ।
मुदिताकुलकामधेनुरेषा भजतां काङ्क्षितकल्पवल्लरीम् ॥ ६८ ॥

आधारस्थितशक्तिविन्दुनिलयां नीवारसूकोपमां
नित्यानन्दमयीं गलत्परसुधावर्षैः प्रबोधप्रदैः ।
सिक्ता षट् सरसीरुहाणि विधिवत् कोदण्डमध्योदितां
ध्यायेद्भास्वरबन्धुजीवरुचिरां संविन्मयीं देवताम् ॥ ६९ ॥
हृत्पङ्केरुहभानुविम्बनिलयां विद्युल्लतामत्सरां
बालार्कारुणचेतसा भगवतीं निर्भर्त्सयन्तीं तमः ।
नादाख्यं पदमर्धचन्द्रकुटिलं सञ्चिन्मयं शाश्वतं
यान्तीमक्षररूपिणीं विमलधीर्ध्यायेद्विभुं तेजसाम् ॥ ७० ॥

भाले पूर्णनिशापतिः प्रति जटां नीहारहारः श्रियां
सिञ्चन्तीममृतेन देवममितेनानन्दयन्तस्तनुम् ।
वर्णानां जननीं तदीयवपुषा संप्राप्य विश्वस्थितां
ध्यायेत् सम्यगनाकुलेन मनसा सच्चिन्मयीमम्बिकाम् ॥ ७१ ॥
मूले भाले हृदि च विलसद्वर्णरूपा भवित्री
पीनोत्तुङ्गस्तनभरलसन्मध्यदेशा महेशी ।
चक्रे चक्रे गलितसुरया सिक्तगात्रा प्रकामं
दद्यादाद्या श्रियमविकलां वाङ्मयी देवता वः ॥ ७२ ॥
निजभवननिवासादुच्चरन्ती विलासम्
पथि पथि कमलानां चारुहासं विधाय ।
तरुणतरणिकान्तिः कुण्डली देवता सा
शिवसदनसुधाभिर्दीपयेदात्मतेजः ॥ ७३ ॥
आधारबन्धविसुखक्रियाभिः समुन्नता कुण्डलिनी सुधाभिः ।
त्रिधामबीजं शिवमर्चयन्ती शिवाङ्गना वः शिवमातनोतु ॥ ७४ ॥
सिन्दूरनिभमिन्दुकलावतंसमानन्दपूर्णनयनत्रयशोभिवक्त्रम् ।
आपीनतुङ्गकुचनम्रमनङ्गतन्त्रं शम्भोः कलत्रममितां श्रियमा-
तनोतु ॥ ७५ ॥
वर्णैरर्णवषड्दिशारविकलाचर्तुविभक्तैः क्रमात्
आद्यैः सादिभिरावृतान् चतयुतैः षट्चक्रमध्यादिमान् ।
डाकिन्यादिभिराश्रितान् परिवृतान् ब्रह्मादिभिर्देवतैः
भिन्नान् सा परदेवता त्रिजगतां चित्ते विधत्तां मुदम् ॥ ७६ ॥
आधाराद् गुणवृत्तशोभिततनुं लिङ्गत्रयीं सत्वरं
भिन्दन्तीं कमले विचिन्मयगतानन्दप्रबोधोद्भवाम् ।
तत्सुभ्य भुवमण्डलामृतकरप्रस्यन्दमानामृत-
स्रोतःकन्दनिभाममन्दतड़िताकारां शिवां भावयेत् ॥ ७७ ॥
आनन्दमूलमनिशं श्रुतिमौलिमृग्य-
मर्द्धेन्दुभूषणमधिष्ठितसर्वलोकम् ।
भक्तार्त्तिभञ्जनपरं पदमीश्वरस्य
दद्याच्छुभानि नियतं वपुरम्बिकायाः ॥ ७८ ॥
मञ्जुशिञ्जितमञ्जीरं वामाङ्घ्रं महेशितुः ।
आश्रयामि जगन्मूलं यन्मूलं वचसामपि ॥ ७९ ॥

स्थूलेन्द्रनीलरुचिरं कुचभारनम्रं
भास्वत्स्वभूषणगणैः परिभक्तशोभम् ।
विश्वैकमूलमनिशं श्रुतिमौलिमृग्य-
मर्द्धं महेशितुरखण्डितमाश्रयामि ॥ ८० ॥
दिक्कालादिविवर्जिते परशिवे चैतन्यमात्रात्मके
शून्ये कारणपञ्चकस्य विलयं नीते निरालम्बने ।
आत्मानं विनिवेश्य निश्चलधिया निर्लीनसर्वेन्द्रियो
योगी योगफलं प्रयाति सुलभं नित्योदितं निष्क्रियम् ॥८१॥
महाबलाय प्रणतोऽस्मि तस्मै संविश्लतालिङ्गितशीतलाय ।
येनार्पितं मुक्तिफलं विपक्वमाम्नायकं रम्यमुपाश्रितेभ्यः ॥८२॥
तस्मादभूदखिलदेशिकवीरचन्द्रः
षट्कर्मसागरविहारविनोदशीलः ।
यस्य त्रिलोकविदितं विजयाभिधान-
माचार्य्य पण्डित इति प्रथयन्ति सन्तः ॥ ८३ ॥
तन्नन्दनो देशिकदेशिकोऽभूच्छ्रीकृष्ण इत्यभ्युदितप्रभावः ।
यत्पादकारुण्यसुधाभिषेकाल्लक्ष्मी परां वितनुते च तृप्तिम् ॥८४
आचार्य्य विद्याविभवस्य तस्य जातः प्रभोर्लक्ष्मणदेशिकेन्द्रः ।
विद्यास्वशेषासु कलासु सर्वास्वपि प्रथां यो महतीं प्रपेदे ॥८५॥
आदाय सारमखिलं निखिलागमेभ्यः
श्रीसारदातिलकनाम चकार तन्त्रम् ।
प्राज्ञः स एव पटलैरिह तत्त्वसंख्यैः
प्रीतप्रदानविधये विदुषां चिराय ॥ ८६ ॥
अनाद्यन्ता शम्भोर्वपुषि कलितार्द्धेन वपुषा
जगद्रूपं शश्वत् सृजति महनीयामपि गिरम् ।
सदर्था शब्दार्थस्तनभरनता शङ्करवधू-
र्भवत्यूर्द्ध्वं भूयाद् भवजनितदुःखौघशमनी ॥ ८७ ॥
इति श्रीसारदातिलके पञ्चविंशतितमः पटलः समाप्तः ।

